प्राप्ते च दिवसे तस्मिन्सप्तमे द्विजसत्तमः।
काश्यपोऽभ्यागमद्विद्वांस्तं राजानं चिकित्सितुम्॥ १६६॥
तं ददर्श स नागेन्द्रस्तक्षकः काश्यपं पथि।
गच्छन्तमेकमनसं द्विजो भूत्वा वयोतिगः॥ १६७॥
तमब्रवीत्पन्नगेन्द्रः काश्यपं मुनिपुंगवम्।
क्व भवांस्त्वरितो याति किं च कार्यं चिकीर्षति॥ १६८॥

काश्यप– नृपं कुरुकुलोत्पन्नं परीक्षितमरिन्दमम्।
तक्षकः पन्नगश्रेष्ठस्तेजसाऽद्य प्रधक्ष्यति॥ १६९॥
तं दष्टं पन्नगेन्द्रेण तेनाग्निसमतेजसम्।
गच्छामि त्वरितं सौम्य सद्यः कर्तुमपज्वरम्॥ १७०॥

तक्षक– अहं स तक्षको ब्रह्मंस्तं धक्ष्यामि महीपतिम्।
(अ०४३) पर मन्त्रबलं यत्ते तद्दर्शय यतस्व च॥ १७१॥
न्यग्रोधमेनं धक्ष्यामि पश्यतस्ते द्विजोत्तम।
स वृक्षस्तेन दष्टस्तु पन्नगेन महात्मना॥ १७२॥
आशीविषविषोपेतः प्रजज्वाल समन्ततः।
ततः स भगवान्विद्वान्काश्यपो द्विजसत्तमः॥ १७३॥
भस्मराशीकृतं वृक्षं विद्यया समजीवयत्।
तं दृष्ट्वा जीवितं वृक्षं काश्यपेन महात्मना॥ १७४॥
उवाच तक्षको ब्रह्मन्नैतदत्यद्भुतं त्वयि।
द्विजेन्द्र यद्विषं हन्या मम वा मद्विधस्य वा॥ १७५॥
यत्तेऽभिलषितं प्राप्तुं फलं तस्मान्नृपोत्तमात्।
अहमेव प्रदास्यामि तत्ते यद्यपि दुर्लभम्॥ १७६॥
विप्रशापाभिभूते च क्षीणायुषि नराधिपे।
घटमानस्य ते विप्र सिद्धिः संशयिता भवेत्॥ १७७॥
तक्षकस्य वचः श्रुत्वा काश्यपो द्विजसत्तमः।
प्रदध्यौ सुमहातेजा राजानं प्रति बुद्धिमान्॥ १७८॥

दिव्यज्ञान' स तेजस्वी ज्ञात्वा त नृपतिं तदा।
क्षीणायुषं पाण्डवेयमपावर्तत काश्यप ॥ १७९ ॥
लब्ध्वा वित्तं मुनिवरस्तक्षकाद्यावदीप्सितम्।
निवृत्ते काश्यपे तस्मिन्समयेन महात्मनि ॥ १८० ॥
जगाम तक्षकस्तूर्णं नगरं गजसाह्वयम्।
ततस्तापसरूपेण प्राहिणोत्स भुजगमान् ॥ १८१ ॥
गच्छध्व यूयमव्यग्रा राजान कार्यवत्तया।
फलपुष्पोदक नाम प्रतिग्राहयितुं नृपम् ॥ १८२ ॥
ते तक्षकसमादिष्टास्तथा चक्रुर्भुजंगमा ।
उपनिन्युस्तथा राज्ञे दर्भानाप फलानि च ॥ १८३ ॥
तच्च सर्वं स राजेन्द्र प्रतिजग्राह वीर्यवान्।
गतेषु तेषु नागेषु तापसच्छद्मरूपिषु ॥ १८४ ॥
अमात्यान्सुहृदश्चैव प्रोवाच स नराधिप ।
भक्षयन्तु भवन्तो वै स्वादूनीमानि सर्वश ॥ १८५ ॥
तापसैरुपनीतानि फलानि सहिता मया।
विधिना सम्प्रयुक्तो वै ऋषिवाक्येन तेन तु ॥ १८६ ॥
यस्मिन्नेव फले नागस्तमेवाभक्षयत्स्वयम्।
ततो भक्षयतस्तस्य फलात्कृमिरभूदणु ॥ १८७ ॥
ह्रस्वक कृष्णनयनस्ताम्रवर्णोऽथ शौनक।
स त गृह्य नृपश्रेष्ठ सचिवानिदमब्रवीत् ॥ १८८ ॥
अस्तमभ्येति सविता विषादद्य न मे भयम्।
सत्यवागस्तु स मुनि कृमिर्मा दशतामयम् ॥ १८९ ॥
तक्षको नाम भूत्वा वै तथा परिहृत भवेत्।
एवमुक्त्वा स राजेन्द्रो ग्रीवायां सन्निवेश्य ह ॥ १९० ॥
कृमिक प्राहसत्तूर्णं मुमूर्षुर्नष्टचेतन ।
प्रहसन्नेव भोगेन तक्षकेण त्ववेष्ट्यत ॥ १९१ ॥

वेष्टयित्वा च वेगेन विनद्य च महास्वनम्।
अदशत्पृथिवीपालं तक्षकः पन्नगेश्वरः॥ १९२॥
(अ०४४) ते तथा मन्त्रिणो दृष्ट्वा भोगेन परिवेष्टितम्।
विषण्णवदनाः सर्वे रुरुदुर्भृशदुःखिताः॥ १९३॥
ततस्तु ते तद्गृहमग्निनावृतम्
प्रदीप्यमानं विषजेन भोगिनः।
भयात्परित्यज्य दिशः प्रपेदिरे
पपात राजाऽशनिताडितो यथा॥ १९४॥
नृपं शिशुं तस्य सुतं प्रचक्रिरे
समेत्य सर्वे पुरवासिनो जनाः।
नृपं यमाहुस्तममित्रघातिनं
कुरुप्रवीरं जनमेजयं जनाः॥ १९५॥

## सर्पसत्रम्

(अ०५१) ब्रह्मन्भरतशार्दूलो राजा पारीक्षितस्तदा।
पुरोहितमथाहूय ऋत्विजो वसुधाधिपः॥ १९६॥
अब्रवीद्वाक्यसंपन्नः कार्यसंपत्करं वचः।
यो मे हिंसितवांस्तातं तक्षकः स दुरात्मवान्॥ १९७॥
प्रतिकुर्यां तथा तस्य तद्भवन्तो ब्रुवन्तु मे।
अपि तत्कर्म विदितं भवतां येन पन्नगम्॥ १९८॥
तक्षकं संप्रदीप्तेऽग्नौ प्रक्षिपेयं सबान्धवम्।
यथा तेन पिता मह्यं पूर्वं दग्धो विषाग्निना॥ १९९॥
तथाऽहमपि तं पापं दग्धुमिच्छामि पन्नगम्।
ऋत्विजः- अस्ति राजन्महत्सत्रं त्वदर्थं देवनिर्मितम्॥ २००॥
सर्पसत्रमिति ख्यातं पुराणे परिपठ्यते।
एवमुक्तः स राजर्षिर्मेने दग्धं हि तक्षकम्॥ २०१॥

ततोऽब्रवीन्मन्त्रविदस्तान्राजा ब्राह्मणांस्तदा ।
आहरिष्यामि तत्सत्रं संभाराः संभ्रियंतु मे ॥ २०२ ॥
ततस्ते ऋत्विजस्तस्य शास्त्रतो द्विजसत्तम ।
तं देशं मापयामासुर्यज्ञायतनकारणात् ॥ २०३ ॥
प्रभूतधनधान्याढ्यमृत्विग्भिः सुनिषेवितम् ।
निर्माय चापि विधिवद्यज्ञायतनमीप्सितम् ॥ २०४ ॥
राजानं दीक्षयामासुः सर्पसत्राप्तये तदा ।
(अ०५२) ततः कर्म प्रववृते सर्पसत्रविधानतः ॥ २०५ ॥
पर्यक्रामंश्च विधिवत्स्वे स्वे कर्मणि याजकाः ।
प्रावृत्य कृष्णवासांसि धूम्रसंरक्तलोचनाः ॥ २०६ ॥
जुहुवुर्मन्त्रवच्चैव समिद्धं जातवेदसम् ।
ततः सर्पाः समापेतुः प्रदीप्ते हव्यवाहने ॥ २०७ ॥
विचेष्टमानाः कृपणमाह्वयन्तः परस्परम् ।
विस्फुरन्तः श्वसन्तश्च वेष्टयन्तः परस्परम् ॥ २०८ ॥
पुच्छैः शिरोभिश्च भृशं चित्रभानुं प्रपेदिरे ।
श्वेताः कृष्णाश्च नीलाश्च स्थविराः शिशवस्तथा ॥ २०९ ॥
नदन्तो विविधान्नादान्पेतुर्दीप्ते विभावसौ ।
एवं शतसहस्राणि प्रयुतान्यर्बुदानि च ॥ २१० ॥
अवशानि विनष्टानि पन्नगानां तु तत्र वै ।
(अ.५३) अजस्रं निपतत्स्वग्नौ नागेषु भृशदुःखितः ॥ २११ ॥
अल्पशेषपरीवारो वासुकिः पर्यतप्यत ।
कश्मलं चाविशद्घोरं वासुकिं पन्नगोत्तमम् ॥ २१२ ॥
स घूर्णमानहृदयो भगिनीमिदमब्रवीत् ।
अयं स कालः संप्राप्तो यदर्थमसि मे स्वसः ॥ २१३ ॥
जरत्कारो मया दत्ता त्रायस्वास्मान्सबान्धवान् ।
(अ.५४) तत आहूय पुत्रं स्वं जरत्कारुर्भुजंगमा ॥ २१४ ॥

वासुकेर्नागराजस्य वचनादिदमब्रवीत्।
अहं तव पितुः पुत्र भ्रात्रा दत्ता निमित्ततः ॥ २१५ ॥
कालः स चायं संप्राप्तस्तत् कुरुष्व यथातथम्।
आस्तीक– किं निमित्तं मम पितुर्दत्ता त्वं मातुलेन मे ॥ २१६ ॥
तन्ममाचक्ष्व तत्त्वेन श्रुत्वा कर्ताऽस्मि तत्तथा।
जरत्कारु– पन्नगानामशेषाणां माता कद्रूरिति श्रुता ॥ २१७ ॥
तया शप्ता रुषितया सुता यस्मान्निबोध तत्।
उच्चैःश्रवाः सोऽश्वराजो यन्मिथ्या न कृतो मम ॥ २१८ ॥
विनतार्थाय पणिते दासभावाय पुत्रकाः।
जनमेजयस्य वो यज्ञे धक्ष्यत्यनिलसारथिः ॥ २१९ ॥
तत्र पञ्चत्वमापन्नाः प्रेतलोकं गमिष्यथ।
तां च शप्तवतीं देवः साक्षाल्लोकपितामहः ॥ २२० ॥
एवमस्त्विति तद्वाक्यं प्रोवाचानुमुमोद च।
वासुकिश्चापि तच्छ्रुत्वा पितामहवचस्तदा ॥ २२१ ॥
अमृते मथिते तात देवाञ्छरणमीयिवान्।
सिद्धार्थाश्च सुराः सर्वे प्राप्यामृतमनुत्तमम् ॥ २२२ ॥
भ्रातरं मे पुरस्कृत्य पितामहमुपागमन्।
ते तं प्रसादयामासुः सुराः सर्वेऽब्जसंभवम् ॥ २२३ ॥
राज्ञा वासुकिना सार्धं शापोऽसौ न भवेदिति।
ब्रह्मा– जरत्कारुर्जरत्कारुं यां भार्यां समवाप्स्यति ॥ २२४ ॥
तत्र जातो द्विजः शापान्मोक्षयिष्यति पन्नगान्।
एतच्छ्रुत्वा तु वचनं वासुकिः पन्नगोत्तमः ॥ २२५ ॥
प्रादान्माममरप्रख्य तव पित्रे महात्मने।
एवमुक्तस्तथेत्युक्त्वा सास्तीको मातरं तदा ॥ २२६ ॥
अब्रवीद्दुःखसन्तप्तं वासुकिं जीवयन्निव।
अहं त्वां मोक्षयिष्यामि वासुके पन्नगोत्तम ॥ २२७ ॥

तस्माच्छापान्महासत्व सत्यमेतद्ब्रवीमि ते।
ततः स वासुकेर्घोरमपनीय मनोज्वरम् ॥ २२८ ॥
आधाय चात्मनोऽङ्गेषु जगाम त्वरितो भृशम्।
स गत्वाऽपश्यदास्तीको यज्ञायतनमुत्तमम् ॥ २२९ ॥
वृतं सदस्यैर्बहुभिः सूर्यवह्निसमप्रभैः ॥ २३० ॥

स प्राप्य यज्ञायतनं वरिष्ठं
द्विजोत्तमः पुण्यकृतां वरिष्ठः।
तुष्टाव राजानमनन्तकीर्ति-
मृत्विक्सदस्यांश्च तथैव चाग्निम् ॥ २३१ ॥

(अ०५५) सोमस्य यज्ञो वरुणस्य यज्ञः
प्रजापतेर्यज्ञ आसीत्प्रयागे।
तथा यज्ञोऽयं तव भारताग्र्य
पारीक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ २३२ ॥

ऋत्विक्समो नास्ति लोकेषु चैव
द्वैपायनेनेति विनिश्चितं मे।
एतस्य शिष्या हि क्षितिं संचरन्ति
सर्वर्त्विजः कर्मसु स्वेषु दक्षाः ॥ २३३ ॥

विभावसुश्चित्रभानुर्महात्मा हिरण्यरेता हुतभुक्कृष्णवर्त्मा।
प्रदक्षिणावर्तशिखः प्रदीप्तो हव्यं तवेदं हुतभुग्वष्टि देवः ॥२३४॥

शक्रः साक्षाद्वज्रपाणिर्यथेह
त्राता लोकेऽस्मिंस्त्वं तथेह प्रजानाम्।
मतस्त्वं नः पुरुषेन्द्रेह लोके
न च त्वदन्यो भूपतिरस्ति जने ॥ २३५ ॥

(अ०५६) बालोऽप्ययं स्थविर इवावभाषते
जनमेजय– नायं बालः स्थविरोऽयं मतो मे।

इच्छाम्यहं वरमस्मै प्रदातुं
तन्मे विप्राः संविदध्वं यथावत् ॥ २३६ ॥
यथा चेदं कर्म समाप्यते मे
यथा च वै तक्षक एति शीघ्रम्।
तथा भवन्तः प्रयतन्तु सर्वे
परं शक्त्या स हि मे विद्विषाणः ॥ २३७ ॥

ऋत्विजः– यथा शास्त्राणि नः प्राहुर्यथा शंसति पावकः।
इन्द्रस्य भवने राजंस्तक्षको भयपीडितः ॥ २३८ ॥

जनमेजय– इन्द्रस्य भवने विप्रा यदि नागः स तक्षकः।
तमिंद्रेणैव सहितं पातयध्वं विभावसौ ॥ २३९ ॥

जनमेजयेन राज्ञा तु नोदितस्तक्षकं प्रति।
होता जुहाव तत्रस्थं तक्षकं पन्नगं तथा ॥ २४० ॥
हूयमाने तथा चैव तक्षकः सपुरंदरः।
आकाशे ददृशे चैव क्षणेन व्यथितस्तदा ॥ २४१ ॥
पुरंदरस्तु तं यज्ञं दृष्ट्वोरुभयमाविशत्।
हित्वा तु तक्षकं त्रस्तः स्वमेव भवनं ययौ ॥ २४२ ॥
इन्द्रे गते तु राजेन्द्र तक्षको भयमोहितः।
मन्त्रशक्त्या पावकार्चिःसमीपमवशो गतः ॥ २४३ ॥

ऋत्विजः– वर्तते तव राजेन्द्र कर्मैतद्विधिवत्प्रभो।
अस्मै तु द्विजमुख्याय वरं त्वं दातुमर्हसि ॥ २४४ ॥

जनमेजय– बालाभिरूपस्य तवाप्रमेय
वरं प्रयच्छामि यथानुरूपम्।
वृणीष्व यत्तेऽभिमतं हृदि स्थितं
तत्ते प्रदास्याम्यपि चेददेयम् ॥ २४५ ॥

आस्तीक– वरं ददासि चेन्मह्यं वृणोमि जनमेजय।
सत्रं ते विरमत्वेतन्न पतेयुरिहोरगाः ॥ २४६ ॥

तलो वेदविदस्तात सदस्याः सर्व एव तम्।
राजानमूचुः सहिता लभतां ब्राह्मणो वरम् ॥ २४७ ॥
(अ.५८) ततो राजाऽब्रवीद्वाक्यं सदस्यैश्चोदितो भृशम्।
काममेतद्भवत्वेवं यथास्तीकस्य भाषितम् ॥ २४८ ॥
समाप्यतामिदं कर्म पन्नगाः सन्त्वनामयाः।
ततो हलहलाशब्दः प्रीतिदः समजायत ॥ २४९ ॥
आस्तीकस्य वरे दत्ते तथैवोपरराम च।
स यज्ञः पाण्डवेयस्य राज्ञः पारीक्षितस्य ह ॥ २५० ॥
प्रीतिमांश्चाभवद्राजा भारतो जनमेजयः।
ततश्चकारावभृथं विधिदृष्टेन कर्मणा ॥ २५१ ॥
आस्तीकं प्रेषयामास गृहानेव सुसंस्कृतम्।

### सर्पसत्रे व्यासस्य भारतकथनार्थं वैशम्पायनाय आदेशः

(अ.६०) श्रुत्वा तु सर्पसत्राय दीक्षितं जनमेजयम् ॥ २५२ ॥
अभ्यगच्छदृषिर्विद्वान्कृष्णद्वैपायनस्तदा।
जनमेजयस्तु राजर्षिर्दृष्ट्वा तमृषिमागतम् ॥ २५३ ॥
सगणोऽभ्युद्ययौ तूर्णं प्रीत्या भरतसत्तमः।
काञ्चनं विष्टरं तस्मै सदस्यानुमतः प्रभुः ॥ २५४ ॥
आसनं कल्पयामास यथा शक्रो बृहस्पतेः।
तत्रोपविष्टं वरदं देवर्षिगणपूजितम् ॥ २५५ ॥
पूजयामास राजेन्द्रः शास्त्रदृष्टेन कर्मणा।
ततस्तु सहितः सर्वैः सदस्यैर्जनमेजयः ॥ २५६ ॥
इदं पश्चाद्द्विजश्रेष्ठं पर्यपृच्छत्कृताञ्जलिः।
कुरूणां पाण्डवानां च भवान्प्रत्यक्षदर्शिवान् ॥ २५७ ॥
तेषां चरितमिच्छामि कथ्यमानं त्वया द्विज।
कथं समभवद्भेदस्तेषामक्लिष्टकर्मणाम् ॥ २५८ ॥

तच्च युद्धं कथं वृत्तं भूतान्तकरणं महत्।
तस्य तद्वचनं श्रुत्वा कृष्णद्वैपायनस्तदा ॥ २५९ ॥
शशास शिष्यमासीनं वैशंपायनमन्तिके।
कुरूणां पाण्डवानां च यथा भेदोऽभवत्पुरा ॥ २६० ॥
तदस्मै सर्वमाचक्ष्व यन्मत्तः श्रुतवानसि।
गुरोर्वचनमाज्ञाय स तु विप्रर्षभस्तदा ॥ २६१ ॥
आचचक्षे ततः सर्वमितिहासं पुरातनम्।

### वैशम्पायनकृतः भारतकथारम्भः

(अ.११) गुरवे प्राङ्नमस्कृत्य मनोबुद्धिसमाधिभिः ॥ २६२ ॥
वैशम्पायन- संपूज्य च द्विजान्सर्वास्तथान्यान्विदुषो जनान्।
महर्षेर्विश्रुतस्येह सर्वलोकेषु धीमतः ॥ २६३ ॥
प्रवक्ष्यामि मतं कृत्स्नं व्यासस्यास्य महात्मनः।
(अ.१२) यथा समुद्रो भगवान्यथा मेरुर्महागिरिः ॥ २६४ ॥
उभौ ख्यातौ रत्ननिधी तथा भारतमुच्यते।
त्रिभिर्वर्षैः सदोत्थायी कृष्णद्वैपायनो मुनिः ॥ २६५ ॥
महाभारतमाख्यानं कृतवानिदमद्भुतम्।
धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ॥ २६६ ॥
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्।

### सत्यवतीजन्म, व्यासप्रादुर्भावश्च

(अ.१३) राजोपरिचरो नाम धर्मनित्यो महीपतिः ॥ २६७ ॥
बभूव मृगयां गन्तुं सदा किल धृतव्रतः।
तस्य रेतः प्रचस्कंद चरतो गहने वने ॥ २६८ ॥
अभिमन्त्र्याथ तच्छुक्रमारात्तिष्ठन्तमाशुगम्।
सूक्ष्मधर्मार्थतत्त्वज्ञो गत्वा श्येनं ततोऽब्रवीत् ॥ २६९ ॥

मत्प्रियार्थमिदं सौम्य शुक्रं मम गृहं नय।
गृहीत्वातत्तदा श्येनस्तूर्णमुत्पत्य वेगवान् ॥ २७० ॥
जवं परममापन्नः प्रदुद्राव विहंगमः।
तत्राद्रिकेति विख्याता ब्रह्मशापाद्वराप्सराः ॥ २७१ ॥
मीनभावमनुप्राप्ता बभूव यमुनाचरी।
श्येनपादपरिभ्रष्टं तद्वीर्यमथ वासवम् ॥ २७२ ॥
जग्राह तरसोपेत्य साद्रिका मत्स्यरूपिणी।
कदाचिदपि मत्सीं तां बबंधुर्मत्स्यजीविनः ॥ २७३ ॥
मासे च दशमे प्राप्ते तदा भरतसत्तम।
उज्जह्रुरुदरात्तस्याः स्त्रीं पुमांसं च मानुषम् ॥ २७४ ॥
आश्चर्यभूत तद्गत्वा राज्ञेऽथ प्रत्यवेदयन्।
तयोः पुमांसं जग्राह राजोपरिचरस्तदा ॥ २७५ ॥
स मत्स्यो नाम राजाऽसीद्धार्मिकः सत्यसंगरः।
सा कन्या दुहिता तस्या मत्स्या मत्स्यसगन्धिनी ॥ २७६ ॥
राज्ञा दत्ता च दाशाय कन्येय ते भवत्विति।
शुश्रूषार्थं पितुर्नावं वाहयन्तीं जले च ताम् ॥ २७७ ॥
तीर्थयात्रां परिक्रामन्नपश्यद्वै पराशरः।
दृष्ट्वैव स च तां धीमांश्चकमे चारुहासिनीम् ॥ २७८ ॥
संगमं मम कल्याणि कुरुष्वेत्यभ्यभाषत।
साऽब्रवीत्पश्य भगवन्पारावारे स्थितानृषीन् ॥ २७९ ॥
आवयोर्दृश्ययोरेभिः कथं तु स्यात्समागमः।
एवं तयोक्तो भगवान्नीहारमसृजत्प्रभुः ॥ २८० ॥
येन देशः स सर्वस्तु तमोभूत इवाऽभवत्।
सत्यवती– विद्धि मां भगवन्कन्यां सदा पितृवशानुगाम् ॥ २८१ ॥
त्वत्संयोगाच्च दुष्येत कन्याभावो ममानघ।
एतत्संचिन्त्य भगवन्विधत्स्व यदनन्तरम् ॥ २८२ ॥

एवमुक्तवती तां तु प्रीतिमानृषिसत्तमः।
उवाच मत्प्रियं कृत्वा कन्यैव त्वं भविष्यसि ॥ २८३ ॥
वृणीष्व च वरं भीरु यं त्वमिच्छसि भाविनि।
एवमुक्ता वरं वव्रे गात्रसौगन्ध्यमुत्तमम् ॥ २८४ ॥
ततो लब्धवरा प्रीता स्त्रीभावगुणभूषिता।
जगाम सह संसर्गमृषिणाऽद्भुतकर्मणा ॥ २८५ ॥
पराशरेण संयुक्ता सद्यो गर्भं सुषाव सा।
जज्ञे च यमुनाद्वीपे पाराशर्यः स वीर्यवान् ॥ २८६ ॥
न्यस्तो द्वीपे स यद्बालस्तस्माद्द्वैपायनः स्मृतः।
विव्यास वेदान्यस्मात्स तस्माद्व्यास इति स्मृतः ॥ २८७ ॥

## महाभिषाख्यानम्

(अ०९६) इक्ष्वाकुवंशप्रभवो राजासीत्पृथिवीपतिः।
महाभिष इति ख्यातः सत्यवाक्सत्यविक्रमः ॥ २८८ ॥
सोऽश्वमेधसहस्रेण राजसूयशतेन च।
तोषयामास देवेशं स्वर्गं लेभे ततः प्रभुः ॥ २८९ ॥
ततः कदाचिद्ब्रह्माणमुपासांचक्रिरे सुराः।
तत्र राजर्षयो ह्यासन्स च राजा महाभिषः ॥ २९० ॥
अथ गंगा सरिच्छ्रेष्ठा समुपायात्पितामहम्।
तस्या वासः समुद्धूतं मारुतेन शशिप्रभम् ॥ २९१ ॥
ततोऽभवन्सुरगणाः सहसाऽवाङ्मुखास्तदा।
महाभिषस्तु राजर्षिरशङ्को दृष्टवान्नदीम् ॥ २९२ ॥
सोऽपध्यातो भगवता ब्रह्मणा तु महाभिषः।
उक्तश्च जातो मर्त्येषु पुनर्लोकानवाप्स्यसि ॥ २९३ ॥
ययाहृतमनाश्चासि गंगया त्वं हि दुर्मते।
सा ते वै मानुषे लोके विप्रियाण्याचरिष्यति ॥ २९४ ॥

स चिन्तयित्वा नृपतिर्नृपानन्यांस्तपोधनान्।
प्रतीपं रोचयामास पितरं भूरितेजसम् ॥ २९५ ॥
महाभिषं तु तं दृष्ट्वा नदी धैर्याच्च्युतं नृपम्।
तमेव मनसाध्यायन्त्युपावर्तत्सरिद्वरा ॥ २९६ ॥
सा तु विध्वस्तवपुषः कश्मलाभिहतान्नृप।
ददर्श पथि गच्छन्ती वसून्देवान्दिवौकसः ॥ २९७ ॥
तथारूपांश्च तान्दृष्ट्वा पप्रच्छ सरितां वरा।
किमिदं नष्टरूपाः स्थ कच्चित्क्षेमं दिवौकसाम् ॥ २९८ ॥
तामुचुर्वसवो देवाः शप्ताः स्मो वै महानदि।
सन्ध्यां वसिष्ठमासीनं तमत्यभिसृताः पुरा ॥ २९९ ॥
तेन कोपाद्वयं शप्ता योनौ संभवतेति ह।
न तच्छक्यं निवर्तयितु यदुक्तं ब्रह्मवादिना ॥ ३०० ॥
त्वमस्मान्मानुषी भूत्वा सृज पुत्रान्वसून्भुवि।
न मानुषीणां जठरं प्रविशेम वयं शुभे ॥ ३०१ ॥
इत्युक्ता तैश्च वसुभिस्तथेत्युक्त्वाऽब्रवीदिदम्।
मर्त्येषु पुरुषश्रेष्ठः को वः कर्ता भविष्यति ॥ ३०२ ॥

वसवः– प्रतीपस्य सुतो राजा शान्तनुर्लोकविश्रुतः।
भविता मानुषे लोके स नः कर्ता भविष्यति ॥ ३०३ ॥
जातान्कुमारान्स्वानप्सु प्रक्षेप्तुं वै त्वमर्हसि।
यथा न चिरकालं नो निष्कृतिः स्यात्त्रिलोकगे ॥ ३०४ ॥

गङ्गा– एवमेतत्करिष्यामि पुत्रस्तस्य विधीयताम्।
नास्य मोघः संगमः स्यात्पुत्रहेतोर्मया सह ॥ ३०५ ॥

वसवः– तुरीयार्धं प्रदास्यामो वीर्यस्यैकैकशो वयम्।
तेन वीर्येण पुत्रस्ते भविता तस्य चेप्सितः ॥ ३०६ ॥
न संपत्स्यति मर्त्येषु पुनस्तस्य तु संततिः।
तस्मादपुत्रः पुत्रस्ते भविष्यति स वीर्यवान् ॥ ३०७ ॥

एवं ते समयं कृत्वा गगया वसव सह।
जग्मु• संहृष्टमनसो यथासंकल्पमञ्जसा ॥ ३०८ ॥

## शान्तनुजन्म

(अ.९७) एतस्मिन्नेव काले तु प्रतीप• क्षत्रियर्षभ•।
तपस्तेपे सुतस्यार्थे सभार्य• कुरुनन्दन ॥ ३०९ ॥
तयो समभवत्पुत्रो वृद्धयो• स महाभिप•।
शान्तस्य जज्ञे संतानस्तस्मादासीत्स शान्तनु• ॥ ३१० ॥
स राजा शान्तनुर्धीमान्देवराजसमद्युति ।
बभूव मृगयाशील सतत वनगोचर• ॥ ३११ ॥
स मृगान्महिषांश्चैव विनिघ्नन्राजसत्तम ।
गगामनुचचारैक सिद्धचारणसेविताम् ॥ ३१२ ॥
स कदाचिन्महाराज ददर्श परमां स्त्रियम्।
जाज्वल्यमाना वपुषा साक्षाच्छ्रियमिवापराम् ॥ ३१३ ॥
तामुवाच ततो राजा सान्त्वयन् श्लक्ष्णया गिरा।
याचे त्वा सुरगर्भासि भार्या मे भव शोभने ॥ ३१४ ॥

## गाङ्गेयजन्म

(अ.९८) एतच्छ्रुत्वा वचो राज्ञ सस्मितं मृदु वल्गु च।
उवाच चैव राज्ञ• सा ल्हादयन्ती मनो गिरा ॥ ३१५ ॥
भविष्यामि महीपाल महिषी ते वशानुगा।
यत्तु कुर्यामह राजन् शुभ वा यदि वाऽशुभम् ॥ ३१६ ॥
न तद्वारयितव्याऽस्मि न वक्तव्या तथाऽप्रियम्।
तथेति सा यदा तृक्ता तदा भरतसत्तम ॥ ३१७ ॥
प्रहर्षमतुलं लेभे प्राप्य त पार्थिवोत्तमम्।
आसाद्य शान्तनुस्तां च बुभुजे कामतो वशी ॥ ३१८ ॥

रममाणस्तया सार्धं यथाकामं नरेश्वर. ।
अष्टावजनयत्पुत्रास्तस्याममरसंनिभान् ॥ ३१९ ॥
जात जातं च सा पुत्र क्षिपत्यम्भसि भारत ।
न च तां किंचनोवाच त्यागाद्भीतो महीपति. ॥ ३२० ॥
अथैनामष्टमे पुत्रे जाते प्रहसतीमिव ।
उवाच राजा दुःखार्त. परीप्सन्पुत्रमात्मन. ॥ ३२१ ॥
मा वधी कस्य काऽसीति किं हिनस्सि सुतानिति ।
पुत्रघ्नि सुमहत्पापं सम्प्राप्त ते सुगर्हितम् ॥ ३२२ ॥
स्त्री- पुत्रकाम न ते हन्मि पुत्र पुत्रवता वर ।
जीर्णस्तु मम वासोऽय यथा स समय. कृत. ॥ ३२३ ॥
अह गगा जन्हुसुता महर्षिगणसेविता ।
देवकार्यार्थसिद्ध्यर्थमुषिताऽह त्वया सह ॥ ३२४ ॥
इमेऽष्टौ वसवो देवा महाभागा महौजस ।
वसिष्ठशापदोषेण मानुषत्वमुपागता ॥ ३२५ ॥
तेषां जनयिता नान्यस्त्वदृते भुवि विद्यते ।
मद्विधा मानुषी धात्री लोकेनास्तीह काचन ॥ ३२६ ॥
तस्मात्तज्जननीहेतोर्मानुषत्वमुपागता ।
देवानां समयस्त्वेष वसूनां सश्रुतो मया ॥ ३२७ ॥
जातं जात मोक्षयिष्ये जन्मतो मानुषादिति ।
एष पर्यायवासो मे वसूनां सन्निधौ कृत ॥ ३२८ ॥
"(अ०९९) एतदाख्याय सा देवी तत्रैवान्तरधीयत ।
आदाय च कुमार त जगामाथ यथेप्सितम् ॥ ३२९ ॥
शान्तनुश्चापि शोकार्तो जगाम स्वपुरं तत ।

## गाङ्गेयस्य भीष्मत्वम्

"(अ०१००) स कदाचिन्मृग विद्ध्वा गगामनुसरन्नदीम् ॥ ३३० ॥

भागीरथीमल्पजलां शान्तनुर्दृष्टवान्नृपः।
ततो निमित्तमन्विच्छन्ददर्श स महामनाः ॥ ३३१ ॥
कुमारं रूपसंपन्नं बृहन्तं चारुदर्शनम्।
कृत्स्नां गंगां समावृत्य शरैस्तीक्ष्णैरवस्थितम् ॥ ३३२ ॥
जातमात्रं पुरा दृष्ट्वा तं पुत्रं शान्तनुस्तदा।
नोपलेभे स्मृतिं धीमानभिज्ञातुं तमात्मजम् ॥ ३३३ ॥
स तु तं पितरं दृष्ट्वा मोहयामास मायया।
संमोह्य तु ततः क्षिप्रं तत्रैवान्तरधीयत ॥ ३३४ ॥
तदद्भुतं ततो दृष्ट्वा तत्र राजा स शान्तनुः।
शंकमानः सुतं गंगामब्रवीद्दर्शयेति ह ॥ ३३५ ॥
दर्शयामास तं गङ्गा बिभ्रती रूपमुत्तमम्।
गृहीत्वा दक्षिणे पाणौ तं कुमारमलंकृतम् ॥ ३३६ ॥

गङ्गा– यं पुत्रमष्टमं राजंस्त्वं पुरा मय्यविन्दथाः।
स चायं पुरुषव्याघ्र सर्वास्त्रविदनुत्तमः ॥ ३३७ ॥
महेष्वासमिमं राजन्राजधर्मार्थकोविदम्।
मया दत्तं निजं पुत्रं वीरं वीर गृहं नय ॥ ३३८ ॥
तयैवं समनुज्ञातः पुत्रमादाय शान्तनुः।
भ्राजमानं यथादित्यमाययौ स्वपुरं प्रति ॥ ३३९ ॥
पौरवेषु ततः पुत्रं राज्यार्थमभयप्रदम्।
गुणवन्तं महात्मानं यौवराज्येऽभ्यषेचयत् ॥ ३४० ॥
स कदाचिद्वनं यातो यमुनामभितो नदीम्।
महीपतिरनिर्देश्यमाजिघ्रद्गन्धमुत्तमम् ॥ ३४१ ॥
तस्य प्रभवमन्विच्छन्विचचार समन्ततः।
स ददर्श तदा कन्यां दाशानां देवरूपिणीम् ॥ ३४२ ॥
तामपृच्छत्स दृष्ट्वैव कन्यामसितलोचनाम्।
कस्य त्वमसि का चासि किं च भीरु चिकीर्षसि ॥ ३४३ ॥

साऽब्रवीद्दाशकन्याऽस्मि धर्मार्थं वाहये तरिम्।
समीक्ष्य राजा दाशेयीं कामयामास शान्तनुः ॥ ३४४ ॥
स गत्वा पितरं तस्या वरयामास तां तदा।
स च तं प्रत्युवाचेदं दाशराजो महीपतिम् ॥ ३४५ ॥
हृदि कामस्तु मे कश्चित्तं निबोध जनेश्वर।
अस्यां जायेत यः पुत्रः स राजा पृथिवीपते ॥ ३४६ ॥
त्वदूर्ध्वमभिषेक्तव्यो नान्यः कश्चन पार्थिव।
नाकामयत तं दातुं वरं दाशाय शान्तनुः ॥ ३४७ ॥
शरीरजेन तीव्रेण दह्यमानोऽपि भारत।
स चिन्तयन्नेव तदा दाशकन्यां महीपतिः ॥ ३४८ ॥
प्रत्ययाद्धास्तिनपुरं कामोपहतचेतनः।
ततः कदाचिच्छोचन्तं शान्तनुं ध्यानमास्थितम् ॥ ३४९ ॥
पुत्रो देवव्रतोऽभ्येत्य पितरं वाक्यमब्रवीत्।
व्याधिमिच्छामि ते ज्ञातुं प्रतिकुर्यां हि तत्र वै ॥ ३५० ॥
एवमुक्तः स पुत्रेण शान्तनुः प्रत्यभाषत।
अनपत्यतैकपुत्रत्वमित्याहुर्धर्मवादिनः ॥ ३५१ ॥
त्वं च शूरः सदामर्षी शस्त्रनित्यश्च भारत।
सोऽस्मि संशयमापन्नस्त्वयि शान्ते कथं भवेत् ॥ ३५२ ॥
ततस्तत्कारणं राज्ञो ज्ञात्वा सर्वमशेषतः।
देवव्रतो महाबुद्धिः प्रज्ञया चान्वचिन्तयत् ॥ ३५३ ॥
ततो देवव्रतो वृद्धैः क्षत्रियैः सहितस्तदा।
अभिगम्य दाशराजं कन्यां वव्रे पितुः स्वयम् ॥ ३५४ ॥
तं दाशः प्रतिजग्राह विधिवत्प्रतिपूज्य च।
अब्रवीच्चैनमासीनं राजसंसदि भारत ॥ ३५५ ॥
बलवत्सपत्नतामत्र दोषं पश्यामि केवलम्।
यस्य हि त्वं सपत्नः स्या गन्धर्वस्यासुरस्य वा ॥ ३५६ ॥

न स जातु चिरं जीवेत्त्वयि क्रुद्धे परंतप।
एवमुक्तस्तु गांगेयस्तद्युक्तं प्रत्यभाषत ॥ ३५७ ॥
योऽस्यां जनिष्यते पुत्रः स नो राजा भविष्यति।
इत्युक्तः पुनरेवाथ तं दाशः प्रत्यभाषत ॥ ३५८ ॥
त्वापत्यं भवेयत्तु तत्र नः संशयो महान्।
तस्यैतन्मतमाज्ञाय सत्यधर्मपरायणः ॥ ३५९ ॥
प्रत्यजानात्तदा राजन्पितुः प्रियचिकीर्षया।
अद्यप्रभृति मे दाश ब्रह्मचर्यं भविष्यति ॥ ३६० ॥
अपुत्रस्यापि मे लोका भविष्यन्त्यक्षया दिवि।
तस्य तद्वचनं श्रुत्वा संप्रहृष्टतनूरुहः ॥ ३६१ ॥
ददानीत्येव तं दाशो धर्मात्मा प्रत्यभाषत।
ततोऽन्तरिक्षेऽप्सरसो देवाः सर्षिगणास्तदा ॥ ३६२ ॥
अभ्यवर्षन्त कुसुमैर्भीष्मोऽयमिति चाब्रुवन्।
ततः स पितुरर्थाय तामुवाच यशस्विनीम् ॥ ३६३ ॥
अधिरोह रथं मातर्गच्छावः स्वगृहानिति।
एवमुक्त्वा तु भीष्मस्तां रथमारोप्य भाविनीम् ॥ ३६४ ॥
आगम्य हास्तिनपुरं शान्तनोः संन्यवेदयत्।
तच्छ्रुत्वा दुष्करं कर्म कृतं भीष्मेण शान्तनुः ॥ ३६५ ॥
स्वच्छन्दमरणं तुष्टो ददौ तस्मै महात्मने।

### सत्यवतीपुत्रजन्म, शान्तनुचित्राङ्गदयोर्निधनम्

(अ.१०१) ततः शान्तनवो धीमान्सत्यवत्यामजायत ॥ ३६६ ॥
वीरश्चित्रांगदो नाम वीर्यवान्पुरुषेश्वरः।
अथापरं महेष्वासं सत्यवत्यां सुतं प्रभुः ॥ ३६७ ॥
विचित्रवीर्यं राजानं जनयामास वीर्यवान्।
अप्राप्तवति तस्मिंस्तु यौवनं पुरुषर्षभे ॥ ३६८ ॥

स राजा शान्तनुर्धीमान्कालधर्ममुपेयिवान्।
स्वर्गते शान्तनौ भीष्मश्चित्राङ्गदमरिंदमम्॥ ३६९॥
स्थापयामास वै राज्ये सत्यवत्या मते स्थितः।
स तु चित्राङ्गदः शौर्यात्सर्वांश्चिक्षेप पार्थिवान्॥ ३७०॥
तं क्षिपन्तं सुरांश्चैव मनुष्यानसुरांस्तथा।
गन्धर्वराजो बलवांस्तुल्यनामाऽभ्ययात्तदा॥३७१॥
तेनास्य सुमहद्युद्धं कुरुक्षेत्रे बभूव ह।
मायाधिकोऽवधीद्वीरं गन्धर्वः कुरुसत्तमम्॥ ३७२॥
तस्मिन्पुरुषशार्दूले निहते भूरितेजसि।
भीष्मः शान्तनवो राजा प्रेतकार्याण्यकारयत्॥ ३७३॥
विचित्रवीर्यं च तदा बालमप्राप्तयौवनम्।
कुरुराज्ये महाबाहुरभ्यषिंचदनन्तरम्॥ ३७४॥

## भीष्मकृतं काशिराजकन्याहरणम् ; विचित्रवीर्यस्य विवाहः निधनं च

(अ.१०२) संप्राप्तयौवनं दृष्ट्वा भ्रातरं धीमतां वरः।
भीष्मो विचित्रवीर्यस्य विवाहायाकरोन्मतिम्॥ ३७५॥
अथ काशिपतेर्भीष्म॰ कन्यास्तिस्रोऽप्सरोपमाः।
शुश्राव सहिता राजन्वृण्वाना वै स्वयंवरम्॥ ३७६॥
तत॰ स रथिनां श्रेष्ठो रथेनैकेन शत्रुजित्।
जगामानुमते मातुः पुरीं वाराणसीं प्रभुः॥ ३७७॥
उवाच च महीपालान्राजञ्जलदनिस्वनः।
रथमारोप्य ताः कन्या भीष्मः प्रहरतां वरः॥ ३७८॥
आहूय दानं कन्यानां गुणवद्भ्यः स्मृतं बुधैः।
प्रमथ्य तु हृतामाहुर्ज्यायसीं धर्मवादिनः॥ ३७९॥

स इमाः पृथिवीपाला जिहीर्षामि बलादितः।
ते यतध्वं परं शक्त्या विजयायेतराय वा ॥ ३८० ॥
ततः समभवद्युद्धं तेषां तस्य च भारत।
तान्विनिर्जित्य तु रणे सर्वशस्त्रभृतां वरः ॥ ३८१ ॥
कन्याभिः सहितः प्रायाद्भारतो भारतान्प्रति।
ताः सर्वगुणसंपन्ना भ्राता भ्रात्रे यवीयसे ॥ ३८२ ॥
भीष्मो विचित्रवीर्याय प्रददौ विक्रमाहृताः।
ज्येष्ठा तासामिदं वाक्यमब्रवीद्धसती तदा ॥ ३८३ ॥
मया वरयितव्योऽभूच्छाल्वस्तस्मिन्स्वयंवरे।
एवमुक्तस्तया भीष्मो कन्यया विप्रसंसदि ॥ ३८४ ॥
अनुजज्ञे तदा ज्येष्ठामम्बां काशिपतेः सुताम्।
अम्बिकाम्बालिके भार्ये प्रादाद्भ्रात्रे यवीयसे ॥ ३८५ ॥
ताभ्यां सह समाः सप्त विहरन्पृथिवीपतिः।
विचित्रवीर्यस्तरुणो यक्ष्मणा समगृह्यत ॥ ३८६ ॥
सुहृदां यतमानानामाप्तैः सह चिकित्सकैः।
जगामास्तमिवादित्यः कौरव्यो यमसादनम् ॥ ३८७ ॥

### विचित्रवीर्यभार्यासु व्यासकृतं पुत्रोत्पादनम्

(अ.१०३) ततः सत्यवती दीना कृपणा पुत्रगृद्धिनी।
(अ.१०५) कृष्णद्वैपायनं काली चिन्तयामास वै मुनिम् ॥ ३८८ ॥
स वेदान्विब्रुवन्धीमान्मातुर्विज्ञाय चिन्तितम्।
प्रादुर्बभूवाविदितः क्षणेन कुरुनंदन ॥ ३८९ ॥
सत्यवत्यथ वीक्ष्यैनमुवाचेदमनंतरम्।
यवीयसस्तव भ्रातुर्भार्ये सुरसुतोपमे।
तयोरुत्पादयापत्यं समर्थो ह्यसि पुत्रक ॥ ३९० ॥
(अ.९५) स तथेत्युक्त्वा त्रीन्पुत्रानुत्पादयामास
धृतराष्ट्रं पाण्डुं विदुरं चेति ॥ ३९१ ॥

## पाण्डो राज्यप्राप्तिः; धृतराष्ट्रगान्धारीविवाहः

(अ.१०९) धृतराष्ट्रस्त्वचक्षुष्ट्वाद्राज्यं न प्रत्यपद्यत।
पारसवत्वाद्विदुरो राजा पाण्डुर्बभूव ह ॥ ३९२ ॥

(अ.११०) आराध्य वरदं देवं भगनेत्रहरं हरम्।
गान्धारी किल पुत्राणां शतं लेभे वरं शुभा ॥ ३९३ ॥
इति शुश्राव तत्त्वेन भीष्मः कुरुपितामहः।
ततो गान्धारराजस्य प्रेषयामास भारत ॥ ३९४ ॥
अचक्षुरिति तत्रासीत्सुबलस्य विचारणा।
कुलं ख्यातिं च वृत्तं च बुद्ध्या तु प्रसमीक्ष्य सः ॥ ३९५ ॥
ददौ तां धृतराष्ट्राय गान्धारीं धर्मचारिणीम्।
गान्धारी त्वथ शुश्राव धृतराष्ट्रमचक्षुषम् ॥ ३९६ ॥
आत्मानं दित्सितं चास्मै पित्रा मात्रा च भारत।
ततः सा पट्टमादाय कृत्वा बहुगुणं तदा ॥ ३९७ ॥
बबन्ध नेत्रे स्वे राजन्पतिव्रतपरायणा।
नाभ्यसूयां पतिमहमित्येवं कृतनिश्चया ॥ ३९८ ॥
ततो गान्धारराजस्य पुत्रः शकुनिरभ्ययात्।
स्वसारं वयसा लक्ष्म्या युक्तामादाय कौरवान् ॥ ३९९ ॥
तां तदा धृतराष्ट्राय ददौ परमसत्कृताम्।
भीष्मस्यानुमते चैव विवाहं समकारयत् ॥ ४०० ॥

## कर्णजन्मकथा

(अ.१११) शूरो नाम यदुश्रेष्ठो वसुदेवपिताऽभवत्।
तस्य कन्या पृथा नाम रूपेणाप्रतिमा भुवि ॥ ४०१ ॥
पितृष्वस्रीयाय स तामनपत्याय भारत।
अग्र्यमग्रे प्रतिज्ञाय स्वस्यापत्यं स सत्यवाक् ॥ ४०२ ॥

अग्रजामथ तां कन्यां शूरोऽनुग्रहकांक्षिणे।
प्रददौ कुन्तिभोजाय सखा सख्ये महात्मने ॥ ४०३ ॥
नियुक्ता सा पितुर्गेहे ब्राह्मणातिथिपूजने।
उग्रं पर्यचरत्तत्र ब्राह्मणं संशितव्रतम् ॥ ४०४ ॥
निगूढनिश्चयं धर्मे यं तं दुर्वाससं विदुः।
तमुग्रं संशितात्मानं सर्वयत्नैरतोषयत् ॥ ४०५ ॥
तस्यै स प्रददौ मन्त्रमापद्धर्मान्ववेक्षया।
अभिचाराभिसंयुक्तमब्रवीच्चैव तां मुनिः ॥ ४०६ ॥
यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि।
तस्य तस्य प्रभावेण तव पुत्रो भविष्यति ॥ ४०७ ॥
तथोक्ता सा तु विप्रेण कुन्ती कौतूहलान्विता।
कन्या सती देवमर्कमाजुहाव यशस्विनी ॥ ४०८ ॥
तां समासाद्य देवस्तु विवस्वानिदमब्रवीत्।
अयमस्म्यसितापाङ्गि ब्रूहि किं करवाणि ते ॥ ४०९ ॥

कुन्ती– कश्चिन्मे ब्राह्मणः प्रादाद्वरं विद्यां च शत्रुहन्।
तद्विजिज्ञासयाह्वानं कृतवत्यस्मि ते विभो ॥ ४१० ॥
एतस्मिन्नपराधे त्वा शिरसाऽहं प्रसादये।
योषितो हि सदा रक्ष्याः स्वापराद्धाऽपि नित्यशः ॥ ४११ ॥

सूर्य– वेदाऽहं सर्वमेवैतद्यद्दुर्वासा वरं ददौ।
संत्यज्य भयमेवेह क्रियतां संगमो मम ॥ ४१२ ॥
अमोघं दर्शनं मह्यमाहूतश्चास्मि ते शुभे।
वृथाह्वानेऽपि ते भीरु दोषः स्यान्नात्र संशयः ॥ ४१३ ॥
एवमुक्त्वा स भगवान्कुन्तिराजसुतां तदा।
प्रकाशकर्ता तपनः संबभूव तया सह ॥ ४१४ ॥
तत्र वीरः समभवत्सर्वशस्त्रभृतां वरः।
आमुक्तकवचः श्रीमान्देवगर्भः श्रियान्वितः ॥ ४१५ ॥

सहजं कवचं बिभ्रत्कुण्डलोद्योतिताननः।
अजायत सुतः कर्णः सर्वलोकेषु विश्रुतः ॥ ४१६ ॥
प्रादाच्च तस्यै कन्यात्वं पुनः स परमद्युतिः।
दत्वा च तपतां श्रेष्ठो दिवमाचक्रमे ततः ॥ ४१७ ॥
दृष्ट्वा कुमारं जातं सा वार्ष्णेयी दीनमानसा।
एकाग्रं चिन्तयामास किं कृत्वा सुकृतं भवेत् ॥ ४१८ ॥
गूहमानाऽपचारं सा बन्धुपक्षभयात्तदा।
उत्ससर्ज कुमारं तं जले कुन्ती महाबलम् ॥ ४१९ ॥
तमुत्सृष्टं जले गर्भं राधाभर्ता महायशाः।
पुत्रत्वे कल्पयामास सभार्यः सूतनंदनः ॥ ४२० ॥
नामधेयं च चक्राते तस्य बालस्य तावुभौ।
वसुना सह जातोऽयं वसुषेणो भवत्विति ॥ ४२१ ॥

## पाण्डुकुन्तीविवाहः

(अ.११२) ततः सा कुन्तिभोजेन राज्ञाहूय नराधिपान्।
पित्रा स्वयंवरे दत्ता दुहिता राजसत्तम ॥ ४२२ ॥
ततः सा रङ्गमध्यस्थं तेषां राज्ञां मनस्विनी।
ददर्श राजशार्दूलं पाण्डुं भरतसत्तमम् ॥ ४२३ ॥
ततः कामपरीताङ्गी सकृत्प्रचलमानसा।
व्रीडमाना स्रजं कुन्ती राज्ञः स्कन्धे समासजत् ॥ ४२४ ॥
ततः तस्याः पिता राजन्विवाहमकरोत्प्रभुः।
स त्वोद्वाहं तदा तं तु नानावसुभिरर्चितम् ॥ ४२५ ॥
स्वपुरं प्रेषयामास स राजा कुरुसत्तम।

## पाण्डुमाद्रीविवाहः, विदुरविवाहश्च

(अ.११३) ततः शान्तनवो भीष्मो ययौ मद्रपतेः पुरम् ॥ ४२६ ॥

दत्वा तस्यासनं शुभ्रं पाद्यमर्घ्यं तथैव च ।
मधुपर्कं च मद्रेशः पप्रच्छागमनेऽर्थिताम् ॥ ४२७ ॥
तं भीष्मः प्रत्युवाचेदं मद्रराजं कुरूद्वहः ।
श्रूयते भवतः साध्वी स्वसा माद्री यशस्विनी ॥ ४२८ ॥
तामहं वरयिष्यामि पाण्डोरर्थे यशस्विनीम् ।
इत्युक्त्वा स महातेजाः शातकुम्भं कृताकृतम् ॥ ४२९ ॥
रत्नानि च विचित्राणि शल्यायादात्सहस्रशः ।
तत्प्रगृह्य धनं सर्वं शल्यः संप्रीतमानसः ॥ ४३० ॥
ददौ तां समलंकृत्य स्वसारं कौरवर्षभे ।
स तां माद्रीमुपादाय भीष्मः सागरगासुतः ॥ ४३१ ॥
आजगाम पुरीं धीमान्प्रविष्टो गजसाह्वयम् ।
तत इष्टेऽहनि प्राप्ते मुहूर्ते साधुसंमते ॥ ४३२ ॥
जग्राह विधिवत्पाणिं माद्र्याः पाण्डुर्नराधिपः ।
(अ.११४) अथ पारसवीं कन्यां देवकस्य महीपतेः ॥ ४३३ ॥
रूपयौवनसंपन्नां स शुश्रावापगासुतः ।
ततस्तु वरयित्वा तामानीय भरतर्षभः ॥ ४३४ ॥
विवाहं कारयामास विदुरस्य महामतेः ।

## धृतराष्ट्रपुत्राणां जन्म विवाहश्च

(अ.११५) ततः पुत्रशतं जज्ञे गान्धार्यां जनमेजय ॥ ४३५ ॥
मासमात्रेण संजज्ञे दुःशला च शताधिका ।
गान्धार्यां क्लिश्यमानायामुदरेण विवर्धता ॥ ४३६ ॥
धृतराष्ट्रं महाराजं वैश्या पर्यचरत्किल ।
तस्मिन्संवत्सरे राजन्धृतराष्ट्रान्महायशाः ॥ ४३७ ॥
जज्ञे धीमांस्ततस्तस्यां युयुत्सुः करणो नृप ।
(अ.११७) सर्वेषामनुरूपाश्च कृता दारा महीपते ॥ ४३८ ॥

धृतराष्ट्रेण समये परीक्ष्य विधिवन्नृप।
दुःशलां चापि समये धृतराष्ट्रो नराधिपः ॥ ४३९ ॥
जयद्रथाय प्रददौ विधिना भरतर्षभ।

## पाण्डोः शापप्राप्तिः, सभार्यस्य तस्य तपसे वननिवासः

(अ.११८) राजा पाण्डुर्महारण्ये मृगव्यालनिषेविते ॥ ४४० ॥
चरन्मैथुनधर्मस्थं ददर्श मृगयूथपम्।
ततस्तां च मृगीं तं च रुक्मपुङ्खैः सुपत्रिभिः ॥ ४४१ ॥
निर्बिभेद शरैस्तीक्ष्णैः पाण्डुः पञ्चभिराशुगैः।
स च राजन्महातेजा ऋषिपुत्रस्तपोधनः ॥ ४४२ ॥
भार्यया सह तेजस्वी मृगरूपेण संगतः।
संसक्तश्च तया मृग्या मानुषीमीरयन्गिरम् ॥ ४४३ ॥
क्षणेन पतितो भूमौ विललापाकुलेन्द्रियः।

मृग– किं कृतं ते नरश्रेष्ठ मामिहानागसं घ्नता ॥ ४४४ ॥
मुनिं मूलफलाहारं मृगवेषधरं नृप।
त्वयाहं हिंसितो यस्मात्तस्मात्त्वामप्यहं शपे ॥ ४४५ ॥
प्रियया सह संवासं प्राप्य कामविमोहितः।
त्वमप्यस्यामवस्थायां प्रेतलोकं गमिष्यसि ॥ ४४६ ॥
एवमुक्त्वा सुदुःखार्तो जीवितात्स व्यमुच्यत।

(अ ११९) तं व्यतीतमतिक्रम्य राजा स्वमिव बान्धवम् ॥ ४४७ ॥
सभार्यः शोकदुःखार्तः पर्यदेवयदातुरः।

पाण्डु– मोक्षमेव व्यवस्यामि बन्धो हि व्यसनं महत् ॥ ४४८ ॥
अतीव तपसात्मानं योजयिष्याम्यसंशयम्।
निशम्य वचनं भर्तुर्वनवासे धृतात्मनः ॥ ४४९ ॥
तत्समं वचनं कुन्ती माद्री च समभाषताम्।
त्यक्त्वा कामसुखे ह्यावां तप्स्यावो विपुलं तपः ॥ ४५० ॥

राजपुत्रस्तु कौरव्य पाण्डुर्मूलफलाशनः।
जगाम सह पत्नीभ्यां ततो नागशतं गिरिम् ॥ ४५१ ॥
इन्द्रद्युम्नसरः प्राप्य हंसकूटमतीत्य च।
शतशृंगे महाराज तापसः समतप्यत ॥ ४५२ ॥

## पाण्डोःपुत्रप्राप्तिः, निधनम्, माद्रीकृतं सहगमनं च

(अ.११५) पाण्डोः कुन्त्यां च माद्र्यां च पुत्राः पञ्च महारथाः।
देवेभ्यः समपद्यन्त सन्तानाय कुलस्य वै ॥ ४५३ ॥
(अ.१२४) नामानि चक्रिरे तेषां शतशृंगनिवासिनः।
*ज्येष्ठं युधिष्ठिरेत्येवं भीमसेनेति मध्यमम् ॥ ४५४ ॥*
अर्जुनेति तृतीयं च कुन्तीपुत्रानकल्पयन्।
*पूर्वजं नकुलेत्येवं सहदेवेति चापरम् ॥ ४५५ ॥*
माद्रीपुत्रावकथयंस्ते विप्राः प्रीतमानसाः।
(अ.१२५) सुपुष्पितवने काले कदाचिन्मधुमाधवे ॥ ४५६ ॥
भूतसंमोहने राजा सभार्यो व्यचरद्वनम्।
पाण्डोर्वनं तत्संप्रेक्ष्य प्रजज्ञे हृदि मन्मथः ॥ ४५७ ॥
तं माद्र्यनुजगामैका वसनं बिभ्रती शुभम्।
तत एनां बलाद्राजा निजग्राह रहोगताम् ॥ ४५८ ॥
वार्यमाणस्तया देव्या विस्फुरन्त्या यथाबलम्।
स तया सह संगम्य भार्यया कुरुनन्दनः ॥ ४५९ ॥
पाण्डुः परमधर्मात्मा युयुजे कालधर्मणा।
ततो माद्री समालिङ्ग्य राजानं गतचेतसम् ॥ ४६० ॥
मुमोच दुःखजं शब्दं पुनः पुनरतीव हि।
सह पुत्रैस्ततः कुन्ती माद्रीपुत्रौ च पाण्डवौ ॥ ४६१ ॥
आजग्मुः सहितास्तत्र यत्र राजा तथागतः।
कुन्ती– अन्विष्यामीह भर्तारमहं प्रेतवशं गतम् ॥ ४६२ ॥

उत्तिष्ठ त्वं विसृज्यैनमिमान्पालय दारकान्।

माद्री– न हि तृप्तास्मि कामानां ज्येष्ठा मामनुमन्यताम्।
मां च कामयमानोऽयं राजा प्रेतवशं गतः ॥ ४६३ ॥
राज्ञः शरीरेण सह ममापीदं कलेवरम्।
दग्धव्यं सुप्रतिच्छन्नमेतदार्ये प्रियं कुरु ॥ ४६४ ॥
दारकेष्वप्रमत्ता च भवेथाश्च हिता मम।
अतोऽन्यन्न प्रपश्यामि सन्देष्टव्यं हि किंचन ॥ ४६५ ॥
इत्युक्त्वा तं चिताग्निस्थं धर्मपत्नी नरर्षभम्।
मद्रराजसुता तूर्णमन्वारोहद्यशस्विनी ॥ ४६६ ॥

## पाण्डवैः सह ऋषीणां हस्तिनापुरे आगमनम्, पाण्डोः प्रेतकार्याणि च

(अ.१२१) पाण्डोरवरमं दृष्ट्वा देवकल्पा महर्षयः।
ततो मन्त्रविदः सर्वे मन्त्रयाञ्चक्रिरे मिथः ॥ ४६७ ॥
ते परस्परमामन्त्र्य देवकल्पा महर्षयः।
पाण्डोः पुत्रान्पुरस्कृत्य नगरं नागसाह्वयम् ॥ ४६८ ॥
उदारमनसः सिद्धा गमने चक्रिरे मनः।
भीष्माय पाण्डवान्दातुं धृतराष्ट्राय चैव हि ॥ ४६९ ॥
तस्मिन्नेव क्षणे सर्वे तानादाय प्रतस्थिरे।
पाण्डोर्दाराश्च पुत्रांश्च शरीरे ते च तापसाः ॥ ४७० ॥
तान्महर्षिगणान्दृष्ट्वा शिरोभिरभिवाद्य च।
उपोपविविशुः सर्वे कौरव्याः सपुरोहिताः ॥ ४७१ ॥
तेषामथो वृद्धतमः प्रत्युत्थाय जटाजिनी।
ऋषीणां मतमाज्ञाय महर्षिरिदमब्रवीत् ॥ ४७२ ॥
यः स कौरव्यदायादः पाण्डुर्नाम नराधिपः।
कामभोगान्परित्यज्य शतशृंगमितो गतः ॥ ४७३ ॥

ब्रह्मचर्यव्रतस्थस्य तस्य दिव्येन हेतुना।
साक्षाद्धर्मादयं पुत्रस्तत्र जातो युधिष्ठिरः ॥ ४७४ ॥
तथैनं बलिनां श्रेष्ठं तस्य राज्ञो महात्मनः।
मातरिश्वा ददौ पुत्रं भीमं नाम महाबलम् ॥ ४७५ ॥
पुरुहूतादयं जज्ञे कुन्त्यामेव धनञ्जयः।
यौ तु माद्री महेष्वासावसूत पुरुषोत्तमौ ॥ ४७६ ॥
अश्विभ्यां पुरुषव्याघ्राविमौ तावपि पश्यत।
वर्तमानः सतां वृत्ते पुत्रलाभमवाप्य च ॥ ४७७ ॥
पितृलोकं गतः पाण्डुरितः सप्तदशेऽहनि।
तं चितागतमाज्ञाय वैश्वानरमुखे हुतम् ॥ ४७८ ॥
प्रविष्टा पावकं माद्री हित्वा जीवितमात्मनः।
इमे तयोः शरीरे द्वे पुत्राश्चेमे तयोर्वराः ॥ ४७९ ॥
क्रियाभिरनुगृह्यन्तां सह मात्रा परन्तपाः।
एवमुक्त्वा कुरून्सर्वान्कुरूणामेव पश्यताम् ॥ ४८० ॥
क्षणेनान्तर्हिताः सर्वे तापसा गुह्यकैः सह।
(अ.१२७) पाण्डोर्विदुर सर्वाणि प्रेतकार्याणि कारय ॥ ४८१ ॥
धृत- राजवद्राजसिंहस्य माद्र्याश्चैव विशेषतः।
विदुरस्तं तथेत्युक्त्वा भीष्मेण सह भारत ॥ ४८२ ॥
पाण्डुं संस्कारयामास देशे परमपूजिते।

## बालक्रीडायां भीमस्य बलं दृष्ट्वा दुर्योधनस्य दुष्टभावः, भीमाय विषदानम्, भीमस्य पाताले रसप्राशनम्

(अ.१२८) अथाप्तवन्तो वेदोक्तान्संस्कारान्पाण्डवास्तदा ॥ ४८३ ॥
संव्यवर्धन्त भोगांस्ते भुञ्जाना पितृवेश्मनि।
धार्तराष्ट्रैश्च सहिताः क्रीडन्तो मुदिताः सुखम् ॥ ४८४ ॥
बालक्रीडासु सर्वासु विशिष्टास्तेजसाऽभवन्।
जवे लक्ष्याभिहरणे भोज्ये पांसुविकर्षणे ॥ ४८५ ॥

धार्तराष्ट्रान्भीमसेनः सर्वान्स परिमर्दति ।
कचेषु च निगृह्यैनान्विनिहत्य बलाद्बली ॥ ४८६ ॥
चकर्ष क्रोशतो भूमौ घृष्टजानुशिरोंसकान् ।
फलानि वृक्षमारुह्य विचिन्वन्ति च ते यदा ॥ ४८७ ॥
तदा पादप्रहारेण भीमः कम्पयते द्रुमान् ।
प्रहारवेगाभिहता द्रुमा व्याघूर्णितास्ततः ॥ ४८८ ॥
सफलाः प्रपतन्ति स्म द्रुत त्रस्ताः कुमारकाः ।
ततो बलमतिख्यातं धार्तराष्ट्रः प्रतापवान् ॥ ४८९ ॥
भीमसेनस्य तज्ज्ञात्वा दुष्टभावमदर्शयत् ।
प्राणवान्विक्रमी चैव शौर्येण महतान्वितः ॥ ४९० ॥
स्पर्धते चापि सहितानस्मानेको वृकोदरः ।
तं तु सुप्तं पुरोद्याने गङ्गायां प्रक्षिपामहे ॥ ४९१ ॥
अथ तस्मादवरजं श्रेष्ठं चैव युधिष्ठिरम् ।
प्रसह्य बन्धने बद्ध्वा प्रशासिष्ये वसुंधराम् ॥ ४९२ ॥
ततो जलविहारार्थं कारयामास भारत ।
चैलकम्बलवेश्मानि विचित्राणि महान्ति च ॥ ४९३ ॥
उदकक्रीडनं नाम कारयामास भारत ।
प्रमाणकोट्यां तं देशं स्थलं किंचिदुपेत्य ह ॥ ४९४ ॥
ततो दुर्योधनस्तत्र पाण्डवानाह दुर्मतिः ।
गङ्गां चैवानुयास्याम उद्यानवनशोभिताम् ॥ ४९५ ॥
सहिता भ्रातरः सर्वे जलक्रीडामवाप्नुमः ।
एवमस्त्विति तं चापि प्रत्युवाच युधिष्ठिरः ॥ ४९६ ॥
ते रथैर्नगराकारैर्देशजैश्च गजोत्तमैः ।
निर्ययुर्नगराच्छूराः कौरवाः पाण्डवैः सह ॥ ४९७ ॥
उद्यानवनमासाद्य विसृज्य च महाजनम् ।
उपच्छन्नान्यद्भुतान्यामांसानि भुञ्जन्ति ततस्ततः ॥ ४९८ ॥

अथोद्यानवरे तस्मिंस्तथा क्रीडागताश्च ते।
परस्परस्य वक्त्रेभ्यो ददुर्भक्ष्यांस्ततस्ततः ॥ ४९९ ॥
ततो दुर्योधनः पापस्तद्भक्ष्ये कालकूटकम्।
विषं प्रक्षेपयामास भीमसेनजिघांसया ॥ ५०० ॥
स्वयं प्रक्षिपते भक्ष्यं बहु भीमस्य पापकृत्।
प्रतीक्षितं स्म भीमेन तं वै दोषमजानता ॥ ५०१ ॥
ततस्ते सहिताः सर्वे जलक्रीडामकुर्वत।
दिवसान्ते परिश्रान्ता विहृत्य च कुरूद्वहाः ॥ ५०२ ॥
विहारावसथेष्वेव वीरावासमरोचयन्।
खिन्नस्तु बलवान्भीमो व्यायम्याभ्यधिकं तदा ॥ ५०३ ॥
प्रमाणकोट्यां वासार्थी सुष्वापावाप्य तत्स्थलम्।
ततो बद्ध्वा लतापाशैर्भीमं दुर्योधनः स्वयम् ॥ ५०४ ॥
मृतकल्पं तदा वीरं स्थलाज्जलमपातयत्।
स निःसंज्ञो जलस्यान्तमथ वै पाण्डवोऽविशत् ॥ ५०५ ॥
आक्रामन्नागभवने तदा नागकुमारकान्।
ततः समेत्य बहुभिस्तदा नागैर्महाविषैः ॥ ५०६ ॥
अदश्यत भृशं भीमो महादंष्ट्रैर्विषोल्बणैः।
ततोऽस्य दश्यमानस्य तद्विषं कालकूटकम् ॥ ५०७ ॥
हतं सर्पविषेणैव स्थावरं जङ्गमेन तु।
ततः प्रबुद्धः कौन्तेयः सर्वं संछिद्य बन्धनम् ॥ ५०८ ॥
पोथयामास तान्सर्वान्केचिद्भीताः प्रदुद्रुवुः।
हतावशेषा भीमेन सर्वे वासुकिमभ्ययुः ॥ ५०९ ॥
ऊचुश्च सर्पराजानं वासुकिं वासवोपमम्।
अयं नरो वै नागेन्द्र ह्यप्सु बद्ध्वा प्रवेशितः ॥ ५१० ॥
यथा च नो मतिर्वीर विषपीतो भविष्यति।
ततो वासुकिरभ्येत्य नागैरनुगतस्तदा ॥ ५११ ॥

पश्यति स्म महाबाहुं भीमं भीमपराक्रमम् ।
आर्यकेण च दृष्टः स पृथाया आर्यकेण च ॥ ५१२ ॥
अब्रवीत्तं च नागेन्द्रः किमस्य क्रियतां प्रियम् ।
एवमुक्तस्तदा नागो वासुकिं प्रत्यभाषत ॥ ५१३ ॥
रसं पिबेत्कुमारोऽयं त्वयि प्रीते महाबलः ।
बलं नागसहस्रस्य यस्मिन्कुण्डे प्रतिष्ठितम् ॥ ५१४ ॥
यावत्पिबति बालोऽयं तावदस्मै प्रदीयताम् ।
एवमस्त्विति तं नागं वासुकिः प्रत्यभाषत ॥ ५१५ ॥
एकोच्छ्वासात्ततः कुण्डं पिबति स्म महाबलः ।
एवमष्टौ स कुण्डानि ह्यपिबत्पाण्डुनंदनः ॥ ५१६ ॥
ततस्तु शयने दिव्ये नागदत्ते महाभुजः ।
अशेत भीमसेनस्तु यथासुखमरिन्दमः ॥ ५१७ ॥

## भीमप्रत्यागमनम् , कौरवपाण्डवानां धनुर्वेदाभ्यासः, कृतास्त्राणां तेषां स्वशिक्षाप्रदर्शनम्

(अ.१२९) ततस्ते कौरवाः सर्वे विना भीमं च पाण्डवाः ।
वृत्तक्रीडाविहारास्तु प्रतस्थुर्गजसाह्वयम् ॥ ५१८ ॥
ब्रुवन्तो भीमसेनस्तु यातो ह्यग्रत एव नः ।
सोऽभ्युपेत्य तदा पार्थो मातरं मातृवत्सलः ॥ ५१९ ॥
अभिवाद्याब्रवीत्कुन्तीमम्ब भीम इहागतः ।
न हि मे शुध्यते भावस्तं वीरं प्रति शोभने ॥ ५२० ॥
क्षत्तारमानाय्य तदा कुन्ती वचनमब्रवीत् ।
क्व गतो भगवन्क्षत्तर्भीमसेनो न दृश्यते ॥ ५२१ ॥
विदुर- आगमिष्यति ते पुत्रः प्रीतिं चोत्पादयिष्यति ।
ततोऽष्टमे तु दिवसे प्रत्यबुध्यत पाण्डवः ॥ ५२२ ॥

तस्मिंस्तदा रसे जीर्णे सोऽप्रमेयबलो बली।
उत्क्षिप्तः स तु नागेन जलाज्जलरुहेक्षणः॥ ५२३॥
तस्मिन्नेव वनोद्देशे स्थापितः कुरुनन्दनः।
तत उत्थाय कौन्तेयो भीमसेनो महाबलः॥ ५२४॥
आजगाम महाबाहुर्मातुरन्तिकमञ्जसा।
ततस्तत्सर्वमाचष्ट दुर्योधनविचेष्टितम्॥ ५२५॥
नागलोके च यद्वृत्तं गुणदोषमशेषतः।
ततो युधिष्ठिरो राजा भीममाह वचोऽर्थवत्॥ ५२६॥
तूष्णीं भव न ते जल्प्यमिदं कार्यं कथंचन।
एवं दुर्योधनः कर्णः शकुनिश्चापि सौबलः॥ ५२७॥
अनेकैरभ्युपायैस्ताञ्जिघांसन्ति स्म पाण्डवान्।
कुमारान्क्रीडमानांस्तान्दृष्ट्वा राजातिदुर्मदान्॥ ५२८॥
गुरुं शिक्षार्थमन्विष्य गौतमं तान्न्यवेदयत्।
शरस्तम्बे समुद्भूतं वेदशास्त्रार्थपारगम्॥ ५२९॥
अधिजग्मुश्च कुरवो धनुर्वेदं कृपात्तु ते।
(अ.१२०) विशेषार्थी ततो भीष्मः पौत्राणां विनयेप्सया॥ ५३०॥
द्रोणाय वेदविदुषे भारद्वाजाय धीमते।
पाण्डवान्कौरवांश्चैव ददौ शिष्यान्नरर्षभ॥ ५३१॥
तेऽचिरेणैव कालेन सर्वशास्त्रविशारदाः।
बभूवुः कौरवा राजन्पाण्डवाश्चामितौजसः॥ ५३२॥
(अ.१२४) कृतास्त्रान्धार्तराष्ट्रांश्च पाण्डुपुत्रांश्च भारत।
दृष्ट्वा द्रोणोऽब्रवीद्राजन्धृतराष्ट्रं जनेश्वरम्॥ ५३३॥
राजन्संप्राप्तविद्यास्ते कुमाराः कुरुसत्तम।
ते दर्शयेयुः स्वां शिक्षां राजन्ननुमते तव॥ ५३४॥
ततोऽब्रवीन्महाराजः प्रहृष्टेनान्तरात्मना।
क्षत्तर्यद्गुरुराचार्यो ब्रवीति कुरु तत्तथा॥ ५३५॥

ततो राजानमामन्त्र्य निर्गतो विदुरो बहिः।
भारद्वाजो महाप्राज्ञो मापयामास मेदिनीम् ॥ ५३६ ॥
रङ्गभूमौ सुविपुलं शास्त्रदृष्टं यथाविधि।
प्रेक्षागारं सुविहितं चक्रुस्ते तस्य शिल्पिनः ॥ ५३७ ॥
तस्मिंस्ततोऽहनि प्राप्ते राजा ससचिवस्तदा।
भीष्मं प्रमुखतः कृत्वा कृप चाचार्यसत्तमम् ॥ ५३८ ॥
शातकुम्भमयं दिव्यं प्रेक्षागारमुपागमत्।
गान्धारी च महाभागा कुन्ती च जयतांवर ॥ ५३९ ॥
स्त्रियश्च राज्ञ. सर्वास्ता. सप्रेष्याः सपरिच्छदाः।
हर्षादारुरुहुर्मञ्चान्मेरुं देवस्त्रियो यथा ॥ ५४० ॥
तत. शुक्लांबरधरः शुक्लयज्ञोपवीतवान्।
रङ्गमध्यं तदाचार्य. सपुत्रः प्रविवेश ह ॥ ५४१ ॥
ततो बद्धाङ्गुलित्राणा बद्धकक्षा महारथाः।
बद्धतूणाः सधनुषो विविशुर्भरतर्षभाः ॥ ५४२ ॥
अनुज्येष्ठं तु ते तत्र युधिष्ठिरपुरोगमाः।
चक्रुरस्त्रं महावीर्याः कुमाराः परमाद्भुतम् ॥ ५४३ ॥
अथ तौ नित्यसंहृष्टौ सुयोधनवृकोदरौ।
अवतीर्णौ गदाहस्तावेकशृङ्गाविवाचलौ ॥ ५४४ ॥
(अ.१३५) कुरुराजे हि रङ्गस्थे भीमे च बलिनां वरे।
पक्षपातकृतस्नेहः स द्विधेवाभवज्जनः ॥ ५४५ ॥
हा वीर कुरुराजेति हा भीम इति जल्पताम्।
पुरुषाणां सुविपुला. प्रणादाः सहसोत्थिताः ॥ ५४६ ॥
ततः क्षुब्धार्णवनिभं रङ्गमालोक्य बुद्धिमान्।
भारद्वाजः प्रियं पुत्रमश्वत्थामानमब्रवीत् ॥ ५४७ ॥
वारयैतौ महावीर्यौ कृतयोग्यावुभावपि।
मा भूद्रङ्गप्रकोपोऽयं भीमदुर्योधनोद्भवः ॥ ५४८ ॥

ततस्तावुद्यतगदौ गुरुपुत्रेण वारितौ।
ततो रङ्गाङ्गणगतो द्रोणो वचनमब्रवीत् ॥ ५४९ ॥
यो मे पुत्रात्प्रियतरः सर्वशस्त्रविशारदः।
ऐन्द्रिरिन्द्रानुजसमः स पार्थो दृश्यतामिति ॥ ५५० ॥
आचार्यवचनेनाथ कृतस्वस्त्ययनो युवा।
दर्शयामास बीभत्सुराचार्यायास्त्रलाघवम् ॥ ५५१ ॥
ततः समाप्तभूयिष्ठे तस्मिन्कर्मणि भारत।
द्वारदेशात्समुद्भूतो माहात्म्यबलसूचकः ॥ ५५२ ॥
वज्रनिष्पेषसदृशः शुश्रुवे भुजनिस्वनः।
द्वारं चाभिमुखाः सर्वे बभूवुः प्रेक्षकास्तदा ॥ ५५३ ॥

## रङ्गमध्ये कर्णस्य राज्याभिषेकः, तत्रैव कर्णस्य पितुरागमनम्

(अ,१३६) दत्तेऽवकाशे पुरुषैर्विस्मयोत्फुल्ललोचनः।
विवेश रङ्गं विस्तीर्णं कर्णः परपुरञ्जयः ॥ ५५४ ॥
ततो द्रोणाऽभ्यनुज्ञातः कर्णः प्रियरणः सदा।
यत्कृतं तत्र पार्थेन तच्चकार महाबलः ॥ ५५५ ॥
अथ दुर्योधनस्तत्र भ्रातृभिः सह भारत।
कर्णं परिष्वज्य मुदा ततो वचनमब्रवीत् ॥ ५५६ ॥
स्वागतं ते महाबाहो दिष्ट्या प्राप्तोऽसि मानद।
अहं च कुरुराज्यं च यथेष्टमुपभुज्यताम् ॥ ५५७ ॥
कर्ण– कृतं सर्वमहं मन्ये सखित्वं च त्वया वृणे।
द्वन्द्वयुद्धं च पार्थेन कर्तुमिच्छाम्यहं प्रभो ॥ ५५८ ॥
ततो द्रोणाभ्यनुज्ञातः पार्थः परपुरञ्जयः।
भ्रातृभिस्त्वरयाश्लिष्टो रणायोपजगाम तम् ॥ ५५९ ॥
ततो दुर्योधनेनापि सभ्रात्रा समरोद्यतः।
परिष्वक्तः स्थितः कर्णः प्रगृह्य सशरं धनुः ॥ ५६० ॥

एवमुक्तस्ततः कर्णः किंचित्प्रस्फुरिताधरः।
गगनस्थं विनिःश्वस्य दिवाकरमुदैक्षत ॥ ५७४ ॥
ततो दुर्योधनः कोपादुत्पपात महाबलः।
भ्रातृपद्मवनात्तस्मान्मदोत्कट इव द्विपः ॥ ५७५ ॥
सोऽब्रवीद्भीमकर्माणं भीमसेनमवस्थितम्।
वृकोदर न युक्तं ते वचनं वक्तुमीदृशम् ॥ ५७६ ॥
क्षत्रियाणां बलं ज्येष्ठं योद्धव्यं क्षत्रबन्धुना।
शूराणां च नदीनां च दुर्विदाः प्रभवाः किल ॥ ५७७ ॥
भवतां च यथा जन्म तदप्यागमितं मया।
सकुण्डलं सकवचं सर्वलक्षणलक्षितम् ॥ ५७८ ॥
कथमादित्यसदृशं मृगी व्याघ्रं जनिष्यति।
पृथिवीराज्यमर्होऽयं नाङ्गराज्यं नरेश्वरः ॥ ५७९ ॥
ततः सर्वस्य रङ्गस्य हाहाकारो महानभूत्।
साधुवादानुसंबद्धः सूर्यश्चास्तमुपागमत् ॥ ५८० ॥
ततो दुर्योधनः कर्णमालम्ब्याग्रकरे नृपः।
दीपिकाग्निकृतालोकस्तस्माद्रङ्गाद्विनिर्ययौ ॥ ५८१ ॥
पाण्डवाश्च सहद्रोणाः सकृपाश्च विशांपते।
भीष्मेण सहिताः सर्वे ययुः स्वं स्वं निवेशनम् ॥ ५८२ ॥

## द्रोणाचार्याय गुरुदक्षिणादानम्, युधिष्ठिरस्य यौवराज्याभिषेकः

(अ.१३८) ततः शिष्यान्समानीय आचार्योऽर्थमचोदयत्।
द्रोणः सर्वानशेषेण दक्षिणार्थं महीपते ॥ ५८३ ॥
पञ्चालराजं द्रुपदं गृहीत्वा रणमूर्धनि।
पर्यानयत भद्रं वः सा स्यात्परमदक्षिणा ॥ ५८४ ॥
तथेत्युक्त्वा तु ते सर्वे रथैस्तूर्णं प्रहारिणः।
आचार्यधनदानार्थं द्रोणेन सहिता ययुः ॥ ५८५ ॥

ते यज्ञसेनं द्रुपदं गृहीत्वा रणमूर्धनि ।
उपाजह्रुः सहामात्यं द्रोणाय भरतर्षभ ॥ ५८६ ॥
भग्नदर्पं हृतधनं तं तथा वशमागतम् ।
स वैरं मनसा ध्यात्वा द्रोणो द्रुपदमब्रवीत् ॥ ५८७ ॥
मा भैः प्राणभयाद्वीर क्षमिणो ब्राह्मणा वयम् ।
वरं ददामि ते राजन्राज्यस्यार्धमवाप्नुहि ॥ ५८८ ॥
अराजा किल नो राज्ञः सखा भवितुमर्हति ।
अतः प्रयतितं राज्ये यज्ञसेन मया तव ॥ ५८९ ॥
राजासि दक्षिणे कूले भागीरथ्याहमुत्तरे ।
सोऽध्यावसद्दीनमनाः काम्पिल्यं च पुरोत्तमम् ॥ ५९० ॥
अहिच्छत्रं च विषयं द्रोणः समभिपद्यत ।
(अ.१३९) ततः संवत्सरस्यान्ते यौवराज्याय पार्थिव ॥ ५९१ ॥
स्थापितो धृतराष्ट्रेण पाण्डुपुत्रो युधिष्ठिरः ।
ततोऽदीर्घेण कालेन कुन्तीपुत्रो युधिष्ठिरः ॥ ५९२ ॥
पितुरन्तर्दधे कीर्तिं शीलवृत्तसमाधिभिः ।
न शशाक वशे कर्तुं यं पाण्डुरपि वीर्यवान् ॥ ५९३ ॥
सोऽर्जुनेन वशं नीतो राजासीद्यवनाधिपः ।
अर्जुनः समरे प्राच्यान्सर्वानेकरथोऽजयत् ॥ ५९४ ॥
तथैवैकरथो गत्वा दक्षिणामजयद्दिशम् ।
धनौघं प्रापयामास कुरुराष्ट्रं धनञ्जयः ॥ ५९५ ॥
एवं सर्वे महात्मानः पाण्डवा मनुजोत्तमाः ।
परराष्ट्राणि निर्जित्य स्वराष्ट्रं ववृधुः पुरा ॥ ५९६ ॥

## कणिकनीतिः

(अ.१४०) श्रुत्वा पाण्डुसुतान्वीरान्बलोद्रिक्तान्महौजसः ।
धृतराष्ट्रो महीपालश्चिन्तामगमदातुरः ॥ ५९७ ॥

तत आहूय मन्त्रज्ञं राजशास्त्रार्थवित्तमम्।
कणिकं मन्त्रिणां श्रेष्ठं धृतराष्ट्रोऽब्रवीद्वचः ॥ ५९८ ॥
उत्सिक्ताः पाण्डवा नित्यं तेभ्योऽसूये द्विजोत्तम।
तत्र मे निश्चिततमं सन्धिविग्रहकारणम् ॥ ५९९ ॥
कणिक त्वं ममाचक्ष्व करिष्ये वचनं तव।
स प्रसन्नमनास्तेन परिपृष्टो द्विजोत्तमः ॥ ६०० ॥
उवाच वचनं तीक्ष्णं राजशास्त्रार्थदर्शनम्।
शृणु राजन्निदं तत्र प्रोच्यमानं मयानघ ॥ ६०१ ॥
नित्यमुद्यतदण्डः स्यान्नित्यं विवृतपौरुषः।
अच्छिद्रश्छिद्रदर्शी स्यात्परेषां विवरानुगः ॥ ६०२ ॥
नास्यच्छिद्रं परः पश्येच्छिद्रेण परमन्वियात्।
गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥ ६०३ ॥
नासम्यक्कृतकारी स्यादुपक्रम्य कदाचन।
कण्टको ह्यपि दुश्छिन्न आस्रावं जनयेच्चिरम् ॥ ६०४ ॥
वहेदमित्रं स्कन्धेन यावत्कालस्य पर्ययः।
ततः प्रत्यागते काले भिन्द्याद्घटमिवाश्मनि ॥ ६०५ ॥
अमित्रो न विमोक्तव्यः कृपणं बह्वपि ब्रुवन्।
कृपा न तस्मिन्कर्तव्या हन्यादेवापकारिणम् ॥ ६०६ ॥
भयेन भेदयेद्भीरुं शूरमञ्जलिकर्मणा।
लुब्धमर्थप्रदानेन समं न्यूनं तथौजसा ॥ ६०७ ॥
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः।
उत्पथप्रतिपन्नस्य न्याय्यं भवति शासनम् ॥ ६०८ ॥
प्रहरिष्यन् प्रियं ब्रूयात्प्रहरन्नपि भारत।
प्रहृत्य च कृपायीत शोचेत च रुदेत च ॥ ६०९ ॥
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत्।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ ६१० ॥

चारः सुविहितः कार्य आत्मनश्च परस्य वा।
पाषण्डांस्तापसादींश्च परराष्ट्रेषु योजयेत् ॥ ६११ ॥
वाचा भृशं विनीतः स्याद्धृदयेन तथा क्षुरः।
स्मितपूर्वाभिभाषी स्यात्सृष्टो रौद्रेण कर्मणा ॥ ६१२ ॥
सुपुष्पितः स्यादफलः फलवान्स्याद्दुरारुहः।
आमः स्यात्पक्कसंकाशो न च जीर्येत कर्हिचित् ॥ ६१३ ॥
कर्मणा येन केनेव मृदुना दारुणेन च।
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ॥ ६१४ ॥
न संशयमनारुह्य नरो भद्राणि पश्यति।
संशयं पुनरारुह्य यदि जीवति पश्यति ॥ ६१५ ॥
योऽरिणा सह संधाय शयीत कृतकृत्यवत्।
स वृक्षाग्रे यथासुप्तः पतितः प्रतिबुध्यते ॥ ६१६ ॥
नास्य कृत्यानि बुध्येरन्मित्राणि रिपवस्तथा।
आरब्धान्येव पश्येरन्सुपर्यवसितान्यपि ॥ ६१७ ॥
भीतवत्संविधातव्यं यावद्भयमनागतम्।
आगतं तु भयं दृष्ट्वा प्रहर्तव्यमभीतवत् ॥ ६१८ ॥
तालवत्कुरुते मूलं बालः शत्रुरुपेक्षितः।
गहनेऽग्निरिवोत्सृष्टः क्षिप्रं संजायते महान् ॥ ६१९ ॥
आशां कालवतीं कुर्यात्कालं विघ्नेन योजयेत्।
विघ्नं निमित्ततो ब्रूयान्निमित्तं चापि हेतुतः ॥ ६२० ॥
पाण्डवेषु यथान्यायमन्येषु च कुरूद्वह।
वर्तमानो न मज्जेस्त्वं तथा कृत्यं समाचर ॥ ६२१ ॥

## जतुगृहदाहः

(अ.१४१) गुणैः समुदितान्दृष्ट्वा पौराः पाण्डुसुतांस्तदा।
कथयाञ्चक्रिरे तेषां गुणान्संसत्सु भारत ॥ ६२२ ॥

प्रज्ञाचक्षुरचक्षुष्ट्वाद्धृतराष्ट्रो जनेश्वरः।
राज्यं न प्राप्तवान्पूर्वं स कथं नृपतिर्भवेत्॥ ६२३॥
ते वयं पाण्डवज्येष्ठं तरुणं वृद्धशीलिनम्।
अभिषिञ्चाम साध्वद्य सत्यकारुण्यवेदिनम्॥ ६२४॥
तेषां दुर्योधनः श्रुत्वा तानि वाक्यानि जल्पताम्।
युधिष्ठिरानुरक्तानां पर्यतप्यत दुर्मतिः॥ ६२५॥
ततो विरहितं दृष्ट्वा पितरं प्रतिपूज्य सः।
पौरानुरागसंतप्तः पश्चादिदमभाषत॥ ६२६॥
पितृतः प्राप्तवान्राज्यं पाण्डुरात्मगुणैः पुरा।
त्वमन्धगुणसंयोगात्प्राप्तं राज्यं न लब्धवान्॥ ६२७॥
स एष पाण्डोर्दायाद्यं यदि प्राप्नोति पाण्डवः।
तस्य पुत्रो ध्रुवं प्राप्तस्तस्य तस्यापि चापरः॥ ६२८॥
ते वयं राजवंशेन हीनाः सह सुतैरपि।
अवज्ञाता भविष्यामो लोकस्य जगतीपते॥ ६२९॥
सततं निरयं प्राप्ताः परपिण्डोपजीविनः। —१८१
न भवेम यथा राजंस्तथा नीतिर्विधीयताम्॥ ६३०॥
अर्थवर्गः सहामात्यो मत्संस्थोऽद्य महीपते।
स भवान्पाण्डवानाशु विवासयितुमर्हति॥ ६३१॥
मृदुनैवाभ्युपायेन नगरं वारणावतम्। Name of
यदा प्रतिष्ठितं राज्यं मयि राजन्भविष्यति॥ ६३२॥
तदा कुन्ती सहापत्या पुनरेष्यति भारत।
धृतराष्ट्र– दुर्योधन ममाप्येतद्धृदि संपरिवर्तते॥ ६३३॥
अभिप्रायस्य पापत्वान्नैवं तु विवृणोम्यहम्।
(अ.१४२) धृतराष्ट्रप्रयुक्तास्ते केचित्कुशलमन्त्रिणः॥ ६३४॥
कथयाञ्चक्रिरे रम्यं नगरं वारणावतम्।
अयं समाजः सुमहान्रमणीयतमो भुवि॥ ६३५॥

उपस्थित पशुपतेर्नगरे वारणावते।
कथ्यमाने तथा रम्ये नगरे वारणावते ॥ ६३६ ॥
गमने पाण्डुपुत्राणां जज्ञे तत्र मतिर्नृप।
यदा त्वमन्यत नृपो जातकौतूहला इति ॥ ६३७ ॥
उवाचैतानेत्य तदा पाण्डवानम्बिकासुत ।
ते ताता यदि मन्यध्वमुत्सव वारणावते ॥ ६३८ ॥
सगणा सान्वयाश्चैव विहरध्व यथामरा ।
कंचित्काल विहृत्यैवमनुभूय परां मुदम् ॥ ६३९ ॥
इद वे हास्तिनपुर सुखिन पुनरेष्यथ।
धृतराष्ट्रस्य त काममनुबुध्य युधिष्ठिर ॥ ६४० ॥
आत्मनश्चासहायत्व तथेति प्रत्युवाच तम्।
(अ १४४) एवमुक्तेषु राज्ञा तु पाण्डुपुत्रेषु भारत ॥ ६४१ ॥
दुर्योधन पर हर्षमगच्छत्स दुरात्मवान्।
स पुरोचनमेकान्तमानीय भरतर्षभ ॥ ६४२ ॥
गृहीत्वा दक्षिणे पाणौ सचिव वाक्यमब्रवीत्।
पाण्डवा धृतराष्ट्रेण प्रेषिता वारणावतम् ॥ ६४३ ॥
उत्सवे विहरिष्यन्ति धृतराष्ट्रस्य शासनात्।
तत्र गत्वा चतु शालं गृह परमसंवृतम् ॥ ६४४ ॥
नगरोपान्तमाश्रित्य कारयेथा महाधनम्।
शाणसर्जरसादीनि यानि द्रव्याणि कानिचित् ॥ ६४५ ॥
आग्नेयान्युत सन्तीह तानि तत्र प्रदापय।
सर्पिस्तैलवसाभिश्च लाक्षया चाप्यनल्पया ॥ ६४६ ॥
मृत्तिकां मिश्रयित्वा त्व लेप कुड्येषु दापय।
यथा च तत्र पश्येरन्परीक्षन्तोऽपि पाण्डवा ॥ ६४७ ॥
आग्नेयमिति तत्कार्यमपि चान्येऽपि मानवा ।
ज्ञात्वा च तान्सुविश्वस्तान् शयानानकुतोभयान् ॥ ६४८ ॥

अग्निस्त्वया ततो देयो द्वारतस्तस्य वेश्मनः।
स गत्वा त्वरितं राजन्दुर्योधनमते स्थित.॥ ६४९॥
यथोक्तं राजपुत्रेण सर्वं चक्रे पुरोचनः।
(अ.१४५) पाण्डवास्तु रथान्युक्त्वा प्रययुर्वारणावतम्॥ ६५०॥
(अ.१४६) अर्चिताश्च नरैः पौरैः पाण्डवा भरतर्षभ।
जग्मुरावसथं पश्चात्पुरोचनपुर. सराः॥ ६५१॥
दशरात्रोषितानां तु तत्र तेषां पुरोचनः।
निवेदयामास गृहं शिवाख्यमशिवं तदा॥ ६५२॥
तच्चागारमभिप्रेक्ष्य सर्वधर्मभृतां वरः।
उवाचाग्नेयमित्येव भीमसेनं युधिष्ठिर.॥ ६५३॥
भीम- यदीदं गृहमाग्नेयं विहितं मन्यते भवान्।
तत्रैव साधु गच्छामो यत्र पूर्वोषिता वयम्॥ ६५४॥
युधि- इह यत्तैर्निराकारैर्वस्तव्यमिति रोचये।
अप्रमत्तैर्विचिन्वद्भिर्गतिमिष्टां ध्रुवामितः॥ ६५५॥
वयं तु यदि दाहस्य बिभ्यत. प्रद्रवेमहि।
स्पशैर्निर्घातयेत्सर्वान्राज्यलुब्ध. सुयोधनः॥ ६५६॥
तदस्माभिरिमं पापं तं च पापं सुयोधनम्।
वञ्चयद्भिर्निवस्तव्यं छन्नावासं क्वचित्क्वचित्॥ ६५७॥
ते वयं मृगयाशीलाश्चराम वसुधामिमाम्।
तथा नो विदिता मार्गा भविष्यन्ति पलायताम्॥ ६५८॥
(अ.१४७) विदुरस्य सुहृत्कश्चित्खनक. कुशलो नरः।
परिखामुत्किरन्नाम चकार च महाबिलम्॥ ६५९॥
चक्रे च वेश्मनस्तस्य मध्येनातिमहद्बिलम्।
कपाटयुक्तमज्ञातं समं भूम्याश्च भारत॥ ६६०॥
(अ.१४८) तांस्तु दृष्ट्वा सुमनस. परिसंवत्सरोषितान्।
विश्वस्तानिव संलक्ष्य हर्षं चक्रे पुरोचनः॥ ६६१॥

अथ दानापदेशेन कुन्ती ब्राह्मणभोजनम् ।
चक्रे निशि महाराज आजग्मुस्तत्र योषितः ॥ ६६२ ॥
निषादी पञ्चपुत्रा तु तस्मिन्भोज्ये यदृच्छया ।
अन्नार्थिनी समभ्यागात्सपुत्रा कालचोदिता ॥ ६६३ ॥
सा पीत्वा मदिरां मत्ता सपुत्रा मदविह्वला ।
सह सर्वैः सुतै राजंस्तस्मिन्नेव निवेशने ॥ ६६४ ॥
सुष्वाप विगतज्ञाना मृतकल्पा नराधिप ।
अथ प्रवाते तुमुले निशि सुप्ते जने तदा ॥ ६६५ ॥
तदुपादीपयद्भीमः शेते यत्र पुरोचनः ।
ततो जतुगृहद्वारं दीपयामास पाण्डवः ॥ ६६६ ॥
समन्ततो ददौ पश्चादग्निं तत्र निवेशने ।
ज्ञात्वा तु तद्गृहं सर्वमादीप्तं पाण्डुनन्दनाः ॥ ६६७ ॥
सुरङ्गां विविशुस्तूर्णं मात्रा सार्धमरिन्दमाः ।
बिलेन तेन निर्गत्य जग्मुर्द्रुतमलक्षिताः ॥ ६६८ ॥
(अ.१५०) अथ रात्र्यां व्यतीतायामशेषो नागरो जनः ।
तत्राजगाम त्वरितो दिदृक्षुः पाण्डुनन्दनान् ॥ ६६९ ॥
निर्वापयन्तो ज्वलनं ते जना ददृशुस्ततः ।
जातुषं तद्गृहं दग्धममात्यं च पुरोचनम् ॥ ६७० ॥
ततो व्यपोह्यमानास्ते पाण्डवार्थे हुताशनम् ।
निषादीं ददृशुर्दग्धां पञ्चपुत्रामनागसम् ॥ ६७१ ॥
खनकेन तु तेनैव वेश्म शोधयता बिलम् ।
पांसुभिः पिहितं तच्च पुरुषैस्तैर्न लक्षितम् ॥ ६७२ ॥
ततस्ते ज्ञापयामासुर्धृतराष्ट्रस्य नागराः ।
पाण्डवानग्निना दग्धानमात्यं च पुरोचनम् ॥ ६७३ ॥
श्रुत्वा तु धृतराष्ट्रस्तद्राजा सुमहदप्रियम् ।
विनाशं पाण्डुपुत्राणां विललाप सुदुःखितः ॥ ६७४ ॥

एवं गते मया शक्यं यद्यत्कारयितुं हितम्।
पाण्डवानां च कुन्त्याश्च तत्सर्वं नियतां धनैः ॥ ६७५ ॥
एवमुक्त्वा ततश्चक्रे ज्ञातिभिः परिवारितः।
उदकं पाण्डुपुत्राणां धृतराष्ट्रोऽम्बिकासुतः ॥ ६७६ ॥
पाण्डवाश्चापि निर्गत्य नगराद्वारणावतात्।
यतमाना वनं राजन्गहनं प्रतिपेदिरे ॥ ६७७ ॥

## हिण्डिम्बवधः

(अ.१५२) तत्र तेषु शयानेषु हिडिम्बो नाम राक्षसः।
अविदूरे वनात्तस्माच्छालवृक्षं समाश्रितः ॥ ६७८ ॥
यदृच्छया तानपश्यत्पाण्डुपुत्रान्महारथान्।
आघ्राय मानुषं गन्धं भगिनीमिदमब्रवीत् ॥ ६७९ ॥
हत्वैतान्मानुषान्सर्वानानयस्व ममान्तिकम्।
भक्षयिष्याव सहितौ कुरु तूर्णं वचो मम ॥ ६८० ॥
एवमुक्ता हिडिम्बा तु हिडिम्बेन तदा वने।
जगाम तत्र यत्र स्म पाण्डवा भरतर्षभ ॥ ६८१ ॥
ददर्श तत्र सा गत्वा पाण्डवान्पृथया सह।
शयानान्भीमसेनं च जाग्रतं त्वपराजितम् ॥ ६८२ ॥
दृष्ट्वैव भीमसेनं सा शालपोतमिवोद्गतम्।
राक्षसी कामयामास रूपेणाप्रतिमं भुवि ॥ ६८३ ॥
सा कामरूपिणी रूपं कृत्वा मानुषमुत्तमम्।
उपतस्थे महाबाहुं भीमसेनं शनैः शनैः ॥ ६८४ ॥
स्मितपूर्वमिदं वाक्यं भीमसेनमथाब्रवीत्।
वसति ह्यत्र पापात्मा हिडिम्बो नाम राक्षसः ॥ ६८५ ॥
तेनाहं प्रेषिता भ्रात्रा दुष्टभावेन रक्षसा।
साहं त्वामभिसंप्रेक्ष्य देवगर्भसमप्रभम् ॥ ६८६ ॥

नान्य भर्तारमिच्छामि सत्यमेतद्ब्रवीमि ते।
न्यास्यामि त्वां महाबाहो राक्षसात्पुरुषादकात् ॥ ६८७ ॥

भीम– न हि मे राक्षसा भीरु सोढुं शक्ता पराक्रमम्।
गच्छ वा तिष्ठ वा भद्रे यद्वापीच्छसि तत्कुरु ॥ ६८८ ॥

(अ १५३) तां विदित्वा चिरगतां हिडिम्बो राक्षसेश्वर ।
अवतीर्य द्रुमात्तस्मादाजगामाशु पाण्डवान् ॥ ६८९ ॥
तां तथा मानुषं रूपं बिभ्रतीं सुमनोहरम्।
पुस्कामां शङ्कमानश्च चुक्रोध पुरुषादक ॥ ६९० ॥
वधायाभिपपातैनान्दन्तैर्दन्तानुपस्पृशन्।
तमापतन्तं सप्रेक्ष्य भीम प्रहरतां वर ॥ ६९१ ॥
भर्त्सयामास तेजस्वी तिष्ठ तिष्ठेति चाब्रवीत्।
अन्योन्यं तौ समासाद्य विचकर्षतुरोजसा ॥ ६९२ ॥
हिडिम्बो भीमसेनश्च विक्रमं चरतु परम्। ।
तयो शब्देन महता विबुद्धास्ते नरर्षभा ॥ ६९३ ॥
सह मात्रा च ददृशुर्हिडिम्बामग्रत स्थिताम्।

(अ १५४) स मार्यमाणो भीमेन ननाद विपुलं स्वनम् ॥ ६९४ ॥
बाहुभ्यां योत्त्रयित्वा त बलवान्पाण्डुनन्दन ।
मध्ये भङ्क्त्वा महाबाहुर्हर्षयामास पाण्डवान् ॥ ६९५ ॥

(अ १५५) हिडिम्बा तु तत कुन्तीमभिवाद्य कृताञ्जलि ।
युधिष्ठिरं तु कौन्तेयमिदं वचनमब्रवीत् ॥ ६९६ ॥
आर्ये जानासि यद्दुःखमिह स्त्रीणामनङ्गजम्।
तदिदं मामनुप्राप्तं भीमसेनकृतं शुभे ॥ ६९७ ॥
प्रत्याख्याता न जीवामि सत्यमेतद्ब्रवीमि ते।
भर्त्रानेन महाभागे संयोजय सुतेन ह ॥ ६९८ ॥

युधि– एवमेतद्यथात्थ त्वं हिडिम्बे नात्र संशय ।
स्थातव्यं तु त्वया सत्ये यथा ब्रूयां सुमध्यमे ॥ ६९९ ॥

अहम्तु विहरानेन यथाकामं मनोजवा।
अयं त्वानयितव्यस्ते भीमसेनः सदा निशि ॥ ७०० ॥
तथेति तत्प्रतिज्ञाय हिडिम्बा राक्षसी तदा।
बिभ्रती परमं रूपं रमयामास पाण्डवम् ॥ ७०१ ॥
प्रजज्ञे राक्षसी पुत्रं भीमसेनान्महाबलम्।
घटो ह्रास्योत्कच इति माता तं प्रत्यभाषत ॥ ७०२ ॥
अब्रवीत्तेन नामास्य घटोत्कच इति स्म ह।

### व्यासदर्शनम् , वकवधः

(अ.१५६) ते वनेन वनं गत्वा घ्नन्तो मृगगणान्बहून् ॥ ७०३ ॥
अपक्रम्य ययू राजंस्त्वरमाणा महारथाः।
जटाः कृत्वात्मनः सर्वे वल्कलाजिनवाससः ॥ ७०४ ॥
सह कुन्त्या महात्मानो बिभ्रतस्तापसं वपुः।
ब्राह्मं वेदमधीयाना वेदाङ्गानि च सर्वशः ॥ ७०५ ॥
नीतिशास्त्रं च सर्वज्ञा ददृशुस्ते पितामहम्।
व्यास- मयेदं व्यसनं पूर्वं विदितं भरतर्षभाः ॥ ७०६ ॥
न विषादोऽत्र कर्तव्यः सर्वमेतत्सुखाय वः।
एवं स तान्समाश्वास्य व्यासः सत्यवतीसुतः ॥ ७०७ ॥
एकचक्रामभिगतः कुन्तीमाश्वासयत्प्रभुः।
(अ.१५७) एकचक्रां गतास्ते तु कुन्तीपुत्रा महारथाः ॥ ७०८ ॥
ऊषुर्नातिचिरं कालं ब्राह्मणस्य निवेशने।
ततः कदाचिद्भैक्षाय गतास्ते पुरुषर्षभाः ॥ ७०९ ॥
संगत्या भीमसेनस्तु तत्रास्ते पृथया सह।
अथार्तिजं महाशब्दं ब्राह्मणस्य निवेशने ॥ ७१० ॥
भृशमुत्पतितं घोरं कुन्ती शुश्राव भारत।
मथ्यमानेव दुःखेन हृदयेन पृथा तदा ॥ ७११ ॥

उवाच भीमं कल्याणी कृपान्वितमिदं वचः।
वसाम सुसुखं पुत्र ब्राह्मणस्य निवेशने ॥ ७१२ ॥
अज्ञाता धार्तराष्ट्रस्य सत्कृता वीतमन्यवः।
सा चिन्तये सदा पुत्र ब्राह्मणस्यास्य किंन्वहम् ॥ ७१३ ॥
प्रियं कुर्यामिति गृहे यत्कुर्युरुषिताः सुखम्।
तदिदं ब्राह्मणस्यास्य दुःखमापतितं ध्रुवम् ॥ ७१४ ॥
तत्रास्य यदि साहाय्यं कुर्यामुपकृतं भवेत्।

भीम- ज्ञायतामस्य यद्दुःखं यतश्चैव समुत्थितम् ॥ ७१५ ॥
विदित्वा व्यवसिष्यामि यद्यपि स्यात्सुदुष्करम्।
अन्तःपुरं ततस्तस्य ब्राह्मणस्य महात्मनः ॥ ७१६ ॥
विवेश त्वरिता कुन्ती बद्धवत्सेव सौरभी।
ततस्तं ब्राह्मणं तत्र भार्यया च सुतेन च।
दुहित्रा चैव सहितं ददर्शावनताननम् ॥ ७१७ ॥

ब्राह्मण- जीविते वर्तमानस्य दुःखानामागमो ध्रुवः।
न हि योगं प्रपश्यामि येन मुच्येयमापदः ॥ ७१८ ॥
त्वामहं जीवितस्यार्थे साध्वीमनपकारिणीम्।
परित्यक्तुं न शक्ष्यामि भार्यां नित्यमनुव्रताम् ॥ ७१९ ॥
कुत एव परित्यक्तुं सुतं शक्ष्याम्यहं स्वयम्।
भर्तुरर्थाय निक्षिप्तां न्यासं धात्रा महात्मना ॥ ७२० ॥
स्वयमुत्पाद्य तां बालां कथमुत्स्रष्टुमुत्सहे।
आत्मानमपि चोत्सृज्य तप्स्यामि परलोकगः ॥ ७२१ ॥
त्यक्ता ह्येते मया व्यक्तं नेह शक्ष्यन्ति जीवितुम्।
एषामन्यतमत्यागो नृशंसो गर्हितो बुधैः।
सर्वैः सह मृतं श्रेयो न च मे जीवितं क्षमम् ॥ ७२२ ॥

(अ.१५८) भार्या पुत्रोऽथ दुहिता सर्वमात्मार्थमिष्यते।

ब्राह्मणी- व्यर्थां जहि सुबुद्ध्या त्वं स्वयं यास्यामि तत्र च ॥ ७२३ ॥

त्रितयं सर्वथाप्येवं व्यसनिष्यत्यसंशयम्।
त्वया विहीनं तस्मात्त्वं मां परित्यक्तुमर्हसि ॥ ७२४ ॥
व्युष्टिरेषा परा स्त्रीणां पूर्वं भर्तुः परां गतिम्।
गन्तुं ब्रह्मन्सपुत्राणामिति धर्मविदो विदुः ॥ ७२५ ॥
(अ.१५९) तयोर्दुःखितयोर्वाक्यमतिमात्रं निशम्य तु।
ततो दुःखपरीताङ्गी कन्या तावभ्यभाषत ॥ ७२६ ॥
किमेवं भृशदुःखार्तौ रोरुयेतामनाथवत्।
धर्मतोऽहं परित्याज्या युवयोर्नात्र संशयः ॥ ७२७ ॥
त्यक्तव्यां मां परित्यज्य त्राहि सर्वं मयैकया।
ततः प्ररुदितान्सर्वान्निशम्याथ सुतस्तदा ॥ ७२८ ॥
मा पिता रुद मा मातर्मा स्वसस्त्विति चाब्रवीत्।
ततः स तृणमादाय प्रहृष्टः पुनरब्रवीत् ॥ ७२९ ॥
अनेनाहं हनिष्यामि राक्षसं पुरुषादकम्।
अयं काल इति ज्ञात्वा कुन्ती समुपसृत्य तान् ॥ ७३० ॥
गतासूनमृतेनेव जीवयन्तीदमब्रवीत्।
(अ.१६०) कुतो मूलमिदं दुःखं ज्ञातुमिच्छामि तत्त्वतः ॥ ७३१ ॥
विदित्वाप्यपकर्षेयं शक्यं चेदपकर्षितुम्।
ब्राह्मण– समीपे नगरस्यास्य बको वसति राक्षसः ॥ ७३२ ॥
ईशो जनपदस्यास्य पुरस्य च महाबलः।
वेतनं तस्य विहितं शालिवाहस्य भोजनम् ॥ ७३३ ॥
महिषौ पुरुषश्चैको यस्तदादाय गच्छति।
एकैकश्चापि पुरुषस्तत्प्रयच्छति भोजनम् ॥ ७३४ ॥
स वारो बहुभिर्वर्षैर्भवत्यसुकरो नरैः।
सोऽयमस्माननुप्राप्तो वारः कुलविनाशनः ॥ ७३५ ॥
न च मे विद्यते वित्तं संक्रेतुं पुरुषं क्वचित्।
सोऽहं दुःखार्णवे मग्नो महत्यसुकरे भृशम् ॥ ७३६ ॥

सहैवैतैर्गमिष्यामि बान्धवैश्च राक्षसम्।
(अ.१६१) न विषादस्त्वया कार्यो भयादस्मात्कथंचन ॥ ७३७ ॥
कुन्ती- मम पञ्च सुता ब्रह्मंस्तेषामेको गमिष्यति।
ब्राह्मण- नाहमेतत्करिष्यामि जीवितार्थी कथंचन ॥ ७३८ ॥
ब्राह्मणस्यातिथेश्चैव स्वार्थे प्राणान्वियोजयन्।
श्रेयांस्तु सहृदारस्य विनाशोऽद्य मम स्वयम् ॥ ७३९ ॥
ब्राह्मणस्य वधं नाहमनुमंस्ये कदाचन।
कुन्ती- ममाप्येषा मतिर्ब्रह्मन्विप्रा रक्ष्या इति स्थिरा ॥ ७४० ॥
न चाप्यनिष्टः पुत्रो मे यदि पुत्रशतं भवेत्।
न चासौ राक्षसः शक्तो मम पुत्रविनाशने ॥ ७४१ ॥
वीर्यवान्मन्त्रसिद्धश्च तेजस्वी च सुतो मम।
न त्विदं केषुचिद्ब्रह्मन्व्याहर्तव्यं कथंचन ॥ ७४२ ॥
विद्यार्थिनो हि मे पुत्रान्विप्रकुर्युः कुतूहलात्।
ततः कुन्ती च विप्रश्च सहितावनिलात्मजम् ॥ ७४३ ॥
तमब्रूतां कुरुष्वेति स तथेत्यब्रवीच्च तौ।
(अ.१६२) ततो रात्र्यां व्यतीतायामन्नमादाय पाण्डवः ॥ ७४४ ॥
भीमसेनो ययौ तत्र यत्रासौ पुरुषादकः।
आसाद्य तु वनं तस्य रक्षसः पाण्डवो बली ॥ ७४५ ॥
आजुहाव ततो नाम्ना तदन्नमुपपादयन्।
ततः स राक्षसः क्रुद्धो भीमस्य वचनात्तदा ॥ ७४६ ॥
भुजाभ्यां परिजग्राह भीमसेनं महाबलम्।
भीमसेनोऽपि तद्रक्षः परिरभ्य महाभुजः ॥ ७४७ ॥
निष्पिष्य भूमौ जानुभ्यां समाजघ्ने वृकोदरः।
बाहुना परिजग्राह दक्षिणेन शिरोधराम् ॥ ७४८ ॥
सव्येन च कटीदेशे गृह्य वाससि पाण्डवः।
तद्रक्षो द्विगुणं चक्रे रवन्तं भैरवं रवम् ॥ ७४९ ॥

(अ.१६४) ततः स भग्नपार्श्वाङ्गो गतासुरभवद्बकः।

## द्रौपदीस्वयंवरः

(अ.१६५) ततः कतिपयाहस्य ब्राह्मणः संशितव्रतः ॥ ७५० ॥
प्रतिश्रयार्थी तद्वेश्म ब्राह्मणस्य जगाम ह।
स तत्राकथयद्विप्रः कथान्ते जनमेजय ॥ ७५१ ॥
पञ्चालेष्वद्भुताकारं याज्ञसेन्याः स्वयंवरम्।
(अ.१६८) तत आमन्त्र्य तं विप्रं कुन्ती राजन्सुतैःसह ॥ ७५२ ॥
प्रतस्थे नगरीं रम्यां द्रुपदस्य महात्मनः।
(अ.१८३) तत उत्कोचकं तीर्थं गत्वा धौम्याश्रमं तु ते ॥ ७५३ ॥
तं वव्रुः पाण्डवा धौम्यं पौरोहित्याय भारत।
पुरोहितेन तेनाथ गुरुणा संगतास्तदा ॥ ७५४ ॥
नाथवन्तमिवात्मानं मेनिरे भरतर्षभाः।
(अ.१८४) ततस्ते नरशार्दूला भ्रातरः पञ्च पाण्डवाः ॥ ७५५ ॥
(अ १८५) अनुपूर्व्येण संप्राप्ताः पञ्चालान्पाण्डुनन्दनाः।
तत्र भैक्षं समाजह्रुर्ब्राह्मणीं वृत्तिमाश्रिताः ॥ ७५६ ॥
तान्संप्राप्तांस्तथा वीराञ्जज्ञिरे न नराः क्वचित्।
यज्ञसेनस्य कामस्तु पाण्डवाय किरीटिने ॥ ७५७ ॥
कृष्णां दद्यामिति सदा न चैतद्विवृणोति सः।
सोऽन्वेषमाणः कौन्तेयं पाञ्चाल्यो जनमेजय ॥ ७५८ ॥
दृढं धनुरनानम्यं कारयामास भारत।
यन्त्रं वैहायसं चापि कारयामास कृत्रिमम् ॥ ७५९ ॥
तेन यन्त्रेण सहितं राजा लक्ष्यं चकार सः।
द्रुपद–इदं सज्यं धनुः कृत्वा सज्जैरेभिश्च सायकैः ॥ ७६० ॥
अतीत्य लक्ष्यं यो वेद्धा स लब्धा मत्सुतामिति।
इति स द्रुपदो राजा स्वयंवरमघोषयत् ॥ ७६१ ॥

तच्छ्रुत्वा पार्थिवाः सर्वे समीयुस्तत्र भारत।
ब्राह्मणाश्च महाभागा देशेभ्यः समुपागमन् ॥ ७६२ ॥
प्रागुत्तरेण नगराद्भूमिभागे समे शुभे।
समाजवाटः शुशुभे भवनैः सर्वतो वृतः ॥ ७६३ ॥
तत्र नानाप्रकारेषु विमानेषु स्वलंकृताः।
स्पर्धमानास्तदान्योन्यं निषेदुः सर्वपार्थिवाः ॥ ७६४ ॥
ब्राह्मणैस्ते च सहिताः पाण्डवाः समुपाविशन्।
अवतीर्णा ततो रङ्गं द्रौपदी भरतर्षभ ॥ ७६५ ॥
पुरोहितः सोमकानां मन्त्रविद्ब्राह्मणः शुचिः।
वादयामास सर्वाणि वादित्राणि समन्ततः ॥ ७६६ ॥
निःशब्दे तु कृते तस्मिन्धृष्टद्युम्नो विशांपते।
वाक्यमुच्चैर्जगादेदं श्लक्ष्णमर्थवदुत्तमम् ॥ ७६७ ॥

इदं धनुर्लक्ष्यमिमे च बाणाः।
शृण्वन्तु मे भूपतयः समेताः।
छिद्रेण यन्त्रस्य समर्पयध्वं
शरैः शितैर्व्योमचरैर्दशार्धैः ॥ ७६८ ॥
एतन्महत्कर्म करोति यो वै
कुलेन रूपेण बलेन युक्तः।
तस्याद्य भार्या भगिनी ममेयं
कृष्णा भवित्री न मृषा ब्रवीमि ॥ ७६९ ॥
(अ.१८७) ततस्तु ते राजगणाः क्रमेण
तत्कार्मुकं संहननोपपन्नम्।
सज्यं न शेकुर्मनसाऽपि कर्तुम्
विक्षिप्यमाणा धनुषा नरेन्द्राः ॥ ७७० ॥
गतौजसः स्रस्तकिरीटहारा
विनिःश्वसन्त शमयांबभूवुः।

सर्वान्नृपांस्तान्प्रसमीक्ष्य कर्णो
सज्यं चकाराशु युयोज बाणान् ॥ ७७१ ॥
दृष्ट्वा तु तं द्रौपदी वाक्यमुच्चैः
जगाद नाहं वरयामि सूतम् ।
सामर्षहासं प्रसमीक्ष्य सूर्यं
तत्याज कर्णः स्फुरितं धनुस्तत् ॥ ७७२ ॥
(अ.१८८) यदा निवृत्ता राजानो धनुषः सज्यकर्मणः ।
अथोदतिष्ठद्विप्राणां मध्याज्जिष्णुरुदारधीः ।
कृष्णं च मनसा कृत्वा जगृहे चार्जुनो धनुः ॥ ७७३ ॥
सज्यं च चक्रे निमिषान्तरेण
शरांश्च जग्राह दशार्धसंख्यान् ।
विव्याध लक्ष्यं निपपात तच्च
छिद्रेण भूमौ सहसातिविद्धम् ॥ ७७४ ॥
विद्धं तु लक्ष्यं प्रसमीक्ष्य कृष्णा
पार्थं च शक्रप्रतिमं निरीक्ष्य ।
आदाय शुक्लांबरमाल्यदाम
जगाम कुन्तीसुतमुत्स्मयन्ती ॥ ७७५ ॥
स तामुपादाय विजित्य रङ्गे
द्विजातिभिस्तैरभिपूज्यमानः ।
रङ्गान्निरक्रामदचिन्त्यकर्मा
पत्न्या तया चाप्यनुगम्यमानः ॥ ७७६ ॥
(अ.१९५) तत आहूय पाञ्चाल्यो राजपुत्रं युधिष्ठिरम् ।
पर्यपृच्छददीनात्मा कुन्तीपुत्रं सुवर्चसम् ।
कथं जानीम भवतः क्षत्रियान्ब्राह्मणानुत ॥ ७७७ ॥
युधि- वयं हि क्षत्रिया राजन्पाण्डोः पुत्रा महात्मनः ।
ज्येष्ठं मां विद्धि कौन्तेयं भीमसेनार्जुनाविमौ ॥ ७७८ ॥

यमौ च तत्र कुन्ती च यत्र कृष्णा व्यवस्थिता।
ततः स द्रुपदो राजा हर्षव्याकुललोचनः।
पप्रच्छ चैनं धर्मात्मा यथा ते प्रद्रुताः पुरात् ॥ ७७९ ॥
स तस्मै सर्वमाचख्यावानुपूर्व्येण पाण्डवः।
तच्छ्रुत्वा द्रुपदो राजा कुन्तीपुत्रस्य भाषितम् ॥ ७८० ॥
विगर्हयामास तदा धृतराष्ट्रं नरेश्वरम्।
आश्वासयामास च तं कुन्तीपुत्रं युधिष्ठिरम् ॥ ७८१ ॥
प्रत्याश्वस्तस्ततो राजा सह पुत्रैरुवाच तम्।
गृह्णातु विधिवत्पाणिमद्यायं कुरुनन्दनः ॥ ७८२ ॥
पुण्येऽहनि महाबाहुरर्जुनः कुरुतां क्षणम्।

युधि– सर्वेषां महिषी राजन्द्रौपदी नो भविष्यति ॥ ७८३ ॥
एवं प्रव्याहृतं पूर्वं मम मात्रा विशांपते।
सर्वेषां धर्मतः कृष्णा महिषी नो भविष्यति ॥ ७८४ ॥
आनुपूर्व्येण सर्वेषां गृह्णातु ज्वलने करान्।

द्रुपद– एकस्य बह्व्यो विहिता महिष्यः कुरुनंदन ॥ ७८५ ॥
नैकस्या बहवः पुंसः श्रूयन्ते पतयः क्वचित्।
लोकवेदविरुद्धं त्वं नाधर्मं धर्मविच्छुचिः ॥ ७८६ ॥
कर्तुमर्हसि कौन्तेय कस्मात्ते बुद्धिरीदृशी।

युधि– सूक्ष्मो धर्मो महाराज नास्य विद्मो वयं गतिम् ॥ ७८७ ॥
पूर्वेषामानुपूर्व्येण यातं वर्त्मानुयामहे।
अथ द्वैपायनो राजन्नभ्यागच्छद्यदृच्छया ॥ ७८८ ॥

(अ.१९६) ततो द्वैपायनस्तस्मै नरेन्द्राय महात्मने।
आचख्यौ तद्यथा धर्मो बहूनामेकपत्निता ॥ ७८९ ॥

(अ.१९८) ततोऽब्रवीद्भगवान्धर्मराजं
पाणिं कृष्णायास्त्वं गृहाणाद्य पूर्वम्।

ततस्तु ते कौरवराजपुत्राः
सहैव धौम्येन यथाविधि प्रभो ॥ ७९० ॥
क्रमेण सर्वे विविशुस्ततः सदो
महर्षभा गोष्ठमिवाभिनन्दिनः ।
ततः समाधाय स वेदपारगो
जुहाव मन्त्रैर्ज्वलितं हुताशनम् ॥ ७९१ ॥
युधिष्ठिरं चाप्युपनीय मन्त्रवि-
न्नियोजयामास सहैव कृष्णया ।
क्रमेण चानेन नराधिपात्मजा
वरस्त्रियस्ते जगृहुस्तदा करम् ॥ ७९२ ॥
कृते विवाहे द्रुपदो धनं ददौ
शतं रथानां वरहेममालिनाम् ।
शतं गजानामपि पद्मिनां तथा
तथैव दासीशतमग्र्ययौवनम् ॥ ७९३ ॥
कृते विवाहे च ततस्तु पाण्डवाः
प्रभूतरत्नामुपलभ्य तां श्रियम् ।
विजह्रुरिन्द्रप्रतिमा महाबलाः
पुरे तु पाञ्चालनृपस्य तस्य ह ॥ ७९४ ॥

## पाण्डवानयनार्थं धृतराष्ट्रमन्त्रणम्

(अ.१००) विदुरस्त्वथ तां श्रुत्वा द्रौपदीं पाण्डवैर्वृताम् ।
उवाच दिष्ट्या कुरवो वर्धन्त इति विस्मितः ॥ ७९५ ॥
वैचित्रवीर्यस्तु नृपो निशम्य विदुरस्य तत् ।
अब्रवीत्परमप्रीतो दिष्ट्या दिष्ट्येति भारत ॥ ७९६ ॥
तं तथा भाषमाणं तु विदुरः प्रत्यभाषत ।
नित्यं भवतु ते बुद्धिरेषा राजञ्छतं समाः ॥ ७९७ ॥

इत्युक्त्वा प्रययौ राजन्विदुरः स्वं निवेशनम्।
ततो दुर्योधनश्चापि राधेयश्च विशाम्पते ॥ ७९८ ॥
धृतराष्ट्रमुपागम्य वचोऽब्रूतामिदं तदा।
सन्निधौ विदुरस्य त्वां दोषं वक्तुं न शक्नुवः ॥ ७९९ ॥
विविक्तमिति वक्ष्यावः किं तवेदं चिकीर्षितम्।
सपत्नवृद्धिं यत्तात मन्यसे वृद्धिमात्मनः ॥ ८०० ॥
अभिष्टौषि च यत्क्षत्तुः समीपे द्विपतां वर।
अन्यस्मिन्नृपकर्तव्ये त्वमन्यत्कुरुषेऽनघ ॥ ८०१ ॥
तेषां बलविघातो हि कर्तव्यस्तात नित्यशः।
(अ.२०१) अहमप्येवमेवैतच्चिकीर्षामि यथा युवाम् ॥ ८०२ ॥
धृत- विवेक्तुं नाहमिच्छामि त्वाकारं विदुरं प्रति।
ततस्तेषां गुणानेव कीर्तयामि विशेषतः ॥ ८०३ ॥
(अ.२०२) भूय एव तु भीष्मश्च द्रोणो विदुर एव च।
युवां च कुरुतं बुद्धिं भवेद्या नः सुखोदया ॥ ८०४ ॥
तत आनाय्य तान्सर्वान्मन्त्रिणः सुमहायशाः।
धृतराष्ट्रो महाराज मन्त्रयामास वै तदा ॥ ८०५ ॥
(अ.२०३) न रोचते विग्रहो मे पाण्डुपुत्रैः कथंचन।
भीष्म- यथैव धृतराष्ट्रो मे तथा पाण्डुरसंशयम् ॥ ८०६ ॥
दुर्योधन यथा राज्यं त्वमिदं तात पश्यसि।
मम पैतृकमित्येवं तेऽपि पश्यन्ति पाण्डवाः ॥ ८०७ ॥
मधुरेणैव राज्यस्य तेषामर्धं प्रदीयताम्।
एतद्धि पुरुषव्याघ्र हितं सर्वजनस्य च ॥ ८०८ ॥
अतोऽन्यथा चेत्क्रियते न हितं नो भविष्यति।
तवाप्यकीर्तिः सकला भविष्यति न संशयः ॥ ८०९ ॥
यदि धर्मस्त्वया कार्यो यदि कार्यं प्रियं च मे।
क्षेमं च यदि कर्तव्यं तेषामर्धं प्रदीयताम् ॥ ८१० ॥

(अ.२०४) ममाप्येषा मतिस्तात या भीष्मस्य महात्मनः।
द्रोण– संविभज्यास्तु कौन्तेया धर्म एष सनातनः ॥ ८११ ॥
अतोऽन्यथा चेत्क्रियते यद्ब्रवीमि परं हितम्।
कुरवो वै विनङ्क्ष्यन्ति न चिरेणैव मे मतिः ॥ ८१२ ॥
(अ.२०५) राजन्निःसंशयं श्रेयो वाच्यस्त्वमसि बान्धवैः।
विदुर– प्रियं हितं च तद्वाक्यमुक्तवान्कुरुसत्तमः ॥ ८१३ ॥
तथा द्रोणेन बहुधा भाषितं हितमुत्तमम्।
येषां पक्षधरो रामो येषां मन्त्री जनार्दनः ॥ ८१४ ॥
किं नु तैरजितं संख्ये येषां पक्षे च सात्यकिः।
सोऽशक्यतां च विज्ञाय तेषामग्रे च भारत ॥ ८१५ ॥
दायाद्यतां च धर्मेण सम्यक्तेषु समाचर।
इदं निर्दिष्टमयशः पुरोचनकृतं महत् ॥ ८१६ ॥
तेषामनुग्रहेणाद्य राजन्प्रक्षालयात्मनः।
द्रुपदोऽपि महान्राजा कृतवैरश्च नः पुरा ॥ ८१७ ॥
तस्य संग्रहणं राजन्स्वपक्षस्य विवर्धनम्।
बलवन्तश्च दाशार्हा बहवश्च विशांपते ॥ ८१८ ॥
यतः कृष्णस्ततः सर्वे यतः कृष्णस्ततो जयः।
यच्च साम्नैव शक्येत कार्यं साधयितुं नृप ॥ ८१९ ॥
को दैवशप्तस्तत्कार्यं विग्रहेण समाचरेत्।
दुर्योधनश्च कर्णश्च शकुनिश्चापि सौबलः ॥ ८२० ॥
अधर्मयुक्ता दुष्प्रज्ञा बाला मैषां वचः कृथाः।
(अ.२०६) भीष्मः शान्तनवो विद्वान्द्रोणश्च भगवानृषिः ॥ ८२१ ॥
धृत– हितं च परमं वाक्यं त्वं च सत्यं ब्रवीषि माम्।
यथैव मम पुत्राणामिदं राज्यं विधीयते ॥ ८२२ ॥
तथैव पाण्डुपुत्राणामिदं राज्यं न संशयः।
क्षत्तरानय गच्छैतान्सह मात्रा सुसत्कृतान् ॥ ८२३ ॥

तया च देवरूपिण्या कृष्णया सह भारत।
दिष्ट्या जीवन्ति ते पार्थो दिष्ट्या जीवति सा पृथा ॥ ८२४ ॥
दिष्ट्या द्रुपदकन्यां च लब्धवन्तो महारथाः।
ततो जगाम विदुरो धृतराष्ट्रस्य शासनात् ॥ ८२५ ॥
सकाशं यज्ञसेनस्य पाण्डवानां च भारत।
समुपादाय रत्नानि वसूनि विविधानि च ॥ ८२६ ॥
द्रौपद्याः पाण्डवानां च यज्ञसेनस्य चैव ह।
ददर्श पाण्डवास्तत्र वासुदेवं च भारत ॥ ८२७ ॥
विदुर– धृतराष्ट्रः सपुत्रस्त्वां सहामात्यः सबान्धवः।
अब्रवीत्कुशलं राजन्प्रीयमाणः पुनः पुनः ॥ ८२८ ॥
प्रीतिमांस्ते दृढं चापि सम्बन्धेन नराधिप।
एतद्विदित्वा तु भवान्प्रस्थापयतु पाण्डवान् ॥ ८२९ ॥
द्रष्टुं हि पाण्डुपुत्रांश्च त्वरन्ति कुरवो भृशम्।

## पाण्डवानामर्धराज्यप्राप्तिः

(अ २०७) ततस्ते समनुज्ञाता द्रुपदेन महात्मना ॥ ८३० ॥
पाण्डवाश्चैव कृष्णश्च विदुरश्च महीपते।
आदाय द्रौपदीं कृष्णां कुन्तीं चैव यशस्विनीम् ॥ ८३१ ॥
सविहारं सुखं जग्मुर्नगरं नागसाह्वयम्।
ततस्ते धृतराष्ट्रस्य भीष्मस्य च महात्मनः ॥ ८३२ ॥
अन्येषां च तदर्हाणां चक्रुः पादाभिवन्दनम्।
विश्रान्तास्ते महात्मानः कस्मिन्काले महाबलाः ॥ ८३३ ॥
आहूता धृतराष्ट्रेण राज्ञा शान्तनवेन च।
धृत– भ्रातृभिः सह कौन्तेय निबोध गदतो मम ॥ ८३४ ॥
अर्धं राज्यस्य सम्प्राप्य खाण्डवप्रस्थमाविश।
प्रतिगृह्य तु तद्वाक्यं नृपं सर्वे प्रणम्य च ॥ ८३५ ॥

प्रतस्थिरे ततो घोरं वनं तन्मनुजर्षभाः।
अर्धं राज्यस्य संप्राप्य खाण्डवप्रस्थमाविशन् ॥ ८३६ ॥
ततस्ते पाण्डवास्तत्र गत्वा कृष्णपुरोगमाः।
मण्डयाञ्चक्रिरे तद्वै परं स्वर्गवदच्युताः ॥ ८३७ ॥
विरोचमानं विविधैः पाण्डुरैर्भवनोत्तमैः।
तत्त्रिविष्टपसंकाशमिन्द्रप्रस्थं व्यरोचत ॥ ८३८ ॥
पञ्चभिस्तैर्महेष्वासैरिन्द्रकल्पैः समन्वितम्।
शुशुभे तत्पुरश्रेष्ठं नागैर्भोगवती यथा ॥ ८३९ ॥
तान्निवेश्य ततो धीरो रामेण सह केशवः।
ययौ द्वारवतीं राजन्पाण्डवानुमते तदा ॥ ८४० ॥

## नारदाज्ञया पाण्डवानां द्रौपदीकृते समयः

(अ.२०८) धृतराष्ट्राभ्यनुज्ञाताः कृष्णया सह पाण्डवाः।
रेमिरे खाण्डवप्रस्थे प्राप्तराज्याः परंतपाः ॥ ८४१ ॥
कुर्वाणाः पौरकार्याणि सर्वाणि पुरुषर्षभाः।
आसाञ्चक्रुर्महार्हेषु पार्थिवेष्वासनेषु च ॥ ८४२ ॥
अथ तेषूपविष्टेषु सर्वेष्वेव महात्मसु।
नारदस्त्वथ देवर्षिराजगाम यदृच्छया ॥ ८४३ ॥
विविक्ते पाण्डवान्सर्वानुवाच भगवानृषिः।
पाञ्चाली भवतामेका धर्मपत्नी यशस्विनी ॥ ८४४ ॥
यथा वो नात्र भेदः स्यात्तथा नीतिर्विधीयताम्।
(अ.२१२) एवमुक्ता महात्मनो नारदेन महर्षिणा ॥ ८४५ ॥
समयं चक्रिरे राजंस्तेऽन्योऽन्यवशमागताः।
समक्षं तस्य देवर्षेर्नारदस्यामितोजसः ॥ ८४६ ॥
द्रौपद्या नः सहासीनानन्योऽन्यं योऽभिदर्शयेत्।
स नो द्वादशवर्षाणि ब्रह्मचारी वने वसेत् ॥ ८४७ ॥

तया च देवरूपिण्या कृष्णया सह भारत।
दिष्ट्या जीवन्ति ते पार्था दिष्ट्या जीवति सा पृथा ॥ ८२४ ॥
दिष्ट्या द्रुपदकन्यां च लब्धवन्तो महारथाः।
ततो जगाम विदुरो धृतराष्ट्रस्य शासनात् ॥ ८२५ ॥
सकाशं यज्ञसेनस्य पाण्डवानां च भारत।
समुपादाय रत्नानि वसूनि विविधानि च ॥ ८२६ ॥
द्रौपद्याः पाण्डवानां च यज्ञसेनस्य चैव ह।
ददर्श पाण्डवांस्तत्र वासुदेवं च भारत ॥ ८२७ ॥
विदुर- धृतराष्ट्रः सपुत्रस्त्वां सहामात्यः सबान्धवः।
अब्रवीत्कुशलं राजन्प्रीयमाणः पुनः पुनः ॥ ८२८ ॥
प्रीतिमांस्ते दृढं चापि सम्बन्धेन नराधिप।
एतद्विदित्वा तु भवान्प्रस्थापयतु पाण्डवान् ॥ ८२९ ॥
द्रष्टुं हि पाण्डुपुत्रांश्च त्वरन्ति कुरवो भृशम्।

### पाण्डवानामर्धराज्यप्राप्तिः

(अ २०७) ततस्ते समनुज्ञाता द्रुपदेन महात्मना ॥ ८३० ॥
पाण्डवाश्चैव कृष्णश्च विदुरश्च महीपते।
आदाय द्रौपदीं कृष्णां कुन्तीं चैव यशस्विनीम् ॥ ८३१ ॥
सविहारं सुखं जग्मुर्नगरं नागसाह्वयम्।
ततस्ते धृतराष्ट्रस्य भीष्मस्य च महात्मनः ॥ ८३२ ॥
अन्येषां च तदर्हाणां चक्रुः पादाभिवन्दनम्।
विश्रान्तास्ते महात्मानः कञ्चित्कालं महाबलाः ॥ ८३३ ॥
आहूता धृतराष्ट्रेण राज्ञा शान्तनवेन च।
धृत- भ्रातृभिः सह कौन्तेय निबोध गदतो मम ॥ ८३४ ॥
अर्धं राज्यस्य सम्प्राप्य खाण्डवप्रस्थमाविश।
प्रतिगृह्य तु तद्वाक्यं नृपं सर्वे प्रणम्य च ॥ ८३५ ॥

प्रतस्थिरे ततो घोरं घनं तन्मनुजर्षभाः।
अर्धं राज्यस्य संप्राप्य खाण्डवप्रस्थमाविशन् ॥ ८३६ ॥
ततस्ते पाण्डवास्तत्र गत्वा कृष्णपुरोगमाः।
मण्डयांचक्रिरे तद्वै पुरं स्वर्गवदच्युताः ॥ ८३७ ॥
विरोचमानं विविधैः पाण्डुरैर्भवनोत्तमैः।
तत्त्रिविष्टपसंकाशमिन्द्रप्रस्थं व्यरोचत ॥ ८३८ ॥
पञ्चभिस्तैर्महेष्वासैरिन्द्रकल्पैः समन्वितम्।
शुशुभे तत्पुरश्रेष्ठं नागैर्भोगवती यथा ॥ ८३९ ॥
तान्निवेश्य ततो धीरो रामेण सह केशवः।
ययौ द्वारवतीं राजन्पाण्डवानुमते तदा ॥ ८४० ॥

## नारदाज्ञया पाण्डवानां द्रौपदीकृते समयः

(अ.२०८) धृतराष्ट्राभ्यनुज्ञाताः कृष्णया सह पाण्डवाः।
रेमिरे खाण्डवप्रस्थे प्राप्तराज्याः परंतपाः ॥ ८४१ ॥
कुर्वाणाः पौरकार्याणि सर्वाणि पुरुषर्षभाः।
आसांचक्रुर्महार्हेषु पार्थिवेष्वासनेषु च ॥ ८४२ ॥
अथ तेषूपविष्टेषु सर्वेष्वेव महात्मसु।
नारदस्त्वथ देवर्षिराजगाम यदृच्छया ॥ ८४३ ॥
विविक्ते पाण्डवान्सर्वानुवाच भगवानृषिः।
पाञ्चाली भवतामेका धर्मपत्नी यशस्विनी ॥ ८४४ ॥
यथा वो नात्र भेदः स्यात्तथा नीतिर्विधीयताम्।
(अ.२१२) एवमुक्ता महात्मानो नारदेन महर्षिणा ॥ ८४५ ॥
समयं चक्रिरे राजंस्तेऽन्योऽन्यवशमागताः।
समक्षं तस्य देवर्षेर्नारदस्यामितौजसः ॥ ८४६ ॥
द्रौपद्या नः सहासीनानन्योऽन्यं योऽभिदर्शयेत्।
स नो द्वादशवर्षाणि ब्रह्मचारी वने वसेत् ॥ ८४७ ॥

कृते तु समये तस्मिन्पाण्डवैर्धर्मचारिभिः।
नारदोऽप्यगमत्प्रीत इष्टं देशं महामुनिः ॥ ८४८ ॥

## अर्जुनकृतं ब्राह्मणगवां मोक्षणम्

(अ.२११) एवं ते समयं कृत्वा न्यवसंस्तत्र पाण्डवाः।
वशे शस्त्रप्रतापेन कुर्वन्तोऽन्यान्महीक्षितः ॥ ८४९ ॥
अथ दीर्घेण कालेन ब्राह्मणस्य विशाम्पते।
कस्यचित्तस्करा जह्रुः केचिद्गा नृपसत्तम ॥ ८५० ॥
ह्रियमाणे धने तस्मिन्ब्राह्मणः क्रोधमूर्च्छितः।
आगम्य खाण्डवप्रस्थमुदक्रोशत्स पाण्डवान् ॥ ८५१ ॥
ह्रियते गोधनं क्षुद्रैर्नृशंसैरकृतात्मभिः।
प्रसह्य चास्मद्विषयादभ्यधावत पाण्डवाः ॥ ८५२ ॥
रोरूयमाणस्याभ्याशे भृशं विप्रस्य पाण्डवः।
तानि वाक्यानि शुश्राव कुन्तीपुत्रो धनञ्जयः ॥ ८५३ ॥
श्रुत्वैव च महाबाहुर्माभैरित्याह तं द्विजम्।
आयुधानि च यत्रासन्पाण्डवानां महात्मनाम् ॥ ८५४ ॥
कृष्णया सह तत्रास्ते धर्मराजो युधिष्ठिरः।
संप्रवेशाय चाशक्तो गमनाय च पाण्डवः ॥ ८५५ ॥
तस्य चार्तस्य तैर्वाक्यैश्चोद्यमानः पुनः पुनः।
आक्रन्दे तत्र कौन्तेयश्चिन्तयामास दुःखितः ॥ ८५६ ॥
ह्रियमाणे धने तस्मिन्ब्राह्मणस्य तपस्विनः।
अश्रुप्रमार्जनं तस्य कर्तव्यमिति निश्चयः ॥ ८५७ ॥
अनुप्रवेशे राज्ञस्तु वनवासो भवेन्मम।
सर्वमन्यत्परिहृतं धर्षणात्तु महीपतेः ॥ ८५८ ॥
अधर्मो वै महानस्तु वने वा मरणं मम।
शरीरस्य विनाशेन धर्म एव विशिष्यते ॥ ८५९ ॥

एवं विनिश्चित्य ततः कुन्तीपुत्रो धनञ्जयः।
अनुप्रविश्य राजानमापृच्छ्य च विशाम्पते ॥ ८६० ॥
सोऽनुसृत्य महाबाहुर्धन्वी वर्मी रथी ध्वजी।
शरैर्विध्वस्य तांश्चौरानवजित्य च तद्धनम् ॥ ८६१ ॥
ततस्तद्गोधनं पार्थो दत्वा तस्मै द्विजातये।
आजगाम पुरं वीरः सव्यसाची धनञ्जयः ॥ ८६२ ॥
धर्मराजमुवाचेदं व्रतमादिश मे प्रभो।
समयः समतिक्रान्तो भवत्सन्दर्शने मया ॥ ८६३ ॥
वनवासं गमिष्यामि समयो ह्येष नः कृतः।
इत्युक्तो धर्मराजस्तु सहसा वाक्यमप्रियम् ॥ ८६४ ॥
उवाच दीनो राजा च धनञ्जयमिदं वचः।
गुरोरनुप्रवेशो हि नोपघातो यवीयसः ॥ ८६५ ॥
यवीयसोऽनुप्रवेशो ज्येष्ठस्य विधिलोपकः।
निवर्तस्व महाबाहो कुरुष्व वचनं मम ॥ ८६६ ॥
न हि ते धर्मलोपोऽस्ति न च ते धर्षणा कृता।
अर्जुन– न व्याजेन चरेद्धर्ममिति मे भवतः श्रुतम् ॥ ८६७ ॥
न सत्याद्विचलिष्यामि सत्येनायुधमालभे।
सोभ्यनुज्ञाय राजानं वनचर्याय दीक्षितः ॥ ८६८ ॥
वने द्वादश वर्षाणि वासायानुजगाम ह।

## अर्जुनस्य तीर्थयात्रा

(अ.२१४) तं प्रयान्तं महाबाहुं कौरवाणां यशस्करम् ॥ ८६९ ॥
अनुजग्मुर्महात्मानो ब्राह्मणा वेदपारगाः।
सरितः सागरांश्चैव देशानपि च भारत ॥ ८७० ॥
पुण्यान्यपि च तीर्थानि ददर्श भरतर्षभः।
(अ.२१५) प्रययौ हिमवत्पार्श्वं ततो वज्रधरात्मजः ॥ ८७१ ॥

दृष्टवान्पाण्डवश्रेष्ठः पुण्यान्यायतनानि च ।
अवतीर्य नरश्रेष्ठो ब्राह्मणैः सह भारत ॥ ८७२ ॥
प्राचीं दिशमभिप्रेप्सुर्जगाम भरतर्षभः ।
आनुपूर्व्येण तीर्थानि दृष्टवान्कुरुसत्तमः ॥ ८७३ ॥
(अ.२१६) ततः समुद्रे तीर्थानि दक्षिणे भरतर्षभ ।
अभ्यगच्छत्सुपुण्यानि शोभितानि तपस्विभिः ॥ ८७४ ॥
(अ.२१८) समुद्रे पश्चिमे यानि तीर्थान्यायतनानि च ।
तानि सर्वाणि गत्वा स प्रभासमुपजग्मिवान् ॥ ८७५ ॥
प्रभासदेशं संप्राप्तं बीभत्सुमपराजितम् ।
सुपुण्यं रमणीयं च शुश्राव मधुसूदनः ॥ ८७६ ॥
ततोऽभ्यगच्छत्कौन्तेयं सखायं तत्र माधवः ।
ददृशाते तदान्योन्यं प्रभासे कृष्णपाण्डवौ ॥ ८७७ ॥
ततोऽर्जुनं वासुदेवस्तां चर्यां पर्यपृच्छत ।
किमर्थं पाण्डवैतानि तीर्थान्यनुचरस्युत ॥ ८७८ ॥
ततोऽर्जुनो यथावृत्तं सर्वमाख्यातवांस्तदा ।
तौ विहृत्य यथाकामं प्रभासे कृष्णपाण्डवौ ॥ ८७९ ॥
महीधरं रैवतकं वासायैवाभिजग्मतुः ।
स कृत्वाऽवश्यकर्माणि वार्ष्णेयेनाभिनन्दितः ॥ ८८० ॥
रथेन काञ्चनाङ्गेन द्वारकामभिजग्मिवान् ।
कृष्णस्य भवने रम्ये रत्नभोज्यसमावृते ॥ ८८१ ॥
उवास सह कृष्णेन बहुलास्तत्र शर्वरीः ।

## सुभद्राहरणम्

(अ.२१९) ततः कतिपयाहस्य तस्मिन्रैवतके गिरौ ॥ ८८२ ॥
वृष्ण्यन्धकानामभवदुत्सवो नृपसत्तम ।
चित्रकौतूहले तस्मिन्वर्तमाने महाद्भुते ॥ ८८३ ॥

वासुदेवश्च पार्थश्च सहितौ परिजग्मतुः।
तत्र चङ्क्रममाणौ तौ वसुदेवसुतां शुभाम् ॥ ८८४ ॥
अलङ्कृतां सखीमध्ये भद्रां ददृशतुस्तदा।
दृष्ट्वैव तामर्जुनस्य कन्दर्पः समजायत ॥ ८८५ ॥
तं तदैकाग्रमनसं कृष्णः पार्थमलक्षयत्।
अब्रवीत्पुरुषव्याघ्रः प्रहसन्निव भारत ॥ ८८६ ॥
वनेचरस्य किमिदं कामेनालोड्यते मनः।
ममैषा भगिनी पार्थ सारणस्य सहोदरा ॥ ८८७ ॥
सुभद्रा नाम भद्रं ते पितुर्मे दयिता सुता।
यदि ते वर्तते बुद्धिर्वक्ष्यामि पितरं स्वयम् ॥ ८८८ ॥
अर्जुन- दुहिता वसुदेवस्य वासुदेवस्य च स्वसा।
रूपेण चेषा संपन्ना कमिनेया न मोहयेत् ॥ ८८९ ॥
प्राप्तौ तु क उपायः स्यात्तं ब्रवीहि जनार्दन।
आस्यास्यामि तदा सर्वं यदि शक्यं नरेण तत् ॥ ८९० ॥
वासु- स्वयंवरः क्षत्रियाणां विवाहः पुरुषर्षभ।
स च संशयितः पार्थ स्वभावस्यानिमित्ततः ॥ ८९१ ॥
प्रसह्य हरणं चापि क्षत्रियाणा प्रशस्यते।
विवाहहेतुः शूराणामिति धर्मविदो विदुः ॥ ८९२ ॥
स त्वमर्जुन कल्याणीं प्रसह्य भगिनीं मम।
हर स्वयंवरे ह्यस्याः को वै वेद चिकीर्षितम् ॥ ८९३ ॥
ततोऽर्जुनश्च कृष्णश्च विनिश्चित्येतिकृत्यताम्।
शीघ्रगान्पुरुषानन्यान्प्रेषयामासतुस्तदा ॥ ८९४ ॥
धर्मराजाय तत्सर्वमिन्द्रप्रस्थगताय वै।
श्रुत्वैव च महाबाहुरनुजज्ञे स पाण्डवः ॥ ८९५ ॥
(अ.२२०) ततः संवादिते तस्मिन्ननुज्ञातो धनंजयः।
कृष्णस्य मतमादाय प्रययौ भरतर्षभ ॥ ८९६ ॥

रथेन काञ्चनाङ्गेन कल्पितेन यथाविधि।
सुभद्रा त्वथशैलेन्द्रमभ्यर्च्यैव हि रैवतम् ॥ ८९७ ॥
प्रदक्षिणं गिरेः कृत्वा प्रययौ द्वारकां प्रति।
तामभिद्रुत्य कौन्तेयः प्रसह्यारोपयद्रथम् ॥ ८९८ ॥
सुभद्रां चारुसर्वाङ्गीं कामबाणप्रपीडितः।
ततः स पुरुषव्याघ्रस्तामादाय शुचिस्मिताम् ॥ ८९९ ॥
रथेन काञ्चनाङ्गेन प्रययौ स्वपुरं प्रति।
ततोऽब्रवीद्वासुदेवं वचो रामः परन्तपः ॥ ९०० ॥
किमवाङ्मुखो विष्टोऽसि प्रेक्षमाणो जनार्दन।
सत्कृतस्त्वत्कृते पार्थः सर्वैरस्माभिरच्युत ॥ ९०१ ॥
न च सोऽर्हति ता पूजां दुर्बुद्धिः कुलपांसनः।
को हि तत्रैव भुक्त्वान्नं भाजनं भेत्तुमर्हति ॥ ९०२ ॥
प्रसह्य हृतवानद्य सुभद्रां मृत्युमात्मनः।
कथं हि शिरसो मध्ये कृतं तेन पदं मम ॥ ९०३ ॥
न हि मे मर्षणीयोऽयमर्जुनस्य व्यतिक्रमः।
(अ.२२१) ततोऽब्रवीद्वासुदेवो वाक्यं धर्मार्थसंयुतम् ॥ ९०४ ॥
नावमानं कुलस्यास्य गुडाकेशः प्रयुक्तवान्।
संमानोऽभ्यधिकस्तेन प्रयुक्तोऽयं न संशयः ॥ ९०५ ॥
अर्थलुब्धान्न वः पार्थो मन्यते सात्वतान्सदा।
स्वयंवरमनाधृष्यं मन्यते चापि पाण्डवः ॥ ९०६ ॥
प्रदानमपि कन्यायाः पशुवत्कोनु मन्यते।
विक्रयं चाप्यपत्यस्य कः कुर्यात्पुरुषो भुवि ॥ ९०७ ॥
एतान्दोषांस्तु कौन्तेयो दृष्टवानिति मे मतिः।
अतः प्रसह्य हृतवान्कन्यां धर्मेण पाण्डवः ॥ ९०८ ॥
न च पश्यामि यः पार्थं विजयेत रणे बलात्।
तमभिद्रुत्य सान्त्वेन परमेण धनञ्जयम् ॥ ९०९ ॥

न्यवर्तयत संहृष्टा ममैषा परमा मतिः।
तच्छ्रुत्वा वासुदेवस्य तथा चक्रुर्जनाधिप ॥ ९१० ॥
निवृत्तश्चार्जुनस्तत्र विवाहं कृतवान्प्रभुः।
उषित्वा तत्र कौन्तेयः संवत्सरपराः क्षपाः ॥ ९११ ॥
पुष्करे तु ततः शेषं कालं वर्तितवान्प्रभुः।
पूर्णे तु द्वादशे वर्षे खाण्डवप्रस्थमागतः ॥ ९१२ ॥
श्रुत्वा तु पुण्डरीकाक्षः संप्राप्तं स्वं पुरोत्तमम्।
अर्जुनं पाण्डवश्रेष्ठमिन्द्रप्रस्थगतं तदा ॥ ९१३ ॥
आजगाम विशुद्धात्मा सह रामेण केशवः।
वृष्ण्यन्धकमहामात्रैः सह वीरैर्महारथैः ॥ ९१४ ॥
रामः पाणिग्रहणिकं ददौ पार्थाय लाङ्गली।
प्रीयमाणो हलधरः सम्बन्धं प्रतिमानयन् ॥ ९१५ ॥
प्रतिजग्राह तत्सर्वं धर्मराजा युधिष्ठिरः।
पूजयामास तांश्चैव वृष्ण्यन्धकमहारथान् ॥ ९१६ ॥
ते समेता महात्मानः कुरुवृष्ण्यन्धकोत्तमाः।
विजह्रुरमरावासे नराः सुकृतिनो यथा ॥ ९१७ ॥
एवमुत्तमवीर्यास्ते विहृत्य दिवसान्बहून्।
पूजिताः कुरुभिर्जग्मुः पुनर्द्वारवतीं प्रति ॥ ९१८ ॥
वासुदेवस्तु पार्थेन तत्रैव सह भारत।
उवास नगरे रम्ये शक्रप्रस्थे महात्मना ॥ ९१९ ॥
ततः सुभद्रा सौभद्रं केशवस्य प्रिया स्वसा।
जयन्तमिव पौलोमी ख्यातिमन्तमजीजनत् ॥ ९२० ॥
अभिश्च मन्युमांश्चैव ततस्तमरिमर्दनम्।
अभिमन्युमिति प्राहुरार्जुनिं पुरुषर्षभम् ॥ ॥ ९२१ ॥
पाञ्चाल्यपि तु पञ्चभ्यः पतिभ्यः शुभलक्षणा।
लेभे पञ्चसुतान्वीरान् श्रेष्ठान्पञ्चाचलानिव ॥ ९२२ ॥

युधिष्ठिरात्प्रतिविन्ध्यं सुतसोमं वृकोदरात्।
अर्जुनाच्छ्रुतकर्माणं शतानीकं च नाकुलिम्॥ ९२३॥
सहदेवाच्छ्रुतसेनमेतान्पञ्चमहारथान्।
पाञ्चाली सुषुवे वीरानादित्यानदितिर्यथा॥ ९२४॥

## खाण्डवदाहः

(अ.२२२) तत कतिपयाहस्य बीभत्सु कृष्णमब्रवीत्।
उष्णानि कृष्ण वर्तन्ते गच्छावो यमुनां प्रति॥ ९२५॥
आमन्त्र्य तौ धर्मराजमनुज्ञाप्य च भारत।
जग्मतु पार्थगोविन्दो सुहृज्जनवृतो तत॥ ९२६॥
तत्रोपविष्टो मुदितो नाकपृष्ठेऽश्विनाविव।
अभ्यागच्छत्तदा विप्रो वासुदेवधनञ्जयौ॥ ९२७॥
(अ.२२३) सोऽब्रवीदर्जुनं चैव वासुदेवं च सात्वतम्।
भिक्षे वार्ष्णेयपार्थौ वामेकां तृप्तिं प्रयच्छतम्॥ ९२८॥
नाहमन्नं बुभुक्षे वे पावकं मा निबोधतम्।
इदमिन्द्र सदा दावं खाण्डवं परिरक्षति॥ ९२९॥
न च शक्नोम्यहं दग्धुं रक्ष्यमाणं महात्मना।
स युवाभ्यां सहायाभ्यामस्त्रविद्भ्यां समागत॥ ९३०॥
दहेयं खाण्डवं दावमेतदन्नं वृतं मया।
(अ २२४) उत्तमास्त्राणि मे सन्ति दिव्याणि च बहूनि च॥ ९३१॥
अर्जुन- धनुर्मे नास्ति भगवन्बाहुवीर्येण संमितम्।
शरैश्च मेर्थो बहुभिरक्षयै क्षिप्रमस्यत॥ ९३२॥
न हि वोढु रथं शक्त शरान्मम यथेप्सितान्।
पौरुषेण तु यत्कार्यं तत्कर्तारौ स्व पावक॥ ९३३॥
करणानि समर्थानि भगवन्दातुमर्हसि।
(अ.२२५) एवमुक्त स भगवान्धूमकेतुर्हुताशन॥ ९३४॥

प्रादाच्चैव धनूरत्नमक्षय्यौ च महेषुधी।
रथं च दिव्याश्वयुजं कपिप्रवरकेतनम् ॥ ९३५ ॥
वज्रनाभं ततश्चक्रं ददौ कृष्णाय पावकः।
ततः पावकमब्रूतां प्रहृष्टावर्जुनाच्युतौ ॥ ९३६ ॥
सर्वतः परिवार्येवं दावमेतं महाप्रभो।
कामं संप्रज्वलायैव कल्पौ स्वः साह्यकर्मणि ॥ ९३७ ॥
एवमुक्तः स भगवान्दाशार्हेणार्जुनेन च।
तैजसं रूपमास्थाय दावं दग्धुं प्रचक्रमे ॥ ९३८ ॥
(अ.२२१) ततोऽक्षमात्रा व्यसृजन्धाराः शतसहस्रशः।
चोदिता देवराजेन जलदाः खाण्डवं प्रति ॥ ९३९ ॥
(अ.२२७) तस्याथ वर्षतो वारि पाण्डवः प्रत्यवारयत्।
शरवर्षेण बीभत्सुरुत्तमास्त्राणि दर्शयन् ॥ ९४० ॥
अश्वसेनोऽभवत्तत्र तक्षकस्य सुतो बली।
स यत्नमकरोत्तीव्रं मोक्षार्थं जातवेदसः ॥ ९४१ ॥
न शशाक स निर्गन्तुं निरुद्धोऽर्जुनपत्रिभिः।
मोक्षयामास तं माता निगीर्य भुजगात्मजा ॥ ९४२ ॥
तस्य पूर्वं शिरो ग्रस्तं पुच्छमस्य निगीर्यते।
निगीर्यमाणा साक्रामत्सुतं नागी मुमुक्षया ॥ ९४३ ॥
तस्याः शरेण तीक्ष्णेन पृथुधारेण पाण्डवः।
शिरश्चिच्छेद गच्छन्त्यास्तामपश्यच्छचीपतिः ॥ ९४४ ॥
तं मुमोचयिषुर्वज्री वातवर्षेण पाण्डवम्।
मोहयामास तत्कालमश्वसेनस्त्वमुच्यत ॥ ९४५ ॥
(अ.२२८) तथासुरं मयं नाम तक्षकस्य निवेशनात्।
विप्रद्रवन्तं सहसा ददर्श मधुसूदनः ॥ ९४६ ॥
विज्ञाय दानवेन्द्राणां मयं वै शिल्पिनां वरम्।
जिघांसुर्वासुदेवस्तं चक्रमुद्यम्य चिष्ठित. ॥ ९४७ ॥

स चक्रमुद्यतं दृष्ट्वा दिधक्षन्तं च पावकम्।
अभिधावार्जुनेत्येवं मयस्त्राहीति चाब्रवीत्॥ ९४८ ॥
तस्य भीतस्वनं श्रुत्वा मा भैरिति धनञ्जयः।
प्रत्युवाच मयं पार्थो जीवयन्निव भारत॥ ९४९ ॥
तं पार्थेनाभये दत्ते नमुचेर्भ्रातरं मयम्।
न हन्तुमैच्छद्दाशार्हः पावको न ददाह च॥ ९५० ॥
तद्वनं पावको धीमान्दिनानि दश पञ्च च।
ददाह कृष्णपार्थाभ्यां रक्षितः पाकशासनात्॥ ९५१ ॥

## उपकथा १ शिष्यपरीक्षा

(अ.१) कश्चिदृषिर्धौम्यो नामापोदस्तस्य शिष्यास्त्रयो बभूवुः॥ १॥

उपमन्युरारुणिर्वेदश्चेति स एकं शिष्यमारुणिं पाञ्चाल्यं प्रेषयामास गच्छ केदारखण्डं बधानेति॥ २॥

स उपाध्यायेन सन्दिष्ट आरुणिः पाञ्चाल्यस्तत्र गत्वा तत्केदारखण्डं बद्धुं नाशकत्॥ ३॥

स क्लिश्यमानोपश्यदुपायं भवत्वेवं करिष्यामि। स तत्र संविवेश केदारखण्डे शयाने च तथा तस्मिंस्तदुदकं तस्थौ॥ ४॥

ततः कदाचिदुपाध्याय आपोदो धौम्यः शिष्यानपृच्छत् क्व आरुणिः पाञ्चाल्यो गत इति॥ ५॥

ते तं प्रत्यूचुर्भगवंस्त्वयैव प्रेषितो गच्छ केदारखण्डं बधानेति। स एवमुक्तस्तान् शिष्यान् प्रत्युवाच तस्मात्तत्र सर्वे गच्छामो यत्र स गत इति॥ ६॥

स तत्र गत्वा तस्याह्वानाय शब्दं चकार भो आरुणे पाञ्चाल्य क्वासि वत्सेहीति॥ ७॥

स तच्छ्रुत्वा आरुणिरुपाध्यायवाक्यं तस्मात्केदारखण्डात्सहसोत्थाय तमुपाध्यायमुपतस्थे॥ ८॥

प्रोवाच चैनमयमस्यत्र केदारखण्डे निःसरमाणमुदकमवारणीयं संरोद्धुं संविष्टो भगवच्छब्दं श्रुत्वैव सहसा विदार्य केदारखण्डं भवन्तमुपस्थितः ॥ ९ ॥

तदभिवादये भगवन्तमाज्ञापयतु भवान्कमर्थं करवाणीति ॥१०॥

स एवमुक्त उपाध्यायः प्रत्युवाच यस्माद्भवान्केदारखण्डं विदार्योत्थितस्तस्मादुद्दालक एव नाम्ना भवान्भविष्यतीत्युपाध्यायेनानुगृहीतः ॥ ११ ॥

यस्माच्च त्वया मद्वचनमनुष्ठितं तस्माच्छ्रेयोऽवाप्स्यसि। सर्वे च ते वेदाः प्रतिभास्यन्ति सर्वाणि च धर्मशास्त्राणीति ॥ १२ ॥

स एवमुक्त उपाध्यायेनेष्टं देशं जगाम। अथापरः शिष्यस्तस्यैवायोदस्य धौम्यस्योपमन्युर्नाम ॥ १३ ॥

तं चोपाध्यायः प्रेषयामास वत्सोपमन्यो गा रक्षस्वेति ॥ १४ ॥

स उपाध्यायवचनादरक्षद्गाः स चाहनि गा रक्षित्वा दिवसक्षये गुरुगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे ॥ १५ ॥

तमुपाध्यायः पीवानमपश्यदुवाच चैनं वत्सोपमन्यो केन वृत्तिं कल्पयसि पीवानसि दृढमिति ॥ १६ ॥

स उपाध्यायं प्रत्युवाच भो भैक्ष्येण वृत्तिं कल्पयामीति ॥ १७ ॥

तमुपाध्यायः प्रत्युवाच मय्यनिवेद्य भैक्ष्यं नोपयोक्तव्यमिति। स तथेत्युक्तो भैक्ष्यं चरित्वोपाध्यायाय न्यवेदयत् ॥ १८ ॥

स तस्मादुपाध्यायः सर्वमेव भैक्ष्यमगृह्णात्। स तथेत्युक्तः पुनररक्षद्गाः अहनि रक्षित्वा निशामुखे गुरुकुलमागम्य गुरोरग्रतः स्थित्वा नमश्चक्रे ॥ १९ ॥

तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वोवाच। वत्सोपमन्यो सर्वमशेषतस्ते भैक्ष्यं गृह्णामि केनेदानीं वृत्तिं कल्पयसीति ॥ २० ॥

स एवमुक्त उपाध्यायं प्रत्युवाच। भगवते निवेद्य पूर्वमपरं चरामि तेन वृत्तिं कल्पयामीति ॥ २१ ॥

तमुपाध्याय प्रत्युवाच नैषा न्याय्या गुरुवृत्तिरन्येषामपि भैक्ष्योपजीविना वृत्युपरोधं करोषि इत्येव वर्तमानो लुब्धोऽसीति ॥ २२ ॥

स तथेत्युक्त्वा गा अरक्षत्। रक्षित्वा च पुनरुपाध्यायगृहमागम्योपाध्यायस्याग्रत स्थित्वा नमश्चक्रे ॥ २३ ॥

तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वा पुनरुवाच। वत्सोपमन्यो अहं ते सर्वं भैक्ष्यं गृह्णामि न चान्यच्चरसि पीवानसि भृशं केन वृत्तिं कल्पयसीति। स एवमुक्तस्तमुपाध्याय प्रत्युवाच। भो एतासां गवां पयसा वृत्तिं कल्पयामीति। तमुवाचोपाध्यायो नैतन्न्याय्य पय उपभोक्तु भवतो मया नाभ्यनुज्ञातमिति ॥ २४ ॥

स तथेति प्रतिज्ञाय गा रक्षित्वा पुनरुपाध्यायगृहमेत्य गुरोरग्रत स्थित्वा नमश्चक्रे ॥ २५ ॥

तमुपाध्याय पीवानमेव दृष्ट्वोवाच। वत्सोपमन्यो भैक्ष्य नाश्नासि न चान्यच्चरसि पयो न पिबसि पीवानसि भृश केनेदानीं वृत्तिं कल्पयसीति ॥ २६ ॥

स एवमुक्त उपाध्याय प्रत्युवाच। भो फेन पिबामि यमिमे वत्सा मातृणा स्तनात्पिबन्त उद्गिरन्ति ॥ २७ ॥

तमुपाध्याय प्रत्युवाच। एते त्वदनुकम्पया गुणवन्तो वत्सा प्रभूततर फेनमुद्गिरन्ति। तदेषामपि वत्साना वृत्त्युपरोध करोष्येव वर्तमान। फेनमपि भवान्न पातुमर्हसीति। स तथेति प्रतिश्रुत्य पुनररक्षद्गा ॥ २८ ॥

तथा प्रतिषिद्धो भैक्ष्य नाश्नाति न चान्यच्चरति पयो न पिबति फेन नोपयुङ्क्ते स कदाचिदरण्ये क्षुधार्तोऽर्कपत्राण्यभक्षयत् ॥ २९ ॥

स तैरर्कपत्रैर्भक्षितै क्षारतिक्तकटुरूक्षैस्तीक्ष्णविपाकैश्चक्षुष्युपहतोऽन्धो बभूव। तत सोऽन्धोऽपि चङ्क्रम्यमाण कूपे पपात ॥३०॥

अथ तस्मिन्ननागच्छति सूर्ये चास्ताचलावलम्बिनि उपाध्याय शिष्यानवोचत्। नायात्युपमन्युस्त ऊचुर्वन गतो गा रक्षितुमिति।

तानाह उपाध्यायः मयोपमन्युः सर्वतः प्रतिषिद्धः स नियतं कुपितस्ततो नागच्छति चिरं ततोऽन्वेष्य इत्येवमुक्त्वा शिष्यैः सार्धमरण्यं गत्वा तस्याह्वानाय शब्दं चकार। भो उपमन्यो क्वासि वत्सैहीति॥३१॥

स उपाध्यायवचनं श्रुत्वा प्रत्युवाचोच्चैरयमस्मिन्कूपे पतितोऽहमिति तमुपाध्यायः प्रत्युवाच कथं त्वमस्मिन्कूपे पतित इति। स उपाध्यायं प्रत्युवाच।

अर्कपत्राणि भक्षयित्वाऽन्धीभूतोऽस्म्यतः कूपे पतित इति॥३२॥

तमुपाध्यायः प्रत्युवाच। अश्विनौ स्तुहि। तौ देवभिषजौ त्वां चक्षुष्मन्तं कर्ताराविति। स एवमुक्त उपाध्यायेनोपमन्युरश्विनौ स्तोतुमुपचक्रमे॥ ३३॥

प्रपूर्वगौ पूर्वजौ चित्रभानू<br>गिरा वाऽऽशंसामि तपसा ह्यनन्तौ।<br>दिव्यौ सुपर्णौ विरजौ विमाना-<br>वधिक्षिपन्तौ भुवनानि विश्वा॥ ३४॥<br>तौ नासत्यावश्विनौ वां महेऽहं<br>स्रजं च यां बिभृथः पुष्करस्य।<br>तौ नासत्यावमृतावृतावृधा-<br>वृते देवास्तत्प्रपदे न सूते॥ ३५॥<br>स्तोतुं न शक्नोमि गुणैर्भवन्तौ<br>चक्षुर्विहीनः पथि संप्रमोहः।<br>दुर्गेहमस्मिन्पतितोऽस्मि कूपे<br>युवां शरण्यौ शरणं प्रपद्ये॥ ३६॥

तमश्विनावाहतुः प्रीतौ स्वस्तवानया गुरुभक्त्या चक्षुष्मांश्च भविष्यसीति। श्रेयश्चावाप्स्यसीति॥ ३७॥

स एवमुक्तोऽश्विभ्यां लब्धचक्षुरुपाध्यायसकाशमागम्याभ्यवादयत्॥ ३८॥

आचचक्षे च स चास्य प्रीतिमान्बभूव। आह चैनं यथाश्विना वाहतुस्तथा त्वं श्रेयोऽवाप्स्यसि ॥ ३९ ॥

सर्वे च ते वेदाः प्रतिभास्यन्ति सर्वाणि च धर्मशास्त्राणीति। एषा तस्यापि परीक्षोपमन्योः ॥ ४० ॥

अथापरः शिष्यस्तस्यैवापोदस्य धौम्यस्य वेदो नाम। तमुपाध्यायः समादिदेश ॥ ४१ ॥

वत्स वेद इहास्यतां तावन्मम गृहे कञ्चित्कालं शुश्रूषुणा च भवितव्यं श्रेयस्ते भविष्यतीति ॥ ४२ ॥

स तथेत्युक्त्वा गुरुकुले दीर्घकालं गुरुशुश्रूषणपरोऽवसत् गौरिव नित्यं गुरुणा धूर्षु नियोज्यमानः शीतोष्णक्षुत्तृष्णादुःखसहः सर्वत्राप्रतिकूलस्तस्य महता कालेन गुरुः परितोषं जगाम ॥ ४३ ॥

तत्परितोषाच्च श्रेयः सर्वज्ञतां चावाप।
एषा तस्यापि परीक्षा वेदस्य ॥ ४४ ॥

स उपाध्यायेनानुज्ञातः समावृत्तस्तस्माद्गुरुकुलवासाद्गृहाश्रमं प्रत्यपद्यत। तस्यापि स्वगृहे वसतस्त्रयः शिष्या बभूवुः स शिष्यान्न किंचिदुवाच कर्म वा क्रियतां गुरुशुश्रूषा चेति। दुःखाभिज्ञो हि गुरुकुलवासस्य शिष्यान्परिक्लेशेन योजयितुं नेयेष ॥ ४५ ॥ ९९६ ॥

## उपकथा २ शकुन्तलोपाख्यानम्

(अ.६८) पौरवाणां वंशकरो दुष्यन्तो नाम वीर्यवान्।
पृथिव्याश्चतुरन्ताया गोप्ता भरतसत्तम ॥ १ ॥

(अ.६९) स कदाचिन्महाबाहुः प्रभूतबलवाहनः।
निर्ययौ परमप्रीत्या वनं मृगजिघांसया ॥ २ ॥

(अ.७०) ततो मृगसहस्राणि हत्वा सबलवाहनः।
राजा मृगप्रसङ्गेन वनमन्यद्विवेश ह ॥ ३ ॥

पुष्पितैः पादपैः कीर्णमतीव सुखशाद्वलम्।
विपुलं मधुरारावैर्नादितं विहगैस्तथा ॥ ४ ॥
पुंस्कोकिलनिनादैश्च झिल्लीकगणनादितम्।
प्रवृद्धविटपैर्वृक्षैः सुखच्छायैः समावृतम् ॥ ५ ॥
षट्पदाघूर्णिततलं लक्ष्म्या परमया युतम्।
नापुष्पः पादपः कश्चिन्नाफलो नापि कण्टकी ॥ ६ ॥
षट्पदैर्नाप्यपाकीर्णस्तस्मिन्वै काननेऽभवत्।
विहगैर्नादितं पुष्पैरलङ्कृतमतीव च ॥ ७ ॥
सर्वर्तुकुसुमैर्वृक्षैः सुखच्छायैः समावृतम्।
मारुताकलितास्तत्र द्रुमाः कुसुमशाखिनः
पुष्पवृष्टिं विचित्रां तु व्यसृजंस्ते पुनः पुनः ॥ ८ ॥
दिवस्पृशोऽथ संघुष्टाः पक्षिभिर्मधुरस्वनैः।
विरेजुः पादपास्तत्र विचित्रकुसुमाम्बराः ॥ ९ ॥
तेषां तत्र प्रवालेषु पुष्पभारावनामिषु।
रुवन्ति रावान्मधुरान्षट्पदा मधुलिप्सवः ॥ १० ॥
परस्पराश्लिष्टशाखैः पादपैः कुसुमान्वितैः।
अशोभत वनं तत्तु महेन्द्रध्वजसंनिभैः ॥ ११ ॥
सुखः शीतः सुगन्धी च पुष्परेणुवहोऽनिलः।
परिक्रामन्वने वृक्षानुपैतीव रिरंसया ॥ १२ ॥
प्रेक्षमाणो वनं तत्तु सुप्रहृष्टविहङ्गमम्।
आश्रमप्रवरं रम्यं ददर्श च मनोरमम् ॥ १३ ॥
नदीं चाश्रमसंश्लिष्टां पुण्यतोयां ददर्श सः।
सर्वप्राणभृतां तत्र जननीमिव धिष्ठिताम् ॥ १४ ॥
सचक्रवाकपुलिनां पुष्पफेनप्रवाहिनीम्।
सकिंनरगणावासां वानरर्क्षनिषेविताम् ॥ १५ ॥

पुण्यस्वाध्यायसंघुष्टां पुलिनैरुपशोभिताम्।
मत्तवारणशार्दूलभुजगेन्द्रनिषेविताम् ॥ १६ ॥
नदीमाश्रमसम्बद्धां दृष्ट्वाश्रमपदं तथा।
चकाराभिप्रवेशाय मतिं स नृपतिस्तदा ॥ १७ ॥
अलङ्कृतं द्वीपवत्या मालिन्या रम्यतीरया।
नरनारायणस्थानं गङ्गयेवोपशोभितम् ॥ १८ ॥
महर्षिं काश्यपं द्रष्टुमथ कण्वं तपोधनम्।
अवस्थाप्य वनद्वारि सेनामिदमुवाच स ॥ १९ ॥
मुनिं विरजसं द्रष्टुं गमिष्यामि तपोधनम्।
काश्यपं स्थीयतामत्र यावदागमनं मम ॥ २० ॥
सामात्यो राजलिङ्गानि सोपनीय नराधिप।
पुरोहितसहायश्च जगामाश्रममुत्तमम् ॥ २१ ॥
षट्पदोद्गीतसङ्घुष्टं नानाद्विजगणायुतम्।
ऋचो बह्वृचमुख्यैश्च प्रेर्यमाणाः पदक्रमैः ॥ २२ ॥
शुश्राव मनुजव्याघ्रो विततेष्विह कर्मसु।
यज्ञविद्याङ्गविद्भिश्च यजुर्विद्भिश्च शोभितम् ॥ २३ ॥
मधुरैः सामगीतैश्च ऋषिभिर्नियतव्रतैः।
यतात्मभिः सुनियतैः शुशुभे स तदाश्रमः ॥ २४ ॥
अथर्ववेदप्रवराः पूगयज्ञियसामगाः।
संहितामीरयन्ति स्म पदक्रमयुतां तु ते ॥ २५ ॥
शब्दसंस्कारसंयुक्तैर्ब्रुवद्भिश्चापरैर्द्विजैः।
नादितः स बभौ श्रीमान्ब्रह्मलोक इवापरः ॥ २६ ॥
तत्र तत्र च विप्रेन्द्रान्नियतान्संशितव्रतान्।
जपहोमपरान्विप्रान्ददर्श परवीरहा ॥ २७ ॥
देवतायतनानां च प्रेक्ष्य पूजां कृतां द्विजैः।
ब्रह्मलोकस्थमात्मानं मेने स नृपसत्तमः ॥ २८ ॥

(अ.७१) ततोऽगच्छन्महाबाहुरेकोऽमात्यान्विसृज्य तान्।
नापश्यच्चाश्रमे तस्मिंस्तमृषिं संशितव्रतम् ॥ २९ ॥
उवाच क इहेत्युच्चैर्वनं सन्नादयन्निव।
श्रुत्वाऽथ तस्य तं शब्दं कन्या श्रीरिव रूपिणी ॥ ३० ॥
निश्चक्रामाश्रमात्तस्मात्तापसीवेषधारिणी।
पप्रच्छानामयं राजन्कुशलं च नराधिपम् ॥ ३१ ॥
तामब्रवीत्ततो राजा कन्यां मधुरभाषिणीम्।
आगतोऽहं महाभागमृषिं कण्वमुपासितुम् ॥ ३२ ॥
क्व गतो भगवान्भद्रे तन्ममाचक्ष्व शोभने।

शकुन्तला– गतः पिता मे भगवान्फलान्याहर्तुमाश्रमात् ॥ ३३ ॥,
मुहूर्तं संप्रतीक्षस्व द्रष्टास्येनमुपागतम्।

दुष्यन्त– ऊर्ध्वरेता महाभागे भगवांल्लोकपूजितः ॥ ३४ ॥
कथं त्वं तस्य दुहिता संभूता वरवर्णिनी।

शकुन्तला– ऋषिः कश्चिदिहागम्य मम जन्माभ्यचोदयत् ॥ ३५ ॥
तस्मै प्रोवाच भगवान्यथा तच्छृणु पार्थिव।

कण्व– तप्यमानः किल पुरा विश्वामित्रो महत्तपः ॥ ३६ ॥
सुभृशं तापयामास शक्रं सुरगणेश्वरम्।
तपसा दीप्तवीर्योऽयं स्थानान्मां च्यावयेदिति ॥ ३७ ॥
भीतः पुरंदरस्तस्मान्मेनकामिदमब्रवीत्।
असावादित्यसङ्काशो विश्वामित्रो महातपाः ॥ ३८ ॥
तप्यमानस्तपो घोरं मम कम्पयते मनः।
लोभयित्वा वरारोहे तपसस्तं निवर्तय ॥ ३९ ॥

मेनका– महातेजाः स भगवांस्तथैव च महातपाः।
त्वमप्युद्विजसे यस्य नोद्विजेयमहं कथम् ॥ ४० ॥
त्वयैवमुक्ता च कथं समीप-
मृषेर्न गच्छेयमहं सुरेन्द्र।

रक्षां तु मे चिन्तय देवराज
यथा त्वदर्थं रक्षिताऽहं चरेयम् ॥ ४१ ॥
वनाच्च वायुः सुरभिः प्रवाया-
त्तस्मिन्काले तमृषिं लोभयन्त्याः।
तथेत्युक्त्वा विहिते चैव तस्मि-
स्ततो ययौ साश्रमं कौशिकस्य ॥ ४२ ॥
(अ.७२) अभिवाद्य ततः सा तं प्राक्रीडदृषिसंनिधौ।
तस्या रूपगुणान् दृष्ट्वा स तु विप्रर्षभस्तदा ॥ ४३ ॥
चकार भावं संसर्गात्तया कामवशं गतः।
न्यमन्त्रयत चाप्येनां सा चाप्यैच्छदनिन्दिता ॥ ४४ ॥
तौ तत्र सुचिरं कालमुभौ व्यहरतां तदा।
जनयामास स मुनिर्मेनकायां शकुन्तलाम् ॥ ४५ ॥
जातमुत्सृज्य तं गर्भं मेनका मालिनीमनु।
कृतकार्या ततस्तूर्णमगच्छच्छक्रसंसदम् ॥ ४६ ॥
तं वने विजने गर्भं सिंहव्याघ्रसमाकुले।
दृष्ट्वा शयानं शकुनाः समन्तात्पर्यवारयन् ॥ ४७ ॥
पर्यरक्षन्त तां तत्र शकुन्ता मेनकात्मजाम्।
उपस्प्रष्टुं गतश्चाहमपश्यं शयितामिमाम् ॥ ४८ ॥
आनयित्वा ततश्चैनां दुहितृत्वे न्यवेशयम्।
निर्जने तु वने यस्माच्छकुन्तैः परिवारिता ॥ ४९ ॥
शकुन्तलेति नामास्याः कृतं चापि ततो मया।
शकुन्तला- एतदाचष्ट पृष्टः सन्मम जन्म महर्षये ॥ ५० ॥
सुतां कण्वस्य मामेवं विद्धि त्वं मनुजाधिप।
(अ.७३) सुव्यक्तं राजपुत्री त्वं यथा कल्याणि भाषसे ॥ ५१ ॥
दुष्यंत- भार्या मे भव सुश्रोणि ब्रूहि किं करवाणि ते।
गान्धर्वेण च मां भीरु विवाहेनैहि सुंदरि ॥ ५२ ॥

विवाहानां हि रम्भोरु गान्धर्वः श्रेष्ठ उच्यते ।
आत्मनैवात्मनो दानं कर्तुमर्हसि धर्मतः ॥ ५३ ॥
शकुन्तला– यदि धर्मपथस्त्वेष यदि चात्मा प्रभुर्मम ।
प्रदाने पौरवश्रेष्ठ शृणु मे समयं प्रभो ॥ ५४ ॥
मयि जायेत यः पुत्रः स भवेत्त्वदनन्तरः ।
युवराजो महाराज सत्यमेतद्ब्रवीमि ते ॥ ५५ ॥
एवमस्त्विति तां राजा प्रत्युवाचाऽविचारयन् ।
जग्राह विधिवत्पाणावुवास च तया सह ॥ ५६ ॥
विश्वास्य चैनां स प्रायादब्रवीच्च पुनः पुनः ।
प्रेषयिष्ये तवार्थाय वाहिनीं चतुरङ्गिणीम् ॥ ५७ ॥
तया त्वानाययिष्यामि निवासं स्वं शुचिस्मिते ।
इति तस्याः प्रतिश्रुत्य स नृपो जनमेजय ॥ ५८ ॥
मनसा चिन्तयन्प्रायात्काश्यपं प्रति पार्थिवः ।
मुहूर्तयाते तस्मिंस्तु कण्वोऽप्याश्रममागमत् ॥ ५९ ॥
विज्ञायाथ च तां कण्वो दिव्यज्ञानो महातपाः ।
उवाच भगवान्प्रीतः पश्यन्दिव्येन चक्षुषा ॥ ६० ॥
त्वयाद्य भद्रे रहसि मामनादृत्य यः कृतः ।
पुंसा सह समायोगो न स धर्मोपघातकः ॥ ६१ ॥
महात्मा जनिता लोके पुत्रस्तव महाबलः ।
य इमां सागरापाङ्गीं कृत्स्नां भोक्ष्यति मेदिनीम् ॥ ६२ ॥
(अ.७४) प्रतिज्ञाय तु दुष्यन्ते प्रतियाते शकुन्तलाम् ।
गर्भं सुषाव वामोरूः कुमारममितौजसम् ॥ ६३ ॥
त्रिषु वर्षेषु पूर्णेषु दीप्यन्तं जनमेजय ।
जातकर्मादिसंस्कारं कण्वः पुण्यकृतां वरः ॥ ६४ ॥
विधिवत्कारयामास वर्धमानस्य धीमतः ।
षड्वर्ष एव बालः स कण्वाश्रमपदं प्रति ॥ ६५ ॥

सिंहव्याघ्रान्वराहांश्च महिषांश्च गजांस्तथा।
बबन्ध वृक्षे बलवानाश्रमस्य समीपतः ॥ ६६ ॥
ततोऽस्य नाम चक्रुस्ते कण्वाश्रमनिवासिनः।
अस्त्वयं सर्वदमनः सर्वं हि दमयत्यसौ ॥ ६७ ॥
तस्य तद्बलमाज्ञाय कण्वः शिष्यानुवाच ह।
शकुन्तलामिमां शीघ्रं सहपुत्रामितो गृहात् ॥ ६८ ॥
भर्तुः प्रापयतागारं सर्वलक्षणपूजिताम्।
नारीणां चिरवासो हि बान्धवेषु न रोचते ॥ ६९ ॥
कीर्तिचारित्रधर्मघ्नस्तस्मान्नयत मा चिरम्।
तथेत्युक्त्वा तु ते सर्वे प्रातिष्ठन्त महौजसः ॥ ७० ॥
शकुन्तलां पुरस्कृत्य सपुत्रां गजसाह्वयम्।
निवेदयित्वा ते सर्वे आश्रमं पुनरागताः ॥ ७१ ॥
पूजयित्वा यथान्यायमब्रवीच्च शकुन्तला।
अयं पुत्रस्त्वया राजन्यौवराज्येऽभिषिच्यताम् ॥ ७२ ॥
त्वया ह्ययं सुतो राजन्मय्युत्पन्नः सुरोपमः।
यथा मत्सङ्गमे पूर्वं यः कृतः समयस्तथा ॥ ७३ ॥
तं स्मरस्व महाभाग कण्वाश्रमपदं प्रति।
सोऽथ श्रुत्वैव तद्वाक्यं तस्या राजा स्मरन्नपि ॥ ७४ ॥
अब्रवीन्न स्मरामीति कस्य त्वं दुष्टतापसि।
गच्छ वा तिष्ठ वा कामं यद्वापीच्छसि तत्कुरु ॥ ७५ ॥
सैवमुक्ता वरारोहा व्रीडितेव तपस्विनी।
कटाक्षैर्निर्दहन्तीव तिर्यग्राजानमैक्षत ॥ ७६ ॥
सा मुहूर्तमिव ध्यात्वा दुःखामर्षसमन्विता।
भर्तारमभिसंप्रेक्ष्य क्रुद्धा वचनमब्रवीत् ॥ ७७ ॥
जानन्नपि महाराज कस्मादेवं प्रभाषसे।
न जानामीति निःशङ्कं यथान्यः प्राकृतो जनः ॥ ७८ ॥

अत्र ते हृदयं वेद सत्यस्यैवानृतस्य च।
कल्याणं वद साक्ष्येण मात्मानमवमन्यथाः ॥ ७९ ॥
योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते।
किं तेन न कृतं पापं चौरेणात्मापहारिणा ॥ ८० ॥
स्वयंप्राप्तेति मामेवं मावमंस्थाः पतिव्रताम्।
अर्चार्हां नार्चयसि मां स्वयं भार्यामुपस्थिताम् ॥ ८१ ॥
अर्धं भार्या मनुष्यस्य भार्या श्रेष्ठतमः सखा।
भार्या मूलं त्रिवर्गस्य भार्या मूलं तरिष्यतः ॥ ८२ ॥
सखायः प्रविविक्तेषु भवन्त्येताः प्रियंवदाः।
पितरो धर्मकार्येषु भवन्त्यार्तस्य मातरः ॥ ८३ ॥
सुसंरब्धोऽपि रामाणां न कुर्यादप्रियं नरः।
रतिं प्रीतिं च धर्मं च तास्वायत्तमवेक्ष्य हि ॥ ८४ ॥
प्रतिपद्य यदा सूनुर्धरणीरेणुगुण्ठितः।
पितुराश्लिष्यतेऽङ्गानि किमस्त्यभ्यधिकं ततः ॥ ८५ ॥
स त्वं स्वयमभिप्राप्तं साभिलाषमिमं सुतम्।
प्रेक्षमाणं कटाक्षेण किमर्थमवमन्यसे ॥ ८६ ॥
अण्डानि बिभ्रति स्वानि न भिन्दन्ति पिपीलिकाः।
न भरेथाः कथं नु त्वं धर्मज्ञः सन्स्वमात्मजम् ॥ ८७ ॥
कामं त्वया परित्यक्ता गमिष्यामि स्वमाश्रमम्।
इमं तु बालं सन्त्यक्तुं नार्हस्यात्मजमात्मनः ॥ ८८ ॥

दुष्यन्त– न पुत्रमभिजानामि त्वयि जातं शकुन्तले।
असत्यवचना नार्यः कस्ते श्रद्धास्यते वचः ॥ ८९ ॥
सर्वमेतत्परोक्षं मे यत्त्वं वदसि तापसि।
नाहं त्वामभिजानामि यथेष्टं गम्यतां त्वया ॥ ९० ॥

शकुन्तला– राजन्सर्षपमात्राणि परच्छिद्राणि पश्यसि।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यसि ॥ ९१ ॥

सर्ववेदाधिगमनं सर्वतीर्थावगाहनम् ।
सत्यं च वचनं राजन्समं वा स्याद्व वा समम् ॥ ९२ ॥
नास्ति सत्यसमो धर्मो न सत्याद्विद्यते परम् ।
न हि तीव्रतरं किञ्चिदनृतादिह विद्यते ॥ ९३ ॥
अनृते चेत्प्रसङ्गस्ते श्रद्दधासि न चेत्स्वयम् ।
आत्मना हन्त गच्छामि त्वादृशेनास्ति सङ्गतम् ॥ ९४ ॥
त्वामृतेऽपि हि दुष्यन्त शैलराजावतंसकाम् ।
चतुरन्तामिमामुर्वीं पुत्रो मे पालयिष्यति ॥ ९५ ॥
एतावदुक्त्वा राजानं प्रातिष्ठत शकुन्तला ।
अथान्तरिक्षाद्दुष्यन्तं वागुवाचाशरीरिणी ॥ ९६ ॥
भरस्व पुत्रं दुष्यन्त मावमंस्थाः शकुन्तलाम् ।
त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला ॥ ९७ ॥
तच्छ्रुत्वा पौरवो राजा व्याहृतं त्रिदिवौकसाम् ।
पुरोहितममात्यांश्च संप्रहृष्टोऽब्रवीदिदम् ॥ ९८ ॥
शृण्वन्त्वेतद्भवन्तोऽस्य देवदूतस्य भाषितम् ।
अहं चाप्येवमेवेनं जानामि स्वयमात्मजम् ॥ ९९ ॥
यद्यहं वचनादेव गृह्णीयामि स्वमात्मजम् ।
भवेद्धि शङ्क्यो लोकस्य नैव शुद्धो भवेदयम् ॥ १०० ॥
तं विशोध्य तदा राजा देवदूतेन भारत ।
हृष्टः प्रमुदितश्चापि प्रतिजग्राह तं सुतम् ॥ १०१ ॥
दुष्यन्तस्तु तदा राजा पुत्रं शाकुन्तलं तदा ।
भरतं नामतः कृत्वा यौवराज्येऽभ्यषेचयत् ॥ १०२ ॥ १०९८ ॥

## उपकथा २ कचदेवयान्युपाख्यानम् ।

(अ.७६) सुराणामसुराणां च समजायत वै मिथः ।
वैशम्पायन— ऐश्वर्यं प्रतिसङ्घर्षस्त्रैलोक्ये सचराचरे ॥ १ ॥

जिगीषया ततो देवा वव्रिरेऽङ्गिरसं मुनिम्।
पौरोहित्येन याज्यार्थे काव्यं तूशनसं परे ॥ २ ॥
ब्राह्मणौ तावुभौ नित्यमन्योन्यस्पर्धिनौ भृशम्।
तत्र देवा निजघ्नुर्यान्दानवान्युधि सङ्गतान् ॥ ३ ॥
तान्पुनर्जीवयामास काव्यो विद्याबलाश्रयात्।
ततस्ते पुनरुत्थाय योधयाञ्चक्रिरे सुरान् ॥ ४ ॥
असुरास्तु निजघ्नुर्यान्सुरान्समरमूर्धनि।
न तान्सञ्जीवयामास बृहस्पतिरुदारधीः ॥ ५ ॥
न हि वेद स तां विद्यां यां काव्यो वेत्ति वीर्यवान्।
सञ्जीविनीं ततो देवा विषादमगमन्परम् ॥ ६ ॥
ते तु देवा भयोद्विग्नाः काव्यादुशनसस्तदा।
ऊचुः कचमुपागम्य ज्येष्ठं पुत्रं बृहस्पतेः ॥ ७ ॥
या सा विद्या निवसति ब्राह्मणेऽमिततेजसि।
शुक्रे तामाहर क्षिप्रं भागभाङ्नो भविष्यसि ॥ ८ ॥
वृषपर्वसमीपे हि शक्यो द्रष्टुं त्वया द्विजः।
तथेत्युक्त्वा ततः प्रायाद्बृहस्पतिसुतः कचः ॥ ९ ॥
असुरेन्द्रपुरे शुक्रं दृष्ट्वा वाक्यमुवाच ह।
ऋषेरङ्गिरसः पौत्रं पुत्रं साक्षाद्बृहस्पतेः ॥ १० ॥
नाम्ना कचमिति ख्यातं शिष्यं गृह्णातु मां भवान्।
शुक्र- कच सुस्वागतं तेऽस्तु प्रतिगृह्णामि ते वचः ॥ ११ ॥
अर्चयिष्येऽहमर्च्यं त्वामर्चितोऽस्तु बृहस्पतिः।
कचस्तु तं तथेत्युक्त्वा प्रतिजग्राह तद्व्रतम् ॥ १२ ॥
आदिष्टं कविपुत्रेण शुक्रेणोशनसा स्वयम्।
पञ्चवर्षशतान्येवं कचस्य चरतो व्रतम् ॥ १३ ॥
तत्रातीयुरथो बुद्ध्वा दानवास्तं ततः कचम्।
गा रक्षन्तं वने दृष्ट्वा रहस्येकममर्षिताः ॥ १४ ॥

जघ्नुर्बृहस्पतेर्द्वेषाद्विद्यारक्षार्थमेव च।
हत्वा शालावृकेभ्यश्च प्रायच्छँल्लवशः कृतम्॥ १५॥
ततो गावो निवृत्तास्ता अगोपाः स्वं निवेशनम्।
देवयानी- आहुतं चाग्निहोत्रं ते सूर्यश्चास्तं गतः प्रभो॥ १६॥
अगोपाश्चागता गाव कचस्तात न दृश्यते।
तं विना न च जीवेयमिति सत्यं ब्रवीमि ते॥ १७॥
शुक्र- अयमेहीति संशब्द्य मृत सञ्जीवयाम्यहम्।
तत. सञ्जीविनीं विद्यां प्रयुज्य कचमाह्वयत्॥ १८॥
भित्वा भित्वा शरीराणि वृकाणां स विनिर्गत।
स पुनर्देवयान्योक्त पुष्पाहारो यदृच्छया॥ १९॥
वनं ययौ कचो विप्रो ददृशुर्दानवाश्च तम्।
पुनस्त पेषयित्वा तु समुद्राम्भस्यमिश्रयन्॥ २०॥
चिरं गते पुन. कन्या पित्रे त संन्यवेदयत्।
विप्रेण पुनराहूतो विद्यया गुरुदेहज.॥ २१॥
पुनरावृत्य तद्वृत्त न्यवेदयत तद्यथा।
ततस्तृतीयं हत्वा त दग्ध्वा कृत्वा च चूर्णश.॥ २२॥
प्रायच्छन्ब्राह्मणायैव सुरायामसुरास्तथा।
देवयान्यथ भूयोऽपि पितरं वाक्यमब्रवीत्।
तं विना न च जीवेय कच सत्यं ब्रवीमि ते॥ २३॥
स पीडितो देवयान्या महर्षि.
समाह्वयत्संरम्भाच्चैव काव्यः।
गुरोर्हि भीतो विद्यया चोपहूतः
शनैर्वाक्यं जठरे व्याजहार॥ २४॥
असुरैः सुरायां भवतोऽस्मि दत्तो
हत्वा दग्ध्वा चूर्णयित्वा च काव्य।

शुक्र- किं ते प्रियं करवाण्यद्य वत्से
वधेन मे जीवितं स्यात्कचस्य ॥ २५ ॥
नान्यत्र कुक्षेर्मम भेदनेन
दृश्येत्कचो मद्गतो देवयानि ।
देवयानी- द्वौ मां शोकावग्निकल्पौ दहेताम्
कचस्य नाशस्तव चैवोपघातः ॥ २६ ॥
कचस्य नाशे मम शर्म नास्ति
तवोपघाते जीवितुं नास्मि शक्ता ।
शुक्र- संसिद्धरूपोऽसि बृहस्पतेः सुत
यत्त्वां भक्तं भजते देवयानी ।
विद्यामिमां प्राप्नुहि जीवनीं त्वं
न चेदिन्द्रः कचरूपी त्वमद्य ॥ २७ ॥
न निवर्तेत्पुनर्जीवन्कश्चिदन्यो ममोदरात् ।
ब्राह्मणं वर्जयित्वैकं तस्माद्विद्यामवाप्नुहि ॥ २८ ॥
पुत्रो भूत्वा भावय भावितो मा-
मस्माद्देहादुपनिष्क्रम्य तात ।
समीक्षेथा धर्मवतीमवेक्षां
गुरोः सकाशात्प्राप्य विद्यां सविद्यः ॥ २९ ॥
गुरोः सकाशात्समवाप्य विद्यां
भित्त्वा कुक्षिं निर्विचक्राम विप्रः ।
दृष्ट्वा च तं पतितं ब्रह्मराशि-
मुत्थापयामास मृतं कचोऽपि ॥ ३० ॥
सुरापानाद्वञ्चनां प्राप्य विद्वान्
संज्ञानाशं चैव महातिघोरम् ।
सुरापानं प्रति सञ्जातमन्युः
काव्यः स्वयं वाक्यमिदं जगाद ॥ ३१ ॥

यो ब्राह्मणोऽद्यप्रभृतीह कश्चि
न्मोहात्सुरां पास्यति मन्दबुद्धिः ।
अपेतधर्मा ब्रह्महा चैव स स्या
दस्मिँल्लोके गर्हितः स्यात्परे च ॥ ३२ ॥
गुरोरुष्य सकाशे तु दशवर्षशतानि सः ।
अनुज्ञातः कचो गन्तुमियेष त्रिदशालयम् ॥ ३३ ॥
(अ.७७) समावृतव्रतं तं तु विसृष्टं गुरुणा तदा ।
प्रस्थितं त्रिदशावासं देवयान्यब्रवीदिदम् ॥ ३४ ॥
ऋषेरङ्गिरसः पौत्र वृत्तेनाभिजनेन च ।
भ्राजसे विद्यया चैव तपसा च दमेन च ॥ ३५ ॥
स समावृतविद्यो मां भक्तां भजितुमर्हसि ।
गृहाण पाणिं विधिवन्मम मन्त्रपुरस्कृतम् ॥ ३६ ॥
कच- यथा मम गुरुर्नित्यं मान्यः शुक्रः पिता तव ।
देवयानि तथैव त्वं नैवं मां वक्तुमर्हसि ॥ ३७ ॥
देवयानी- असुरैर्हन्यमाने च कच त्वयि पुनः पुनः ।
तदा प्रभृति या प्रीतिस्तां त्वमद्यस्मरस्व मे ॥ ३८ ॥
न मामर्हसि धर्मज्ञ त्यक्तुं भक्तामनागसम् ।
कच- यत्रोषितं विशालाक्षि त्वया चन्द्रनिभानने ॥ ३९ ॥
तत्राहमुषितो भद्रे कुक्षौ काव्यस्य भाविनि ।
भगिनी धर्मतो मे त्वं मैवं वोचः सुमध्यमे ॥ ४० ॥
देवयानी- यदि मां धर्मकामार्थे प्रत्याख्यास्यसि याचितः ।
ततः कच न ते विद्या सिद्धिमेषा गमिष्यति ॥ ४१ ॥
कच- आर्षं धर्मं ब्रुवाणोऽहं देवयानि यथा त्वया ।
शप्तो नार्होऽस्मि शापस्य कामतोऽद्य न धर्मतः ॥ ४२ ॥
तस्माद्भवत्या यः कामो न तथा स भविष्यति ।
ऋषिपुत्रो न ते कश्चिज्जातु पाणिं ग्रहीष्यति ॥ ४३ ॥

फलिष्यति न ते विद्या यत्त्व मामात्थ तत्तथा।
अध्यापयिष्यामि तु यं तस्य विद्या फलिष्यति ॥ ४४ ॥
एवमुक्त्वा द्विजश्रेष्ठो देवयानीं कचस्तदा।
त्रिदशेशालयं शीघ्रं जगाम द्विजसत्तम• ॥ ४५ ॥ ११४३ ॥

## उपकथा ४ ययात्युपाख्यानम् ।

(अ•७८) कृतविद्ये कचे प्राप्ते हृष्टरूपा दिवौकस• ॥ १ ॥
कचादधीत्य तां विद्यां कृतार्था भरतर्षभ।
सर्व एव समागम्य शतक्रतुमथाब्रुवन् ॥ २ ॥
कालस्ते विक्रमस्याद्य जहि शत्रून्पुरन्दर।
एवमुक्तस्तु सहितैस्त्रिदशैर्मघवांस्तदा ॥ ३ ॥
तथेत्युक्त्वा प्रचक्राम सोऽपश्यत वने स्त्रियः।
क्रीडन्तीनां तु कन्यानां वने चैत्ररथोपमे ॥ ४ ॥
वायुभूत• स वस्त्राणि सर्वाण्येव व्यमिश्रयत्।
ततो जलात्समुत्तीर्य कन्यास्ता• सहितास्तदा ॥ ५ ॥
वस्त्राणि जगृहुस्तानि यथासन्नान्यनेकश•।
तत्र वासो देवयान्याः शर्मिष्ठा जगृहे तदा ॥ ६ ॥
व्यतिमिश्रमजानन्ती दुहिता वृषपर्वण•।
देवयानी– कस्माद्गृह्णासि मे वस्त्रं शिष्या भूत्वा ममासुरि ॥ ७ ॥
समुदाचारहीनाया न ते साधु भविष्यति।
शर्मिष्ठा– आसीनं च शयानं च पिता ते पितरं मम ॥ ८ ॥
स्तौति वन्दीव चाभीक्ष्णं नीचै• स्थित्वा विनीतवत्।
याचतस्त्वं हि दुहिता स्तुवत• प्रतिगृह्णत• ॥ ९ ॥
सुताहं स्तूयमानस्य ददतोऽप्रतिगृह्णत•।
आदुन्वस्व विदुन्वस्व द्रुह्य कुप्यस्व भिक्षुकि ॥ १० ॥

शर्मिष्ठया महाभाग दुहित्रा वृषपर्वणः।
श्रुत्वा दुहितरं काव्यस्तत्र शर्मिष्ठया हताम्॥ २४॥
त्वरया निर्ययौ दुःखान्मार्गमाणः सुतां वने।
दृष्ट्वा दुहितरं काव्यो देवयानीं ततो वने॥ २५॥
बाहुभ्यां संपरिष्वज्य दुःखितो वाक्यमब्रवीत्।
आत्मदोषैर्नियच्छन्ति सर्वे दुःखसुखे जनाः॥ २६॥
मन्ये दुश्चरितं तेऽस्ति यस्येयं निष्कृतिः कृता।
देवयानी– निष्कृतिर्मेऽस्तु वा मास्तु शृणुष्वावहितो मम॥ २७॥
एवं हि मे कथयति शर्मिष्ठा वार्षपर्वणी।
स्तुवतो दुहिता नित्यं याचतः प्रतिगृह्णतः॥ २८॥
अहं तु स्तूयमानस्य ददतोऽप्रतिगृह्णतः।
यद्यहं स्तुवतस्तात दुहिता प्रतिगृह्णतः॥ २९॥
प्रसादयिष्ये शर्मिष्ठामित्युक्ता तु सखी मया।
शुक्र– स्तुवतो दुहिता न त्वं याचतः प्रतिगृह्णतः॥ ३०॥
अस्तोतुः स्तूयमानस्य दुहिता देवयान्यसि।
(अ.७९) यः परेषां नरो नित्यमतिवादांस्तितिक्षते॥ ३१॥
देवयानि विजानीहि तेन सर्वमिदं जितम्।
यः समुत्पतितं क्रोधं क्षमयेह निरस्यति॥ ३२॥
यथोरगस्त्वचं जीर्णां स वै पुरुष उच्यते।
यत्कुमाराः कुमार्यश्च वैरं कुर्युरचेतसः॥ ३३॥
न तत्प्राज्ञोऽनुकुर्वीत न विदुस्ते बलाबलम्।
देवयानी– वेदाहं तात बालाऽपि धर्माणां यदिहान्तरम्॥ ३४॥
अक्रोधे चापि वादे च वेद चापि बलाबलम्।
शिष्यस्याशिष्यवृत्तेस्तु न क्षन्तव्यं बुभूषता॥ ३५॥
तस्मात्सङ्कीर्णवृत्तेषु वासो मम न रोचते।
वाग्दुरुक्तं महाघोरं दुहितुर्वृषपर्वणः॥ ३६॥

मम मथ्नाति हृदयमग्निकाम इवारणिम्।
यः सपत्नश्रियं दीप्तां हीनश्रीः पर्युपासते ॥ ३७ ॥
मरणं शोभनं तस्य इति विद्वज्जना विदुः।
(अ.८०) ततः काव्यो भृगुश्रेष्ठः समन्युरुपगम्य ह ॥ ३८ ॥
वृषपर्वाणमासीनमित्युवाचाविचारयन्।
नाधर्मश्चरितो राजन्सद्यः फलति गौरिव ॥ ३९ ॥
शनैरावर्त्यमानो हि कर्तुर्मूलानि कृन्तति।
यद्घातयिथा विप्रं कचमाङ्गिरसं तदा ॥ ४० ॥
वधादनर्हतस्तस्य वधाच्च दुहितुर्मम।
वृषपर्वन्निबोधेदं त्यक्ष्यामि त्वां सबान्धवम् ॥ ४१ ॥
स्थातुं त्वद्विषये राजन्न शक्ष्यामि त्वया सह।
वृषपर्वा– यदस्मानपहाय त्वमितो गच्छसि भार्गव ॥ ४२ ॥
समुद्रं सम्प्रवेक्ष्यामो नान्यदस्ति परायणम्।
शुक्र– समुद्रं प्रविशध्वं वा दिशो वा द्रवतासुराः ॥ ४३ ॥
दुहितुर्नाप्रियं सोढुं शक्तोऽहं दयिता हि मे।
प्रसाद्यतां देवयानी जीवितं यत्र मे स्थितम् ॥ ४४ ॥
वृषपर्वा– यं काममभिकामासि देवयानि शुचिस्मिते।
तत्तेऽहं सम्प्रदास्यामि यदि वापि हि दुर्लभम् ॥ ४५ ॥
देवयानी– दासीं कन्यासहस्रेण शर्मिष्ठामभिकामये।
अनु मां तत्र गच्छेत्सा यत्र दद्याच्च मे पिता ॥ ४६ ॥
वृषपर्वा– उत्तिष्ठ त्वं गच्छ धात्रि शर्मिष्ठां शीघ्रमानय।
यं च कामयते कामं देवयानी करोतु तम् ॥ ४७ ॥
ततो धात्री तत्र गत्वा शर्मिष्ठां वाक्यमब्रवीत्।
उत्तिष्ठ भद्रे शर्मिष्ठे ज्ञातीनां सुखमावह ॥ ४८ ॥
त्यजति ब्राह्मणः शिष्यान्देवयान्या प्रचोदितः।
सा यं कामयते कामं स कार्योऽद्य त्वयाऽनघे ॥ ४९ ॥

शर्मिष्ठा– यं सा कामयते कामं करवाण्यहमद्य तम्।
यद्येवमाह्वयेच्छुक्रो देवयानीकृते हि माम्॥ ५०
मद्दोषान्माऽगमच्छुक्रो देवयानी च मत्कृते।
ततः कन्यासहस्रेण वृता शिबिकया तदा॥ ५१
पितुर्नियोगात्त्वरिता निश्चक्राम पुरोत्तमात्।
शर्मिष्ठा– अहं दासीसहस्रेण दासी ते परिचारिका॥ ५२॥
अनु त्वां तत्र यास्यामि यत्र दास्यति ते पिता।
देवयानी– स्तुवतो दुहिताऽहं ते याचतः प्रतिगृह्णतः॥ ५३॥
स्तूयमानस्य दुहिता कथं दासी भविष्यसि।
शर्मिष्ठा– येन केनचिदार्तानां ज्ञातीनां सुखमावहेत्॥ ५४॥
अतस्त्वामनुयास्यामि यत्र दास्यति ते पिता।
प्रतिश्रुते दासभावे दुहित्रा वृषपर्वणः॥ ५५॥
देवयानी नृपश्रेष्ठ पितरं वाक्यमब्रवीत्।
प्रविशामि पुरं तात तुष्टास्मि द्विजसत्तम॥ ५६॥
अमोघं तव विज्ञानमस्ति विद्या बलं च ते।
एवमुक्तो दुहित्रा स द्विजश्रेष्ठो महायशाः॥ ५७॥
प्रविवेश पुरं हृष्टः पूजितः सर्वदानवैः।
(अ.८१) अथ दीर्घस्य कालस्य देवयानी नृपोत्तम॥ ५८॥
वनं तदेव निर्याता क्रीडार्थं वरवर्णिनी।
तेन दासीसहस्रेण सार्धं शर्मिष्ठया तदा॥ ५९॥
पुनश्च नाहुषो राजा मृगलिप्सुर्यदृच्छया।
तमेव देशं सम्प्राप्तो जलार्थी श्रमकर्शितः॥ ६०॥
ददर्श देवयानीं स शर्मिष्ठां ताश्च योषितः।
ययाति– द्वाभ्यां कन्यासहस्राभ्यां द्वे कन्ये परिवारिते॥ ६१॥
गोत्रे च नामनी चैव द्वयोः पृच्छाम्यहं शुभे।
देवयानी– शुक्रो नामासुरगुरुः सुतां जानीहि तस्य माम्॥ ६२॥

इयं च मे सखी दासी यत्राहं तत्र गामिनी।
दुहिता दानवेन्द्रस्य शर्मिष्ठा वृषपर्वणः ॥ ६३ ॥
राजवद्रूपवेषौ ते ब्राह्मीं वाचं बिभर्षि च।
को नाम त्वं कुतश्चासि कस्य पुत्रश्च शंस मे ॥ ६४ ॥

ययाति– राजाहं राजपुत्रश्च ययातिरिति विश्रुतः।
मृगलिप्सुरहं भद्रे पानीयार्थमुपागतः।

देवयानी– द्वाभ्यां कन्यासहस्राभ्यां दास्या शर्मिष्ठया सह ॥ ६५ ॥
त्वदधीनाऽस्मि भद्रं ते सखा भर्ता च मे भव।

ययाति– विद्ध्यौशनसि भद्रं ते न त्वामर्होऽस्मि भाविनि ॥ ६६ ॥
अविवाह्या हि राजानो देवयानि पितुस्तव।
अतोऽदत्तां च पित्रा त्वां भद्रे न विवहाम्यहम् ॥ ६७ ॥

देवयानी– दत्तां वहस्व तन्मा त्वं पित्रा राजन्वृतो मया।
अयाचतो भयं नास्ति दत्तां च प्रतिगृह्णतः ॥ ६८ ॥
त्वरितं देवयान्याथ सन्दिष्टं पितुरात्मनः।
सर्वं निवेदयामास धात्री तस्मै यथातथम् ॥ ६९ ॥
श्रुत्वैव च स राजानं दर्शयामास भार्गवः।

देवयानी– राजाऽयं नाहुषस्तात दुर्गमे पाणिमग्रहीत् ॥ ७० ॥
नमस्ते देहि मामस्मै लोके नान्यं पतिं वृणे।

शुक्र– वृतोऽनया पतिर्वीर सुतया त्वं ममेष्टया ॥ ७१ ॥
गृहाणेमां मया दत्तां महिषीं नहुषात्मज।
इयं चापि कुमारी ते शर्मिष्ठा वार्षपर्वणी ॥ ७२ ॥
सम्पूज्या सततं राजन्मा चैनां शयने ह्वयेः।
एवमुक्तो ययातिस्तु शुक्रं कृत्वा प्रदक्षिणम् ॥ ७३ ॥
शास्त्रोक्तविधिना राजा विवाहमकरोच्छुभम्।
(अ.८१) ययातिः स्वपुरं प्राप्य महेन्द्रपुरसन्निभम् ॥ ७४ ॥

प्रविश्यान्तःपुरं तत्र देवयानीं न्यवेशयत्।
देवयान्याश्चानुमते सुतां तां वृषपर्वणः ॥ ७५ ॥
अशोकवनिकाभ्याशे गृहं कृत्वा न्यवेशयत्।
देवयान्या तु सहितः स नृपो नहुषात्मजः ॥ ७६ ॥
विजहार बहूनब्दान्देववन्मुदितः सुखी।
ऋतुकाले तु संप्राप्ते देवयानी वराङ्गना ॥ ७७ ॥
लेभे गर्भं प्रथमतः कुमारं च व्यजायत।
गते वर्षसहस्रे तु शर्मिष्ठा वार्षपर्वणी ॥ ७८ ॥
ददर्श यौवनं प्राप्ता ऋतुं सा चान्वचिन्तयत्।
देवयानी प्रजाताऽसौ वृथाऽहं प्राप्तयौवना ॥ ७९ ॥
यथा तया वृतो भर्ता तथैवाहं वृणोमि तम्।
अथ निष्क्रम्य राजासौ तस्मिन्काले यदृच्छया ॥ ८० ॥
अशोकवनिकाभ्याशे शर्मिष्ठां प्रेक्ष्य धिष्ठितः।
तमेकं रहिते दृष्ट्वा शर्मिष्ठा चारुहासिनी ॥ ८१ ॥
प्रत्युद्गम्याञ्जलिं कृत्वा राजानं वाक्यमब्रवीत्।
रूपाभिजनशीलैर्हि त्वं राजन्वेत्थ मां सदा ॥ ८२ ॥
सा त्वां याचे प्रसाद्याहमृतुं देहि नराधिप।
ययाति– अब्रवीदुशना काव्यो देवयानीं यदावहम् ॥ ८३ ॥
नेयमाह्वयितव्या ते शयने वार्षपर्वणी ॥ ८४ ॥
शर्मिष्ठा– न नर्मयुक्तं वचनं हिनस्ति
न स्त्रीषु राजन्न विवाहकाले।
प्राणात्यये सर्वधनापहारे
पञ्चानृतान्याहुरपातकानि ॥ ८५ ॥
ययाति– दातव्यं याचमानेभ्य इति मे व्रतमाहितम्।
त्वं च याचसि मां कामं ब्रूहि किं करवाणि ते ॥ ८६ ॥

शर्मिष्ठा– त्रय एवाधना राजन्भार्या दासस्तथा सुतः।
यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम् ॥ ८७ ॥
देवयान्या भुजिष्यास्मि वश्या च तव भार्गवी।
सा चाहं च त्वया राजन्भजनीये भजस्व माम् ॥ ८८ ॥
स समागम्य शर्मिष्ठां यथाकाममवाप्य च।
अन्योऽन्यं चाभिसंपूज्य जग्मतुस्तौ यथागतम् ॥ ८९ ॥
(अ.८३) ययातिर्देवयान्यां तु पुत्रावजनयन्नृपः।
यदुं च तुर्वसुं चैव शक्रविष्णू इवापरौ ॥ ९० ॥
तस्मादेव तु राजर्षेः शर्मिष्ठा वार्षपर्वणी।
द्रुह्युं चानुं च पूरुं च त्रीन्कुमारानजीजनत् ॥ ९१ ॥
ततः काले तु कस्मिंश्चिद्देवयानी शुचिस्मिता।
ययातिसहिता राजञ्जगाम रहितं वनम् ॥ ९२ ॥
ददर्श च तदा तत्र कुमारान्देवरूपिणः।
देवयानी– किं नामधेयं वंशो च पुत्रकाः कश्च वः पिता ॥ ९३ ॥
प्रब्रूत मे यथातथ्यं श्रोतुमिच्छामि तं ह्यहम्।
तेऽदर्शयन्प्रदेशिन्या तमेव नृपसत्तमम् ॥ ९४ ॥
शर्मिष्ठां मातरं चैव तथाचख्युश्च दारकाः।
इत्युक्त्वा सहितास्ते तु राजानमुपचक्रमुः ॥ ९५ ॥
नाभ्यनन्दत तान्राजा देवयान्यास्तदान्तिके।
रुदन्तस्तेऽथ शर्मिष्ठामभ्ययुर्बालकास्ततः ॥ ९६ ॥
श्रुत्वा तु तेषां बालानां सव्रीड इव पार्थिवः।
दृष्ट्वा तु तेषां बालानां प्रणयं पार्थिवं प्रति ॥ ९७ ॥
बुद्ध्वा च तत्त्वं सा देवी शर्मिष्ठामिदमब्रवीत्।
मदधीना सती कस्मादकार्षीर्विप्रियं मम ॥ ९८ ॥
तमेवासुरधर्मं त्वमास्थिता न बिभेषि मे।
शर्मिष्ठा– न्यायतो धर्मतश्चैव चरन्ती न बिभेमि ते ॥ ९९ ॥

यदा त्वया वृतो भर्ता वृत एव तदा मया।
सखीभर्ता हि धर्मेण भर्ता भवति शोभने ॥ १०० ॥
श्रुत्वा तस्यास्ततो वाक्य देवयान्यब्रवीदिदम्।
राजन्नाद्येह वत्स्यामि विप्रियं मे कृतं त्वया ॥ १०१ ॥
सहसोत्पतितां श्यामां दृष्ट्वा तां साश्रुलोचनाम्।
अनुवव्राज सम्भ्रान्त॰ पृष्ठतः सान्त्वयन्नृपः ॥ १०२ ॥
अविब्रुवन्ती किञ्चित्सा राजान साश्रुलोचना।
अचिरादेव सम्प्राप्ता काव्यस्योशनसोऽन्तिकम् ॥ १०३ ॥
सा तु दृष्ट्वैव पितरमभिवाद्याग्रतः स्थिता।
अनन्तरं ययातिस्तु पूजयामास भार्गवम् ॥ १०४ ॥

देवयानी– अधर्मेण जितो धर्म॰ प्रवृत्तमधरोत्तरम्।
शर्मिष्ठयाऽतिवृत्ताऽस्मि दुहिता वृषपर्वण॰ ॥ १०५ ॥
त्रयोऽस्यां जनिता॰ पुत्रा राज्ञाऽनेन ययातिना
दुर्भगाया मम द्वौ तु पुत्रौ तात ब्रवीमि ते ॥ १०६ ॥
धर्मज्ञ इति विख्यात एष राजा भृगूद्वह।
अतिक्रान्तश्च मर्यादां काव्यैतत्कथयामि ते ॥ १०७ ॥

शुक्र– धर्मज्ञ॰ सन्महाराज योऽधर्ममकृथा॰ प्रियम्।
तस्माज्जरा त्वामचिराद्धर्षयिष्यति दुर्जया ॥ १०८ ॥
क्रुद्धेनोशनसा शप्तो ययातिर्नाहुषस्तदा।
पूर्वं वयः परित्यज्य जरां सद्योऽन्वपद्यत ॥ १०९ ॥

ययाति– अतृप्तो यौवनस्याहं देवयान्यां भृगूद्वह।
प्रसादं कुरु मे ब्रह्मञ्जरेयं न विशेच्च माम् ॥ ११० ॥

शुक्र– नाहं मृषा ब्रवीम्येतज्जरां प्राप्तोऽसि भूमिप।
जरां त्वेतां त्वमन्यस्मिन्सङ्क्रामय यदीच्छसि ॥ १११ ॥

ययाति– राज्यभाक्स भवेद्ब्रह्मन्पुण्यभाक्कीर्तिभाक्तथा।
यो मे दद्याद्वय॰ पुत्रस्तद्भवाननुमन्यताम् ॥ ११२ ॥

शुक- वयो दास्यति ते पुत्रो य· स राजा भविष्यति।
आयुष्मान्कीर्तिमांश्चैव बह्वपत्यस्तथैव च ॥ ११३ ॥

(अ०८५) पौरवेणाथ वयसा ययातिर्नहुषात्मज·।
प्रीतियुक्तो नृपश्रेष्ठश्चचार विषयान्प्रियान् ॥ ११४ ॥

पूर्णं मत्वा तत· कालं पूरुं पुत्रमुवाच ह।
पूरो प्रीतोऽस्मि भद्रं ते गृहाणेदं स्वयौवनम् ॥ ११५ ॥

राज्यं चेदं गृहाण त्व त्वं हि मे प्रियकृत्सुत·।
प्रतिपेदे जरां राजा ययातिर्नाहुषस्तदा ॥ ११६ ॥

यौवनं प्रतिपेदे च पूरु· स्वं पुनरात्मन·।
अभिषेक्तुकामं नृपतिं पूरुं पुत्र कनीयसम् ॥ ११७ ॥

ब्राह्मणप्रमुखा वर्णा इदं वचनमब्रुवन्।
कथं ज्येष्ठानतिक्रम्य कनीयान्राज्यमर्हति ॥ ११८ ॥

एतत्सम्बोधयामस्त्वां धर्मं त्व प्रतिपालय।

ययाति- यदुनाहमवज्ञातस्तथा तुर्वसुनाऽपि च ॥ ११९ ॥
द्रुह्युना चानुना चैव मय्यवज्ञा कृता भृशम्
पूरुणा तु कृत वाक्य मानितं च विशेषत ।
कनीयान्मम दायादो धृता येन जरा मम ॥ १२० ॥
मम काम· स च कृतः पूरुणा मित्ररूपिणा।
शुक्रेण च वरो दत्त· काव्येनोशनसा स्वयम् ॥ १२१ ॥
पुत्रो यस्त्वाऽनुवर्तेत स राजा पृथिवीपतिः।
भवतोऽनुनयाम्येवं पूरू राज्येऽभिषिच्यताम् ॥ १२२ ॥

प्रकृतय- अर्हः पूरुरिदं राज्यं य· सुत प्रियकृत्तव।
वरदानेन शुक्रस्य न शक्य वक्तुमुत्तरम् ॥ १२३ ॥
पौरजानपदैस्तुष्टैरित्युक्तो नाहुषस्तदा।
अभ्यषिञ्चत्ततः पूरुं राज्ये स्वे सुतमात्मनः ॥ १२४ ॥ १२६७ ॥

## उपकथा ५ अणीमाण्डव्योपाख्यानम्

वैशम्पायन— बभूव ब्राह्मणः कश्चिन्माण्डव्य इति विश्रुतः।
(अ.१०७) स आश्रमपदद्वारि वृक्षमूले महातपाः ॥ १ ॥
ऊर्ध्वबाहुर्महायोगी तस्थौ मौनव्रतान्वितः।
तस्य कालेन महता तस्मिंस्तपसि वर्ततः ॥ २ ॥
तमाश्रममनुप्राप्ता दस्यवो लोप्त्रहारिणः।
अनुसार्यमाणा बहुभी रक्षिभिर्भरतर्षभ ॥ ३ ॥
ते तस्यावसथे लोप्त्रं दस्यवः कुरुसत्तम।
निधाय च भयाल्लीनास्तत्रैवानागते बले ॥ ४ ॥
तेषु लीनेष्वथो शीघ्रं ततस्तद्रक्षिणां बलम्।
आजगाम ततोऽपश्यंस्तमृषिं तस्करानुगाः ॥ ५ ॥
तमपृच्छंस्ततो राजंस्तथावृत्तं तपोधनम्।
कतमेन पथा याता दस्यवो द्विजसत्तम ॥ ६ ॥
तथा तु रक्षिणां तेषां ब्रुवतां स तपोधनः।
न किंचिद्वचनं राजन्नब्रवीत्साध्वसाधु वा ॥ ७ ॥
ततस्ते राजपुरुषा विचिन्वानास्तमाश्रमम्।
ददृशुस्तत्र लीनांस्तांश्चौरांस्तद्द्रव्यमेव च ॥ ८ ॥
ततः शंका समभवद्रक्षिणां तं मुनिं प्रति।
संयम्यैनं ततो राज्ञे दस्यूंश्चैव न्यवेदयन् ॥ ९ ॥
तं राजा सह तैश्चौरैरन्वशाद्वध्यतामिति।
स रक्षिभिस्तैरज्ञातः शूले प्रोतो महातपाः ॥ १० ॥
शूलस्थः स तु धर्मात्मा कालेन महता ततः।
निराहारोऽपि विप्रर्षिर्मरणं नाभ्यपद्यत ॥ ११ ॥
(अ १०८) तं दृष्ट्वा रक्षिणस्तत्र तथा बहुतिथेऽहनि।
न्यवेदयंस्तथा राज्ञे यथावृत्तं नराधिप ॥ १२ ॥

श्रुत्वा च वचनं तेषां निश्चित्य सह मन्त्रिभिः।
प्रसादयामास तदा शूलस्थमृषिसत्तमम् ॥ १३ ॥
कृतप्रसादं राजा तं ततः समवतारयत्।
अवतार्य च शूलाग्रात्तच्छूलं निश्चकर्ष ह ॥ १४ ॥
अशक्नुवंश्च निष्क्रष्टुं शूलं मूले स चिच्छिदे।
स तथान्तर्गतेनैव शूलेन व्यचरन्मुनिः ॥ १५ ॥
अणीमाण्डव्य इति च ततो लोकेषु गीयते।
स गत्वा सदनं विप्रो धर्मस्य परमात्मवित् ॥ १६ ॥
आसनस्थं ततो धर्मं दृष्ट्वोपालभत प्रभुः।
किं नु तद्दुष्कृतं कर्म मया कृतमजानता ॥ १७ ॥
यस्येयं फलनिर्वृत्तिरीदृश्यासादिता मया।
धर्म– पतङ्गिकानां पुच्छेषु त्वयेषीका प्रवेशिता ॥ १८ ॥
कर्मणस्तस्य ते प्राप्तं फलमेतत्तपोधन।
स्वल्पमेव यथा दत्तं दानं बहुगुणं भवेत् ॥ १९ ॥
अधर्म एवं विप्रर्षे बहुदुःखफलप्रदः।
अणीमाण्ड– कस्मिन्काले मया तत्तु कृतं ब्रूहि यथातथम् ॥ २० ॥
तेनोक्तो धर्मराजेन बालभावे त्वया कृतम्।
अणीमाण्ड– बालो हि द्वादशाद्वर्षाज्जन्मतो यत्करिष्यति ॥ २१ ॥
न भविष्यत्यधर्मोऽत्र न प्रज्ञास्यन्ति वै दिशः।
अल्पेऽपराधेऽपि महान्मम दण्डस्त्वया धृतः ॥ २२ ॥
शूद्रयोनावतो धर्म मानुषः सम्भविष्यसि।
मर्यादां स्थापयाम्यद्य लोके धर्मफलोदयाम् ॥ २३ ॥
आचतुर्दशकाद्वर्षान्न भविष्यति पातकम्।
परतः कुर्वतामेव दोष एव भविष्यति ॥ २४ ॥
एतेन त्वपराधेन शापात्तस्य महात्मनः।
धर्मो विदुररूपेण शूद्रयोनावजायत ॥ २५ ॥ १२९२ ॥

## उपकथा ६ कणिकोक्ता जम्बूकनीतिः

कणिक– अथ कश्चित्कृतप्रज्ञः शृगालः स्वार्थपण्डितः।
(अ.१४०) सखिभिर्न्यवसत्सार्धं व्याघ्राखुवृकबभ्रुभिः ॥ १ ॥
तेऽपश्यन्विपिने तस्मिन्बलिनं मृगयूथपम्।
अशक्ता ग्रहणे तस्य ततो मन्त्रममन्त्रयन् ॥ २ ॥
जम्बुक– असकृद्यतितो ह्येष हन्तुं व्याघ्र वने त्वया।
युवा वै जवसंपन्नो बुद्धिशाली न शक्यते ॥ ३ ॥
मूषिकोऽस्य शयानस्य चरणौ भक्षयत्वयम्।
अथैनं भक्षितैः पादैर्व्याघ्रो गृह्णातु वै ततः ॥ ४ ॥
ततो वै भक्षयिष्यामः सर्वे मुदितमानसाः।
जम्बुकस्य तु तद्वाक्यं तथा चक्रुः समाहिताः ॥ ५ ॥
मूषिकाभक्षितैः पादैर्मृगं व्याघ्रोऽवधीत्तदा।
दृष्ट्वैवाचेष्टमानं तु भूमौ मृगकलेवरम् ॥ ६ ॥
स्नात्वाऽगच्छत भद्रं वो रक्षामीत्याह जम्बुकः।
शृगालवचनात्तेऽपि गताः सर्वे नदीं ततः ॥ ७ ॥
स चिन्तापरमो भूत्वा तस्थौ तत्रैव जम्बुकः।
अथाजगाम पूर्वं तु स्नात्वा व्याघ्रो महाबलः ॥ ८ ॥
ददर्श जम्बुकं चैव चिन्ताकुलितमानसम्।
व्याघ्र– किं शोचसि महाप्राज्ञ त्वं नो बुद्धिमतां वरः ॥ ९ ॥
अशित्वा पिशितान्यद्य विहरिष्यामहे वयम्।
जम्बुक– शृणु मे त्वं महाबाहो यद्वाक्यं मूषिकोऽब्रवीत् ॥ १० ॥
धिग्बलं मृगराजस्य मयाद्यायं मृगो हतः।
मद्बाहुबलमाश्रित्य तृप्तिमद्य गमिष्यति ॥ ११ ॥
गर्जमानस्य तस्यैवमतो भक्ष्यं न रोचये।
व्याघ्र– ब्रवीति यदि स ह्येवं काले ह्यस्मिन्प्रबोधितः ॥ १२ ॥

स्वबाहुबलमाश्रित्य हनिष्येऽहं वनेचरान्।
खादिष्ये तत्र मांसानि इत्युक्त्वा प्रस्थितो वनम् ॥ १३ ॥

एतस्मिन्नेव काले तु मूषिकोऽप्याजगाम ह।
तमागतमभिप्रेत्य शृगालोऽप्यब्रवीद्वचः ॥ १४ ॥

शृणु मूषिक भद्रं ते नकुलो यदिहाब्रवीत्।
मृगमांसं न खादेयं गरमेतन्न रोचते ॥ १५ ॥

मूषिकं भक्षयिष्यामि तद्भवाननुमन्यताम्।
तच्छ्रुत्वा मूषिको वाक्यं सन्त्रस्तः प्रगतो बिलम् ॥ १६ ॥

ततः स्नात्वा स वै तत्र आजगाम वृको नृप।
तमागतमिदं वाक्यमब्रवीज्जम्बुकस्तदा ॥ १७ ॥

मृगराजो हि संक्रुद्धो न ते साधु भविष्यति।
सकलत्रस्त्विहायाति कुरुष्व यदनन्तरम् ॥ १८ ॥

एवं सञ्चोदितस्तेन जम्बुकेन तदा वृकः।
ततोऽवलुम्पनं कृत्वा प्रयातः पिशिताशनः ॥ १९ ॥

एतस्मिन्नेव काले तु नकुलोऽप्याजगाम ह।
तमुवाच महाराज नकुलं जम्बुको वने ॥ २० ॥

स्वबाहुबलमाश्रित्य निर्जितास्तेऽन्यतो गताः।
मम दत्वा नियुद्धं त्वं भुङ्क्ष्व मांसं यथेप्सितम् ॥ २१ ॥

नकुल– मृगराजो वृकश्चैव बुद्धिमानपि मूषिकः।
निर्जिता यत्त्वया वीरास्तस्माद्वीरतरो भवान् ॥ २२ ॥

न त्वयाप्युत्सहे योद्धुमित्युक्त्वा सोऽप्युपागमत्।
एवं तेषु प्रयातेषु जम्बुको हृष्टमानसः ॥ २३ ॥

खादति स्म तदा मांसमेकः स्विन्मन्त्रनिश्चयात्।
एवं समाचरन्नित्यं सुखमेधेत भूपतिः ॥ २४ ॥ १३१६ ॥

## उपकथा ७ विश्वामित्रकृतं धेनुहरणम्

गन्धर्व– कान्यकुब्जे महानासीत्पार्थिवो भरतर्षभ ।
(अ.१७१) गाधीति विश्रुतो लोके कुशिकस्यात्मसंभवः ॥ १ ॥
तस्य धर्मात्मनः पुत्रः समृद्धबलवाहनः ।
विश्वामित्र इति ख्यातो बभूव रिपुमर्दनः ॥ २ ॥
स चचार सहामात्यो मृगयां गहने वने ।
व्यायामकर्शितः सोऽथ मृगलिप्सुः पिपासितः ॥ ३ ॥
आजगाम नरश्रेष्ठ वसिष्ठस्याश्रमं प्रति ।
तस्याथ कामधुग्धेनुर्वसिष्ठस्य महात्मनः ॥ ४ ॥
उक्ता कामान्प्रयच्छेति सा कामान्दुदुहे सदा ।
भोजनीयानि पेयानि भक्ष्याणि विविधानि च ॥ ५ ॥
लेह्यान्यमृतकल्पानि चोष्याणि च तथार्जुन ।
तैः कामैः सर्वसंपूर्णैः पूजितश्च महीपतिः ॥ ६ ॥
सामात्यः सबलश्चैव तुतोष स भृशं तदा ।
अब्रवीच्च भृशं तुष्टः स राजा तमृषिं तदा ॥ ७ ॥
अर्बुदेन गवां ब्रह्मन्मम राज्येन वा पुनः ।
नन्दिनीं सम्प्रयच्छस्व भुङ्क्ष्व राज्यं महामुने ॥ ८ ॥
वसिष्ठ– देवतातिथिपित्रर्थं याज्यार्थं च पयस्विनी ।
अदेया नन्दिनीयं वै राज्येनापि तवानघ ॥ ९ ॥
एवमुक्तस्तथा पार्थ विश्वामित्रो बलादिव ।
हंसचन्द्रप्रतीकाशां नन्दिनीं तां जहार गाम् ॥ १० ॥
सा भयान्नन्दिनी तेषां बलानां भरतर्षभ ।
विश्वामित्रभयोद्विग्ना वसिष्ठं समुपागमत् ॥ ११ ॥
*गौः–* *कशाग्रदण्डाभिहतां क्रोशन्तीं मामनाथवत् ।*
विश्वामित्रबलैर्घोरैर्भगवन्किमुपेक्षसे ॥ १२ ॥

वसिष्ठ– क्षत्रियाणां बलं तेजो ब्राह्मणानां क्षमा बलम्।
क्षमा मां भजते यस्माद्गम्यतां यदि रोचते ॥ १३ ॥

नंदिनी– किं नु त्यक्ताऽस्मि भगवन्यदेवं त्वं प्रभाषसे।
अत्यक्ताऽहं त्वया ब्रह्मन्नेतुं शक्या न वै बलात् ॥ १४ ॥

वसिष्ठ– न त्वां त्यजामि कल्याणि स्थीयतां यदि शक्यते।
स्थीयतामिति तच्छ्रुत्वा वसिष्ठस्य पयस्विनी ॥ १५ ॥
ऊर्ध्वाञ्चितशिरोग्रीवा प्रबभौ रौद्रदर्शना।
योनिदेशाच्च यवनान् शकृतः शबरान्बहून् ॥ १६ ॥
ससर्ज फेनतः सा गौर्म्लेच्छान्बहुविधानपि।
तैर्विसृष्टैर्महासैन्यैर्नानाम्लेच्छगणैस्तदा ॥ १७ ॥
विश्वामित्रस्य तत्सैन्यं काल्यमानं त्रियोजनम्।
क्रोशमानं भयोद्विग्नं त्रातारं नाध्यगच्छत ॥ १८ ॥
दृष्ट्वा तन्महदाश्चर्यं ब्रह्मतेजोभवं तदा।
विश्वामित्रः क्षत्रभावान्निर्विण्णो वाक्यमब्रवीत् ॥ १९ ॥
धिग्बलं क्षत्रियबलं ब्रह्मतेजोबलं बलम्।
बलाबलं विनिश्चित्य तप एव परं बलम् ॥ २० ॥
स राज्यं स्फीतमुत्सृज्य तां च दीप्तां नृपश्रियम्।
भोगांश्च पृष्ठतः कृत्वा तपस्येव मनो दधे ॥ २१ ॥
स गत्वा तपसा सिद्धिं लोकान्विष्टभ्य तेजसा।
तताप सर्वान्दीप्तौजा ब्राह्मणत्वमवाप्तवान् ॥ २२ ॥ १३३८ ॥

## उपकथा ८ सुन्दोपसुन्दाख्यानम्।

नारद– महासुरस्यान्ववाये हिरण्यकशिपोः पुरा।
(अ.२०९) निकुम्भो नाम दैत्येन्द्रस्तेजस्वी बलवानभूत् ॥ १ ॥
तस्य पुत्रौ महावीर्यौ जातौ भीमपराक्रमौ।
सुन्दोपसुन्दौ दैत्येन्द्रौ दारुणौ क्रूरमानसौ ॥ २ ॥

विनाऽन्योन्यं न भुञ्जाते विनाऽन्योन्यं न जल्पतः।
अन्योऽन्यस्य प्रियकरावन्योऽन्यस्य प्रियंवदौ ॥ ३ ॥
त्रैलोक्यविजयार्थाय समाधायैकनिश्चयम्।
दीक्षां कृत्वा गतौ विन्ध्यं तावुग्रं तेपतुस्तपः ॥ ४ ॥
ततः पितामहः साक्षादभिगम्य महासुरौ।
वरेणच्छन्दयामास सर्वलोकहितः प्रभुः ॥ ५ ॥
दृष्ट्वा पितामहं देवं तस्थतुः प्राञ्जली तदा।
ऊचतुश्च प्रभुं देवं ततस्तौ सहितौ तदा ॥ ६ ॥
त्रिषु लोकेषु यद्भूतं किञ्चित्स्थावरजङ्गमम्।
सर्वस्मान्नौ भयं न स्यादृतेन्योऽन्यं पितामह ॥ ७ ॥
ततः पितामहो दत्त्वा वरमेतत्तदा तयोः।
निवर्त्य तपसस्तौ च ब्रह्मलोकं जगाम ह ॥ ८ ॥
(अ.२१०) तावन्तरिक्षमुत्प्लुत्य दैत्यौ कामगमावुभौ।
देवानामेव भवनं जग्मतुर्युद्धदुर्मदौ ॥ ९ ॥
ताविन्द्रलोकं निर्जित्य यक्षरक्षोगणांस्तदा।
खेचराण्यपि भूतानि जघ्नतुस्तीव्रविक्रमौ ॥ १० ॥
यज्ञैर्यजन्ति ये केचिद्याजयन्ति च ये द्विजाः।
तान्सर्वान्प्रसभं हत्वा बलिनौ जग्मतुस्ततः ॥ ११ ॥
एवं सर्वा दिशो दैत्यौ जित्वा क्रूरेण कर्मणा।
निःसपत्नौ कुरुक्षेत्रे निवेशमभिचक्रतुः ॥ १२ ॥
(अ.२११) ततो देवर्षयः सर्वे सिद्धाश्च परमर्षयः।
जग्मुस्तदा परामार्तिं दृष्ट्वा तत्कदनं महत् ॥ १३ ॥
ततो देवगणाः सर्वे ते चैव परमर्षयः।
तमेवार्थं पुरस्कृत्य पितामहमचोदयन् ॥ १४ ॥
ततः पितामहः श्रुत्वा सर्वेषां तद्वचस्तदा।
तयोर्वधं समुद्दिश्य विश्वकर्माणमाह्वयत् ॥ १५ ॥

दृष्ट्वा च विश्वकर्माणं व्यादिदेश पितामहः।
सृज्यतां प्रार्थनीयैका प्रमदेति महातपाः ॥ १६ ॥
पितामहं नमस्कृत्य तद्वाक्यमभिनन्द्य च।
निर्ममे योषितं दिव्यां चिन्तयित्वा पुनःपुनः ॥ १७ ॥
सा प्रयत्नेन महता निर्मिता विश्वकर्मणा।
त्रिषु लोकेषु नारीणां रूपेणाप्रतिमाऽभवत् ॥ १८ ॥
तिलं तिलं समानीय रत्नानां यद्विनिर्मिता।
तिलोत्तमेति तत्तस्या नाम चक्रे पितामहः ॥ १९ ॥
पितामह- गच्छ सुन्दोपसुन्दाभ्यामसुराभ्यां तिलोत्तमे।
विरोधः स्याद्यथा ताभ्यामन्योन्येन तथा कुरु ॥ २० ॥
सा तथेति प्रतिज्ञाय नमस्कृत्य पितामहम्।
चकार मण्डलं तत्र विबुधानां प्रदक्षिणम् ॥ २१ ॥
तस्या गात्रे निपतिता दृष्टिस्तेषां महात्मनाम्।
सर्वेषामेव भूयिष्ठमृते देवं पितामहम् ॥ २२ ॥
गच्छन्त्या तु तया सर्वे देवाश्च परमर्षयः।
कृतमित्येव तत्कार्यं मेनिरे रूपसंपदा ॥ २३ ॥
(अ.२१२) जित्वा तु पृथिवीं दैत्यौ निःसपत्नौ गतव्यथौ।
कृत्वा त्रैलोक्यमव्यग्रं कृतकृत्यौ बभूवतुः ॥ २४ ॥
यदा न प्रतिवेद्धारस्तयोः सन्तीह केचन।
निरुद्योगौ तदा भूत्वा विजह्रातेऽमराविव ॥ २५ ॥
ततो वादित्रनृत्याभ्यामुपातिष्ठन्त तौ स्त्रियः।
गीतैश्च स्तुतिसंयुक्तैः प्रीत्या समुपजग्मिरे ॥ २६ ॥
ततस्तिलोत्तमा तत्र वने पुष्पाणि चिन्वती।
शनैर्जगाम तं देशं यत्रास्तां तौ महासुरौ ॥ २७ ॥
तौ तु पीत्वा वरं पानं मदरक्तान्तलोचनौ।
दृष्ट्वैव तां वरारोहां व्यथितौ सम्बभूवतुः ॥ २८ ॥

दक्षिणे तां करे सुभ्रूं सुन्दो जग्राह पाणिना।
उपसुन्दोऽपि जग्राह वामे पाणौ तिलोत्तमाम्॥ २९॥
मम भार्या तव गुरुरिति सुन्दोऽभ्यभाषत।
मम भार्या तव वधूरुपसुन्दोऽभ्यभाषत॥ ३०॥
तस्या हेतोर्गदे भीमे सङ्गृह्णीतामुभौ तदा।
अहं पूर्वमहं पूर्वमित्यन्योऽन्य निजघ्नतुः।
तौ गदाभिहतो भीमौ पेततुर्धरणीतले॥ ३१॥

आदित. श्लोका. ॥ १३६९॥

इति श्रीमहाभारतसारे आदिपर्व समाप्तम्।

# महाभारतसारः

## सभापर्व

नारायणं नमस्कृत्य नरं चैव नरोत्तमम्।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत्॥

### मयसभानिर्माणम्

वैशम्पायन– ततोऽब्रवीन्मयः पार्थं वासुदेवस्य सन्निधौ।
(अ.१) अस्मात्कृष्णात्सुसंरब्धात्पावकाच्च दिधक्षतः॥ १॥
त्वया त्रातोऽस्मि कौन्तेय ब्रूहि किं करवाणि ते।
अहं हि विश्वकर्मा वै दानवानां महाकविः॥ २॥
सोऽहं वै त्वत्कृते कर्तुं किञ्चिदिच्छामि पाण्डव।
अर्जुन– प्राणकृच्छ्राद्विमुक्तं त्वमात्मानं मन्यसे मया॥ ३॥
एवं गते न शक्ष्यामि किञ्चित्कारयितुं त्वया।
न चापि तव सङ्कल्पं मोघमिच्छामि दानव॥ ४॥
कृष्णस्य क्रियतां किञ्चित्तथा प्रतिकृतं मयि।
चोदितो वासुदेवस्तु मयेन भरतर्षभ॥ ५॥
चोदयामास तं कृष्णः सभा वै क्रियतामिति।
प्रतिगृह्य तु तद्वाक्यं सम्प्रहृष्टो मयस्तदा॥ ६॥
दशकिष्कुसहस्रां तां मापयामास सर्वतः।
(अ.२) उषित्वा खाण्डवप्रस्थे सुखवासं जनार्दनः॥ ७॥
प्रययौ पुण्डरीकाक्षः शैब्यसुग्रीववाहनः।
(अ.३) अथाब्रवीन्मयः पार्थमर्जुनं जयतां वरम्॥ ८॥
उत्तरेण तु कैलासं मैनाकं पर्वतं प्रति।
चित्रं मणिमयं भाण्डं रम्यं बिन्दुसरः प्रति॥ ९॥

सभायां सत्यसन्धस्य यदासीद्वृषपर्वणः।
आगमिष्यामि तद्गृह्य यदि तिष्ठति भारत ॥ १० ॥
ततः सभां करिष्यामि पाण्डवस्य यशस्विनीम्।
अस्ति बिन्दुसरस्युग्रा गदा च कुरुनंदन ॥ ११ ॥
अनुरूपा च भीमस्य गाण्डीवं भवतो यथा।
वारुणश्च महाशङ्खो देवदत्तः सुघोषवान् ॥ १२ ॥
सर्वमेतत्प्रदास्यामि भवते नात्र संशयः।
इत्युक्त्वा सोऽसुरः पार्थं प्रागुदीचीं दिशं गतः ॥ १३ ॥
तत्र गत्वा स जग्राह गदां शङ्खं च भारत।
स्फाटिकं च सभाद्रव्यं यदासीद्वृषपर्वणः ॥ १४ ॥
तदाहृत्य च तां चक्रे सोऽसुरोऽप्रतिमां सभाम्।
गदां च भीमसेनाय प्रवरां प्रददौ तदा ॥ १५ ॥
देवदत्तं चार्जुनाय शङ्खप्रवरमुत्तमम्।
सभा च सा महाराज शातकुम्भमयद्रुमा ॥ १६ ॥
अभिघ्नतीव प्रभया प्रभामर्कस्य भास्वराम्।
उत्तमद्रव्यसम्पन्ना रत्नप्राकारतोरणा ॥ १७ ॥
बहुचित्रा बहुधना सुकृता विश्वकर्मणा।
तस्यां सभायां नलिनीं चकाराप्रतिमां मयः ॥ १८ ॥
मणिरत्नचितां तां तु केचिदभ्येत्य पार्थिवाः।
दृष्ट्वाऽपि नाभ्यजानन्त तेऽज्ञानात्प्रपतन्त्युत ॥ १९ ॥
ईदृशीं तां सभां कृत्वा मासैः परिचतुर्दशैः।
निष्ठितां धर्मराजाय मयो राज्ञ्यवेदयत् ॥ २० ॥
(अ. ४) ततः प्रवेशनं तस्यां चक्रे राजा युधिष्ठिरः।
वादित्रैर्विविधैर्दिव्यैर्गन्धैरुच्चावचैरपि ॥ २१ ॥
पूजयित्वा कुरुश्रेष्ठो दैवतानि निवेश्य च।
तस्यां सभायां रम्यायां रेमे शक्रो यथा दिवि ॥ २२ ॥

## नारदकृतकच्चित्प्रश्नाः

(अ. ५) अथ तत्रोपविष्टेषु पाण्डवेषु महात्मसु।
महत्सु चोपविष्टेषु गन्धर्वेषु च भारत ॥ २३ ॥
वेदोपनिषदां वेत्ता ऋषिः सुरगणार्चितः।
वक्ता प्रगल्भो मेधावी स्मृतिमाश्रयवित्कविः ॥ २४ ॥
लोकाननुचरन्सर्वानागमत्तां सभां नृप।
नारदः सुमहातेजा ऋषिभिः सहितस्तदा ॥ २५ ॥
तमागतमृषिं दृष्ट्वा नारदं सर्वधर्मवित्।
सहसा पाण्डवश्रेष्ठः प्रत्युत्थायानुजैः सह ॥ २६ ॥
अर्चयामास रत्नैश्च सर्वकामैश्च धर्मवित्।
सोर्चितः पाण्डवैः सर्वैर्महर्षिर्वेदपारगः ॥ २७ ॥
धर्मकामार्थसंयुक्तं पप्रच्छेदं युधिष्ठिरम्।
नारद– कच्चिदर्थाश्च कल्पन्ते धर्मे च रमते मनः ॥ २८ ॥
सुखानि चानुभूयन्ते मनश्च न विहन्यते।
कच्चिदाचरितां पूर्वैर्नरदेव पितामहैः ॥ २९ ॥
वर्तसे वृत्तिमक्षुद्रां धर्मार्थसहितां त्रिषु।
कच्चिदर्थेन वा धर्मं धर्मेणार्थमथापि वा ॥ ३० ॥
उभौ वा प्रीतिसारेण न कामेन प्रबाधसे।
कच्चिदर्थं च धर्मं च कामं च जयतां वर ॥ ३१ ॥
विभज्य काले कालज्ञः सदा वरद सेवसे।
मित्रोदासीनशत्रूणां कच्चिद्वेत्सि चिकीर्षितम् ॥ ३२ ॥
कच्चित्संवृतमन्त्रैस्ते अमात्यैः शास्त्रकोविदैः।
राष्ट्रं सुरक्षितं तात शत्रुभिर्न विलुप्यते ॥ ३३ ॥
कच्चित्सहस्रैर्मूर्खाणामेकं क्रीणासि पण्डितम्।
पण्डितो ह्यर्थकृच्छ्रेषु कुर्यान्निःश्रेयसं परम् ॥ ३४ ॥

कच्चिन्नोग्रेण दण्डेन भृशमुद्विजसे प्रजाः।
कच्चिद्बलस्य भक्तं च वेतनं च यथोचितम् ॥ ३५ ॥
संप्राप्तकाले दातव्यं ददासि न विकर्षसि।
कच्चिद्दारान् मनुष्याणां तवार्थे मृत्युमीयुषाम् ॥ ३६ ॥
व्यसनं चाभ्युपेतानां बिभर्षि भरतर्षभ।
कच्चिदात्मानमेवाग्रे विजित्य विजितेन्द्रियः ॥ ३७ ॥
परान् जिगीषसे पार्थ प्रमत्तानजितेन्द्रियान्।
कच्चिदायस्य चार्धेन चतुर्भागेन वा पुनः ॥ ३८ ॥
पादभागैस्त्रिभिर्वापि व्ययः संशुद्ध्यते तव।
कच्चिन्न लुब्धाश्चौरा वा वैरिणो वा विशाम्पते ॥ ३९ ॥
अप्राप्तव्यवहारा वा तव कर्मस्वनुष्ठिताः।
कच्चिद्राष्ट्रे तडागानि पूर्णानि च बृहन्ति च ॥ ४० ॥
भागशो विनिविष्टानि न कृषिर्देवमातृका।
कच्चित्ते सफला वेदाः कच्चित्ते सफलं धनम् ॥ ४१ ॥
कच्चित्ते सफला दाराः कच्चित्ते सफलं श्रुतम्।

युधि- कथं वै सफला वेदाः कथं वै सफलं धनम् ॥ ४२ ॥
कथं वै सफला दाराः कथं वै सफलं श्रुतम्।

नारद- अग्निहोत्रफला वेदा दत्तभुक्तफलं धनम् ॥ ४३ ॥
रतिपुत्रफला दाराः शीलवृत्तफलं श्रुतम्।
कच्चिदग्निभयाच्चैव सर्वं व्यालभयात्तथा ॥ ४४ ॥
रोगरक्षोभयाच्चैव राष्ट्रं स्वं परिरक्षसि।
कच्चिदन्धांश्च मूकांश्च पङ्गून्व्यङ्गानबान्धवान् ॥ ४५ ॥
पितेव पासि धर्मज्ञ तथा प्रव्रजितानपि।
एवं यो वर्तते राजा चातुर्वर्ण्यस्य रक्षणे ॥ ४६ ॥
स विहृत्येह सुसुखी शक्रस्यैति सलोकताम्।

युधि- भगवन्न्याय्यमाहैतं यथावद्धर्मनिश्चयम् ॥ ४७ ॥

(अ.६) यथाशक्ति यथान्याय क्रियतेऽय विधिर्मया।
भवान्सञ्चरते लोकान्सदा नानाविधान्बहून् ॥ ४८ ॥
ईदृशी भविता काचिद्दृष्टपूर्वा सभा क्वचित्।
इतो वा श्रेयसी ब्रह्मंस्तन्ममाचक्ष्व पृच्छत ॥ ४९ ॥
नारद- मानुषेषु न मे तात दृष्टपूर्वा न च श्रुता।
सभा मणिमयी राजन्यथेयं तव भारत ॥ ५० ॥

## देवसभावर्णनम्

(अ.७) शक्रस्य तु सभा दिव्या भास्वरा कर्मनिर्मिता।
विस्तीर्णा योजनशतं शतमध्यर्धमायता ॥ ५१ ॥
(अ.८) वैवस्वतस्य यां पार्थ विश्वकर्मा चकार ह।
तैजसी सा सभा राजन् बभूव शतयोजना ॥ ५२ ॥
(अ ९) युधिष्ठिर सभा दिव्या वरुणस्यामितप्रभा।
प्रमाणेन यथा याम्या शुभप्राकारतोरणा ॥ ५३ ॥
(अ १०) सभा वैश्रवणी राजञ्छतयोजनमायता।
विस्तीर्णा सप्ततिश्चैव योजनानि सितप्रभा ॥ ५४ ॥
(अ ११) पितामहसभां तात कथ्यमाना निबोध मे।
शक्यते या न निर्देष्टुमेवंरूपेति भारत ॥ ५५ ॥
सुसुखा सा सदा राजन्न शीता न च घर्मदा।
न क्षुत्पिपासे न ग्लानिं प्राप्य तां प्राप्नुवन्त्युत ॥ ५६ ॥
एता मया दृष्टपूर्वाः सभा देवेषु भारत।
सभेयं मानुषे लोके सर्वश्रेष्ठतमा तव ॥ ५७ ॥

## राजसूयविचारः

(अ.१२) पिता च त्वाह कौन्तेय पाण्डुः कौरवनन्दन।
विज्ञाय मानुषं लोकमायान्तं मां नराधिप ॥ ५८ ॥

प्रोवाच प्रणतो भूत्वा वदेथास्त्वं युधिष्ठिरम्।
राजसूयं क्रतुश्रेष्ठमाहरस्वेति भारत ॥ ५९ ॥
तस्य त्वं पुरुषव्याघ्र सङ्कल्पं कुरु पाण्डव।
गन्तासि त्वं महेन्द्रस्य पूर्वैः सह सलोकताम् ॥ ६० ॥
बहुविघ्नश्च नृपते क्रतुरेष स्मृतो महान्।
छिद्राण्यस्य तु वाञ्छन्ति यज्ञघ्ना ब्रह्मराक्षसाः ॥ ६१ ॥
युद्धं च क्षत्रशमनं पृथिवीक्षयकारणम्।
किञ्चिदेव निमित्तं च भवत्यत्र क्षयावहम् ॥ ६२ ॥
एतत्सञ्चिन्त्य राजेन्द्र यत्क्षेमं तत्समाचर।
आपृच्छे त्वां गमिष्यामि दाशार्हनगरीं प्रति ॥ ६३ ॥
गते तु नारदे पार्थो भ्रातृभिः सह कौरवः।
राजसूयं क्रतुश्रेष्ठं चिन्तयामास पार्थिवः ॥ ६४ ॥
(अ.१३) स मन्त्रिणः समानाय्य भ्रातॄंश्च वदतां वरः।
राजसूयं प्रति तदा पुनः पुनरपृच्छत ॥ ६५ ॥
ते पृच्छ्यमानाः सहिता वचोऽर्थ्यं मन्त्रिणस्तदा।
युधिष्ठिरं महाप्राज्ञं यियक्षुमिदमब्रुवन् ॥ ६६ ॥
राजसूयस्य समयं मन्यन्ते सुहृदस्तव।
समर्थोऽसि महाबाहो सर्वे ते वशगा वयम् ॥ ६७ ॥
अचिरात्त्वं महाराज राजसूयमवाप्स्यसि।
स तु राजा महाप्राज्ञः पुनरेवात्मनात्मवान् ॥ ६८ ॥
भूयो विममृशे पार्थो लोकानां हितकाम्यया।
सामर्थ्ययोगं सम्प्रेक्ष्य देशकालौ व्ययागमौ ॥ ६९ ॥
विमृश्य सम्यक् च धिया कुर्वन् प्राज्ञो न सीदति।
स निश्चयार्थं कार्यस्य कृष्णमेव जनार्दनम् ॥ ७० ॥
सर्वलोकात्परं मत्वा जगाम मनसा हरिम्।
स तु तां नैष्ठिकीं बुद्धिं कृत्वा पार्थो युधिष्ठिरः ॥ ७१ ॥

गुरुवद्भूतगुरवे प्राहिणोद्दूतमञ्जसा।
दर्शनाकाङ्क्षिणं पार्थं दर्शनाकाङ्क्षयाऽच्युतः ॥ ७२ ॥
इन्द्रसेनेन सहित इन्द्रप्रस्थमगात्तदा।
तं विश्रान्तं शुभे देशे क्षणिनं कल्पमच्युतम् ॥ ७३ ॥
धर्मराजः समागम्य ज्ञापयत्स्वप्रयोजनम्।

युधि– प्रार्थितो राजसूयो मे न चासौ केवलेप्सया ॥ ७४ ॥
प्राप्यते येन तत्ते हि विदितं कृष्ण सर्वशः।
तं राजसूयं सुहृदः कार्यमाहुः समेत्य मे ॥ ७५ ॥
तत्र मे निश्चिततमं तव कृष्ण गिरा भवेत्।
केचिद्धि सौहृदादेव न दोषं परिचक्षते ॥ ७६ ॥
स्वार्थहेतोस्तथैवान्ये प्रियमेव वदन्त्युत।
प्रियमेव परीप्सन्ते केचिदात्मनि यद्धितम् ॥ ७७ ॥
एवंप्रायाश्च दृश्यन्ते जनवादाः प्रयोजने।
त्वं तु हेतूनतीत्यैतान्कामक्रोधौ व्युदस्य च ॥ ७८ ॥
परमं यत्क्षमं लोके यथावद्वक्तुमर्हसि।

कृष्ण– सर्वैर्गुणैर्महाराज राजसूयं त्वमर्हसि ॥ ७९ ॥
(अ १४) जानतस्त्वेव ते सर्वं किञ्चिद्वक्ष्यामि भारत।
इदानीमेव वै राजञ्जरासन्धो महीपतिः ॥ ८० ॥
स्थितो मूर्ध्नि नरेन्द्राणामोजसाक्रम्य सर्वशः।
न तु शक्यं जरासन्धे जीवमाने महाबले ॥ ८१ ॥
राजसूयस्त्वयावाप्तुमेषा राजन्मतिर्मम।
तेन रुद्धा हि राजानः सर्वे जित्वा गिरिव्रजे ॥ ८२ ॥
कन्दरे पर्वतेन्द्रस्य सिंहेनेव महाद्विपाः।
स हि राजा जरासन्धो यियक्षुर्वसुधाधिपैः ॥ ८३ ॥
महादेवं महात्मानमुमापतिमरिन्दमम्।
यदि त्वेनं महाराज यज्ञं प्राप्तुमभीप्ससि ॥ ८४ ॥

यतस्व तेषां मोक्षाय जरासन्धवधाय च।
भीम– अतन्द्रितश्च प्रायेण दुर्बलो बलिनं रिपुम् ॥ ८५ ॥
(अ.१५) जयेत्सम्यक्प्रयोगेण नीत्यार्थानात्मनो हितान्।
कृष्णे नयो मयि बलं जयः पार्थे धनञ्जये ॥ ८६ ॥
मागधं साधयिष्याम इष्टिं त्रय इवाग्नयः।
कृष्ण– अर्थानारभते बालो नानुबन्धमवेक्षते ॥ ८७ ॥
तस्मादरिं न मृष्यन्ति बालमर्थपरायणम्।
रत्नभाजो हि राजानो जरासन्धमुपासते ॥ ८८ ॥
न च तुष्यति तेनापि बाल्यादनयमास्थितः।
षडशीतिः समानीताः शेषा राजंश्चतुर्दश ॥ ८९ ॥
जरासन्धेन राजानस्ततः क्रूरं प्रवर्स्यते।
प्राप्नुयात्स यशो दीप्तं तत्र यो विघ्नमाचरेत् ॥ ९० ॥
जयेद्यश्च जरासन्धं स सम्राण्नियतं भवेत्।
युधि– सम्राड्गुणमभीप्सन्वै युष्मान्स्वार्थपरायणः ॥ ९१ ॥
(अ.१६) कथं प्रहिणुयां कृष्ण सोऽहं केवलसाहसात्।
भीमार्जुनावुभौ नेत्रे मनो मन्ये जनार्दनम् ॥ ९२ ॥
मनश्चक्षुर्विहीनस्य कीदृशं जीवितं भवेत्।
वासुदेव– न स्म मृत्युं वयं विद्म रात्रौ वा यदि वा दिवा ॥ ९३ ॥
(अ.१७) न चापि कञ्चिदमरमयुद्धेनानुशुश्रुम।
एतावदेव पुरुषैः कार्यं हृदयतोषणम् ॥ ९४ ॥
नयेन विधिदृष्टेन यदुपक्रमते परान्।
ते वयं नयमास्थाय शत्रुदेहसमीपगाः ॥ ९५ ॥
कथमन्तं न गच्छेम वृक्षस्येव नदीरयाः।
(अ.२०) अलं तस्य महाबाहुर्भीमसेनो महाबलः ॥ ९६ ॥
लोकस्य समुदीर्णस्य निधनायान्तको यथा।
यदि मे हृदयं वेत्सि यदि ते प्रत्ययो मयि ॥ ९७ ॥

भीमसेनार्जुनौ शीघ्रं न्यासभूतौ प्रयच्छ मे।
युधि- यथा वदसि गोविन्द सर्वं तदुपपद्यते ॥ ९८ ॥
नहि त्वमग्रतस्तेषां येषां लक्ष्मीः पराङ्मुखी।
निहतश्च जरासन्धो मोक्षिताश्च महीक्षितः ॥ ९९ ॥
राजसूयश्च मे लब्धो निदेशे तव तिष्ठतः।
क्षिप्रमेव यथा त्वेतत्कार्यं समुपपद्यते ॥ १०० ॥
अप्रमत्तो जगन्नाथ तथा कुरु नरोत्तम।
एवमुक्तास्ततः सर्वे भ्रातरो विपुलौजसः ॥ १०१ ॥
वार्ष्णेयः पाण्डवेयौ च प्रतस्थुर्मागधं प्रति।
वर्चस्विनां ब्राह्मणानां स्नातकानां परिच्छदम् ॥ १०२ ॥
आच्छाद्य सुहृदां वाक्यैर्मनोज्ञैरभिनन्दिताः।
कुरुभ्यः प्रस्थितास्तेतु मध्येन कुरुजाङ्गलम् ॥ १०३ ॥
अतीत्य गङ्गां शोणं च त्रयस्ते प्राङ्मुखास्तदा।
गोरथं गिरिमासाद्य ददृशुर्मागधं पुरम् ॥ १०४ ॥

## जरासन्धवधः दिग्विजयश्च

(अ.२१) ततो द्वारमनासाद्य पुरस्य गिरिमुच्छ्रितम्।
मागधानां सुरुचिरं चैत्यकं तं समाद्रवन् ॥ १०५ ॥
स्थिरं सुविपुलं शृङ्गं सुमहत्तत्पुरातनम्।
विपुलैर्बाहुभिर्वीरास्तेभिहत्याभ्यपातयन् ॥ १०६ ॥
ततस्ते मागधं हृष्टाः पुरं प्रविविशुस्तदा।
राजमार्गेण गच्छन्तः कृष्णभीमधनंजयाः ॥ १०७ ॥
बलाद्गृहीत्वा माल्यानि मालाकारान्महाबलाः।
निवेशनमथाजग्मुर्जरासन्धस्य धीमतः ॥ १०८ ॥
ते त्वतीत्य जनाकीर्णाः कक्षास्तिस्रो नरर्षभाः।
अहङ्कारेण राजानमुपतस्थुर्गतव्यथाः ॥ १०९ ॥

तान्पाद्यमधुपर्कार्हान्मानार्हान्सत्कृतिं गतान्।
प्रत्युत्थाय जरासन्ध उपतस्थे यथाविधि ॥ ११० ॥
उवाच चैतान्राजासौ स्वागतं वोऽस्त्विति प्रभुः।
मौनमासीत्तदा पार्थभीमयोर्जनमेजय ॥ १११ ॥
तेषां मध्ये महाबुद्धिः कृष्णो वचनमब्रवीत्।
वक्तुं नायाति राजेन्द्र एतयोर्नियमस्थयोः ॥ ११२ ॥
अर्वाङ्निशीथात्परतस्त्वया सार्धं वदिष्यतः।
यज्ञागारे स्थापयित्वा राजा राजगृहं गतः ॥ ११३ ॥
ततोऽर्धरात्रे सम्प्राप्ते यातो यत्र स्थिता द्विजाः।
तांस्त्वपूर्वेण वेषेण दृष्ट्वा स नृपसत्तमः ॥ ११४ ॥
उपतस्थे जरासन्धो विस्मितश्चाभवत्तदा।
तानुवाच जरासन्धः सत्यसन्धो नराधिपः ॥ ११५ ॥
के यूयं पुष्पवन्तश्च भुजैर्ज्याकृतलक्षणैः।
बिभ्रतः क्षात्रमोजश्च ब्राह्मण्यं प्रतिजानथ ॥ ११६ ॥
सत्यं वदत के यूयं सत्यं राजसु शोभते।
चैत्यकस्य गिरेः शृङ्गं भित्त्वा किमिह छद्मना ॥ ११७ ॥
अद्वारेण प्रविष्टाः स्थ निर्भया राजकिल्बिषात्।
एवं च मामुपास्थाय कस्माच्च विधिनार्हणाम् ॥ ११८ ॥
प्रतीतां नानुगृह्णीत कार्यं किं वास्मदागमे।

कृष्ण- स्नातकव्रतिनो राजन्ब्राह्मणाः क्षत्रिया विशः ॥ ११९ ॥
विशेषनियमाश्चैषामविशेषाश्च सन्त्युत।
पुष्पवत्सु ध्रुवा श्रीश्च पुष्पवन्तस्ततो वयम् ॥ १२० ॥
स्ववीर्यं क्षत्रियाणां तु बाह्वोर्धाता न्यवेशयत्।
तद्दिदृक्षसि चेद्राजन् द्रष्टास्यद्य न संशयः ॥ १२१ ॥
अद्वारेण रिपोर्गेहं द्वारेण सुहृदो गृहान्।
प्रविशन्ति नरा धीरा द्वाराण्येतानि धर्मतः ॥ १२२ ॥

कार्यवन्तो गृहानेत्य शत्रुतो नार्हणां वयम् ।
प्रतिगृह्णीम तद्विद्धि एतन्नः शाश्वतं व्रतम् ॥ १२३ ॥

जरा- न स्मरामि कदा वैरं कृतं युष्माभिरित्युत ।
(अ.२१) चिन्तयंश्च न पश्यामि भवतां प्रति वैकृतम् ॥ १२४ ॥
तस्य मेऽद्य स्थितस्येह स्वधर्मे नियतात्मनः ।
अनागसं प्रजानां च प्रमादादिव जल्पथ ॥ १२५ ॥

कृष्ण- कुलकार्यं महाबाहो कश्चिदेकः कुलोद्वहः ।
वहते यस्तन्नियोगाद्वयमभ्युद्यतास्त्वयि ॥ १२६ ॥
त्वया चोपहृता राजन्क्षत्रिया लोकवासिनः ।
तदागः क्रूरमुत्पाद्य मन्यसे किमनागसम् ॥ १२७ ॥
राजा राज्ञः कथं साधून्हिंस्यान्नृपतिसत्तम ।
तद्राज्ञः संनिगृह्य त्वं रुद्रायोपजिहीर्षसि ॥ १२८ ॥
अस्मांस्तदेनो गच्छेद्धि कृतं बार्हद्रथ त्वया ।
वयं हि शक्ता धर्मस्य रक्षणे धर्मचारिणः ॥ १२९ ॥
ते त्वां ज्ञातिक्षयकरं वयमार्तानुसारिणः ।
ज्ञातिवृद्धिनिमित्तार्थं विनिहन्तुमिहागताः ॥ १३० ॥
युयुक्षमाणास्त्वत्तो हि न वयं ब्राह्मणा ध्रुवम् ।
शौरिरस्मि हृषीकेशो नृवीरौ पाण्डवाविमौ ॥ १३१ ॥
त्वामाह्वयामहे राजन् स्थिरो युध्यस्व मागध ।
मुञ्च वा नृपतीन्सर्वान् गच्छ वा त्वं यमक्षयम् ॥ १३२ ॥

जरा- देवतार्थमुपाहृत्य राज्ञः कृष्ण कथं भयात् ।
अहमद्य विमुच्येयं क्षात्रं व्रतमनुस्मरन् ॥ १३३ ॥
सैन्यं सैन्येन व्यूढेन एक एकेन वा पुनः ।
द्वाभ्यां त्रिभिर्वा योत्स्येऽहं युगपत्पृथगेव वा ॥ १३४ ॥
एवमुक्त्वा जरासन्धः सहदेवाभिषेचनम् ।
आज्ञापयत्तदा राजा युयुत्सुर्भीमकर्मभिः ॥ १३५ ॥

कृष्ण- त्रयाणां केन ते राजन्योद्धुमुत्सहते मनः।
(अ.२३) अस्मदन्यतमेनेह सज्जीभवतु को युधि ॥ १३६ ॥
एवमुक्तः स नृपतिर्युद्धं वव्रे महाद्युतिः।
जरासन्धस्ततो राजा भीमसेनेन मागधः ॥ १३७ ॥
उवाच मतिमान् राजा भीमं भीमपराक्रमः।
भीम योत्स्ये त्वया सार्धं श्रेयसा निर्जितं वरम् ॥ १३८
एवमुक्त्वा जरासन्धो भीमसेनमरिन्दमः।
प्रत्युद्ययौ महातेजाः शक्रं बल इवासुरः ॥ १३९ ॥
ततः सम्मन्त्र्य कृष्णेन कृतस्वस्त्ययनो बली।
भीमसेनो जरासन्धमाससाद युयुत्सया ॥ १४० ॥
ततस्तौ नरशार्दूलौ बाहुशस्त्रौ समीयतुः।
वीरौ परमसंहृष्टावन्योन्यजयकाङ्क्षिणौ ॥ १४१ ॥
करग्रहणपूर्वं तु कृत्वा पादाभिवन्दनम्।
कक्षैः कक्षां विधुन्वानावास्फोटं तत्र चक्रतुः ॥ १४२ ॥
व्यूढोरस्कौ दीर्घभुजौ नियुद्धकुशलावुभौ।
बाहुभिः समसज्जेतामायसैः परिघैरिव ॥ १४३ ॥
कार्तिकस्य तु मासस्य प्रवृत्तं प्रथमेऽहनि।
अनाहारं दिवारात्रमविश्रान्तमवर्तत ॥ १४४ ॥
तद्वृत्तं तु त्रयोदश्यां समवेतं महात्मनोः।
चतुर्दश्यां निशायां तु निवृत्तो मागधः क्लमात् ॥ १४५ ॥
तं राजानं तथा क्लान्तं दृष्ट्वा राजञ्जनार्दनः।
उवाच भीमकर्माणं भीमं सम्बोधयन्निव ॥ १४६ ॥
क्लान्तः शत्रुर्न कौन्तेय लभ्यः पीडयितुं रणे।
पीड्यमानो हि कार्त्स्न्येन जह्याज्जीवितमात्मनः ॥ १४७ ॥
(अ.२४) एवमुक्तस्तदा भीमो जरासन्धमरिन्दमः।
उत्क्षिप्य भ्रामयामास बलवन्तं महाबलः ॥ १४८ ॥

भ्रामयित्वा शतगुणं जानुभ्यां भरतर्षभ।
बभञ्ज पृष्ठं सङ्क्षिप्य निष्पिष्य विननाद च ॥ १४९ ॥
करे गृहीत्वा चरणं द्वेधा चक्रे महाबलः।
ततो राज्ञः कुलद्वारि प्रसुप्तमिव तं नृपम् ॥ १५० ॥
रात्रौ गतासुमुत्सृज्य निश्चक्रमुररिन्दमाः।
जरासन्धरथं कृष्णो योजयित्वा पताकिनम् ॥ १५१ ॥
आरोप्य भ्रातरौ चैव मोक्षयामास बान्धवान्।
बन्धनाद्विप्रमुक्ताश्च राजानो मधुसूदनम् ॥ १५२ ॥
पूजयामासुरूचुश्च स्तुतिपूर्वमिदं वचः।
नैतच्चित्रं महाबाहो त्वयि देवकिनन्दने ॥ १५३ ॥
भीमार्जुनबलोपेते धर्मस्य प्रतिपालनम्।
जरासन्धह्रदे घोरे दुःखपङ्के निमज्जताम् ॥ १५४ ॥
राज्ञां समभ्युद्धरणं यदिदं कृतमद्य वै।
किं कुर्मः पुरुषव्याघ्र शाधि नः प्रणतिस्थितान् ॥ १५५ ॥
कृतमित्येव तद्विद्धि नृपैर्यद्यपि दुष्करम्।
तानुवाच हृषीकेशः समाश्वास्य महामनाः ॥ १५६ ॥
युधिष्ठिरो राजसूयं क्रतुमाहर्तुमिच्छति।
तस्य धर्मप्रवृत्तस्य पार्थिवत्वं चिकीर्षतः ॥ १५७ ॥
सर्वैर्भवद्भिर्विज्ञाय साहाय्यं क्रियतामिति।
ततः सुप्रीतमनसस्ते नृपा नृपसत्तम ॥ १५८ ॥
तथेत्येवाब्रुवन्सर्वे प्रतिगृह्यास्य तां गिरम्।
रत्नभाजं च दाशार्हं चक्रुस्ते पृथिवीश्वराः ॥ १५९ ॥
जरासन्धात्मजश्चैव पुरस्कृत्य पुरोहितम्।
सहदेवो नृणां देवं वासुदेवमुपस्थितः ॥ १६० ॥
भयार्ताय ततस्तस्मै कृष्णो दत्वाऽभयं तदा।
आददेऽस्य महार्हाणि रत्नानि पुरुषोत्तमः ॥ १६१ ॥

अभ्यषिञ्चत तत्रैव जरासन्धात्मजं मुदा।
गत्वैकत्वं च कृष्णेन पार्थाभ्यां चैव सत्कृतः ॥ १६२ ॥
विवेश राजा द्युतिमान् बार्हद्रथपुरं नृप।
इन्द्रप्रस्थमुपागम्य पाण्डवाभ्यां सहाच्युतः ॥ १६३ ॥
समेत्य धर्मराजानं प्रीयमाणोऽभ्यभाषत।
दिष्ट्या भीमेन बलवाञ्जरासन्धो निपातितः ॥ १६४ ॥
राजानो मोक्षिताश्चैव बन्धनान्नृपसत्तम।
ततो युधिष्ठिरः कृष्णं पूजयित्वा यथार्हतः ॥ १६५ ॥
भीमसेनार्जुनौ चैव प्रहृष्टः परिषस्वजे।
एवं पुरुषशार्दूलो महाबुद्धिर्जनार्दनः ॥ १६६ ॥
पाण्डवैर्घातयामास जरासन्धमरिं तदा।
धर्मराजमनुज्ञाप्य प्रययौ स्वां पुरीं प्रति ॥ १६७ ॥

अर्जुन– धनुरस्त्रं शरा वीर्यं पक्षो भूमिर्यशो बलम्।
(अ.२५) प्राप्तमेतन्मया राजन् दुष्प्रापं यदभीप्सितम् ॥ १६८ ॥
तत्र कृत्यमहं मन्ये कोशस्य परिवर्धनम्।
करमाहारयिष्यामि राज्ञः सर्वान्नृपोत्तम ॥ १६९ ॥
धनञ्जयवचः श्रुत्वा धर्मराजो युधिष्ठिरः।
स्निग्धगम्भीरनादिन्या तं गिरा प्रत्यभाषत ॥ १७० ॥
स्वस्तिवाच्यार्हतो विप्रान्प्रयाहि भरतर्षभ।
विजयस्ते ध्रुवं पार्थ प्रियं काममवाप्स्यसि ॥ १७१ ॥
इत्युक्तः प्रययौ पार्थः सैन्येन महता वृतः।
तथैव भीमसेनोऽपि यमौ च पुरुषर्षभौ ॥ १७२ ॥
ससैन्याः प्रययुः सर्वे धर्मराजेन पूजिताः।
दिशं धनपतेरिष्टामजयत्पाकशासनिः ॥ १७३ ॥
भीमसेनस्तथा प्राचीं सहदेवस्तु दक्षिणाम्।
प्रतीचीं नकुलो राजन् दिशं व्यजयतास्त्रवित् ॥ १७४ ॥

## राजसूययज्ञः, शिशुपालवधः

(अ.३३) स्वकोष्ठस्य परीमाणं कोशस्य च महीपतिः।
विज्ञाय राजा कौन्तेयो यज्ञायैव मनो दधे ॥ १७५ ॥
सुहृदश्चैव ये सर्वे पृथक् च सहिताब्रुवन्।
यज्ञकालस्तव विभो क्रियतामत्र साम्प्रतम् ॥ १७६ ॥
अथैवं ब्रुवतामेव तेषामभ्याययौ हरिः।
उच्चावचमुपादाय धर्मराजाय माधवः ॥ १७७ ॥
धनौघं पुरुषव्याघ्रो बलेन महता वृतः।
तं मुदाभिसमागम्य सत्कृत्य च यथाविधि ॥ १७८ ॥
स पृष्ट्वा कुशलं चैव सुखासीनं युधिष्ठिरः।
भीमार्जुनयमैश्चैव सहितः कृष्णमब्रवीत् ॥ १७९ ॥
त्वत्कृते पृथिवी कृत्स्ना मद्वशे कृष्ण वर्तते।
अनुज्ञातस्त्वया कृष्ण प्राप्नुयां क्रतुमुत्तमम् ॥ १८० ॥
अनुज्ञातस्तु कृष्णेन पाण्डवो भ्रातृभिः सह।
ईजितुं राजसूयेन साधनान्युपचक्रमे ॥ १८१ ॥
ततस्त्वाज्ञापयामास पाण्डवोरिनिबर्हणः।
सहदेवं युधां श्रेष्ठं मन्त्रिणश्चैव सर्वशः ॥ १८२ ॥
अस्मिन्क्रतौ यथोक्तानि यज्ञाङ्गानि द्विजातिभिः।
तथोपकरणं सर्वं मङ्गलानि च सर्वशः ॥ १८३ ॥
अधियज्ञांश्च सम्भारान्धौम्योक्तान्क्षिप्रमेव हि।
समानयन्तु पुरुषा यथायोगं यथाक्रमम् ॥ १८४ ॥
तद्वाक्यसमकालं च कृतं सर्वं न्यवेदयत्।
सहदेवो युधां श्रेष्ठो धर्मराजे युधिष्ठिरे ॥ १८५ ॥
तत आज्ञापयामास स राजा राजसत्तमः।
आमन्त्रयध्वं राष्ट्रेषु ब्राह्मणान्भूमिपानथ ॥ १८६ ॥

विशश्च मान्यात् शूद्राश्च सर्वानानयतेति च ।
समाज्ञप्तास्ततो दूताः पाण्डवेयस्य शासनात् ॥ १८७ ॥
आमन्त्रयाबभूवुश्च आनयंश्चापरान्द्रुतम् ।
ततो द्वैपायनो राजन्नृत्विजः समुपानयत् ।
ततस्ते तु यथाकालं कुन्तीपुत्रं युधिष्ठिरम् ॥ १८८ ॥
दीक्षयाञ्चक्रिरे विप्रा राजसूयाय भारत ।
दीक्षितः स तु धर्मात्मा धर्मराजो युधिष्ठिरः ॥ १८९ ॥
जगाम यज्ञायतनं वृतो विप्रैः सहस्रशः ।
ततो युधिष्ठिरो राजा प्रेषयामास पाण्डवम् ॥ १९० ॥
नकुलं हास्तिनपुरं भीष्माय पुरुषर्षभः ।
द्रोणाय धृतराष्ट्राय विदुराय कृपाय च ॥ १९१ ॥
भ्रातृणां चैव सर्वेषां येऽनुरक्ता युधिष्ठिरे ।
(अ.३४) सत्कृत्यामन्त्रितास्तेन आचार्यप्रमुखास्ततः ॥ १९२ ॥
प्रययुः प्रीतमनसो यज्ञं ब्रह्मपुरःसराः ।
द्रष्टुकामाः सभां चैव धर्मराजं च पाण्डवम् ॥ १९३ ॥
दिग्भ्यः सर्वे समापेतुः क्षत्रियास्तत्र भारत ।
तत्सदः पार्थिवैः कीर्णं ब्राह्मणैश्च महर्षिभिः ॥ १९४ ॥
भ्राजते स्म तदा राजन्नाकपृष्ठं यथामरैः ।
(अ.३५) पितामहं गुरुं चैव प्रत्युद्गम्य युधिष्ठिरः ॥ १९५ ॥
युयोज स यथायोगमधिकारेष्वनन्तरम् ।
भक्ष्यभोज्याधिकारेषु दुःशासनमयोजयत् ॥ १९६ ॥
परिग्रहे ब्राह्मणानामश्वत्थामानमुक्तवान् ।
राज्ञां तु प्रतिपूजार्थं सञ्जयं स न्ययोजयत् ॥ १९७ ॥
कृताकृतपरिज्ञाने भीष्मद्रोणौ महामती ।
हिरण्यस्य सुवर्णस्य रत्नानां चान्ववेक्षणे ॥ १९८ ॥

दक्षिणानां च वै दाने कृपं राजा न्ययोजयत्।
क्षत्ता व्ययकरस्त्वासीद्विदुरः सर्वधर्मवित् ॥ १९९ ॥
दुर्योधनस्त्वर्हणानि प्रतिजग्राह सर्वशः।
चरणक्षालने कृष्णो ब्राह्मणानां स्वयं ह्यभूत् ॥ २०० ॥
यथादेवास्तथा विप्रा दक्षिणान्नमहाधनैः।
ततृपुः सर्ववर्णाश्च तस्मिन्यज्ञे मुदान्विताः ॥ २०१ ॥
(अ.३६) ततोऽभिषेचनीयेऽह्नि ब्राह्मणा राजभिः सह।
अन्तर्वेदीं प्रविविशुः सत्कारार्हा महर्षयः ॥ २०२ ॥
ततो भीष्मोऽब्रवीद्राजन् धर्मराजं युधिष्ठिरम्।
क्रियतामर्हणं राज्ञां यथार्हमिति भारत ॥ २०३ ॥
एषामेकैकशो राजन्नर्घ आनीयतामिति।
अथ चैषां वरिष्ठाय समर्थायोपनीयताम् ॥ २०४ ॥
युधि– कस्मै भवान्मन्यतेऽर्घमेकस्मै कुरुनन्दन।
उपनीयमानं युक्तं च तन्मे ब्रूहि पितामह ॥ २०५ ॥
ततो भीष्मः शान्तनवो बुद्ध्या निश्चित्य वीर्यवान्।
वार्ष्णेयं मन्यते कृष्णमर्हणीयतमं भुवि ॥ २०६ ॥
तस्मै भीष्माभ्यनुज्ञातः सहदेवः प्रतापवान्।
उपजह्रेऽथ विधिवद्वार्ष्णेयायार्घमुत्तमम् ॥ २०७ ॥
प्रतिजग्राह तत्कृष्णः शास्त्रदृष्टेन कर्मणा।
शिशुपालस्तु तां पूजां वासुदेवे न चक्षमे ॥ २०८ ॥
(अ.३७) नायं युक्तः समाचारः पाण्डवेषु महात्मसु।
यत्कामात्पुण्डरीकाक्षं पाण्डवार्चितवानसि।
बाला यूयं न जानीध्वं धर्मः सूक्ष्मो हि पाण्डवाः ॥ २०९ ॥
अयं च स्मृत्यतिक्रान्तो ह्यापगेयोल्पदर्शनः।
कथं ह्यराजा दाशार्हो मध्ये सर्वमहीक्षिताम् ॥ २१० ॥

अर्हणामर्हति तथा यथा युष्माभिरर्चितः।
नैवर्त्विङ्नैव चाचार्यो न राजा मधुसूदनः ॥ २११ ॥
अर्चितश्च कुरुश्रेष्ठ किमन्यत् प्रियकाम्यया।
अथवाभ्यर्चनीयोऽयं युष्माकं मधुसूदनः ॥ २१२ ॥
किं राजभिरिहानीतैरवमानाय भारत।
वयं तु न भयादस्य कौन्तेयस्य महात्मनः ॥ २१३ ॥
प्रयच्छामः करान्सर्वे न लोभान्न च सान्त्वनात्।
अस्य धर्मप्रवृत्तस्य पार्थिवत्वं चिकीर्षतः ॥ २१४ ॥
करानस्मै प्रयच्छामः सोऽयमस्मान्न मन्यते।
किमन्यदवमानाद्धि यदेनं राजसंसदि ॥ २१५ ॥
अप्राप्तलक्षणं कृष्णमर्घेनार्चितवानसि।
यदि भीताश्च कौन्तेयाः कृपणाश्च तपस्विनः ॥ २१६ ॥
ननु त्वयाऽपि बोद्धव्यं यां पूजां माधवार्हसि।
अयुक्तामात्मनः पूजां त्वं पुनर्बहु मन्यसे ॥ २१७ ॥
हविषः प्राप्य निष्यन्दं प्राशिता श्वेव निर्जने।
क्लीबे दारक्रिया यादृगन्धे वा रूपदर्शनम् ॥ २१८ ॥
अराज्ञो राजवत्पूजा तथा ते मधुसूदन।
दृष्टो युधिष्ठिरो राजा दृष्टो भीष्मश्च यादृशः ॥ २१९ ॥
वासुदेवोप्ययं दृष्टः सर्वमेतद्यथातथम्।
इत्युक्त्वा शिशुपालस्तानुत्थाय परमासनात् ॥ २२० ॥
निर्ययौ सदसस्तस्मात्सहितो राजभिस्तदा।
(अ.३८) ततो युधिष्ठिरो राजा शिशुपालमुपाद्रवत् ॥ २२१ ॥
उवाच चैनं मधुरं सान्त्वपूर्वमिदं वचः।
नेदं युक्तं महीपाल यादृशं वै त्वमुक्तवान् ॥ २२२ ॥
अधर्मश्च परो राजन्पारुष्यं च निरर्थकम्।
न हि धर्मं परं जातु नावबुध्येत पार्थिवः ॥ २२३ ॥

भीष्मः शान्तनवस्त्वेनं मावमंस्थास्त्वमन्यथा ।
पश्य चैतान्महीपालांस्त्वत्तो वृद्धतरान्बहून् ॥ २२४ ॥
मृष्यन्ते चार्हणां कृष्णे तद्वत्त्वं क्षन्तुमर्हसि ।
भीष्म- नास्मै देयो ह्यनुनयो नायमर्हति सान्त्वतम् ॥ २२५ ॥
लोकवृद्धतमे कृष्णे योऽर्हणां नाभिमन्यते ।
न हि केवलमस्माकमयमर्च्यतमोऽच्युतः ॥ २२६ ॥
त्रयाणामपि लोकानामर्चनीयो महाभुजः ।
अयं तु पुरुषो बालः शिशुपालो न बुध्यते ॥ २२७ ॥
सर्वत्र सर्वदा कृष्णं तस्मादेवं प्रभाषते ।
अथैनां दुष्कृतां पूजां शिशुपालो व्यवस्यति ॥ २२८ ॥
दुष्कृतायां यथान्यायं तथाऽयं कर्तुमर्हति ।
(अ.३९) एवमुक्त्वा ततो भीष्मो विरराम महाबलः ॥ २२९ ॥
व्याजहारोत्तरं तत्र सहदेवोऽर्थवद्वचः ।
केशवं केशिहन्तारमप्रमेयपराक्रमम् ॥ २३० ॥
पूज्यमानं मया यो वः कृष्णं न सहते नृपाः ।
सर्वेषां बलिनां मूर्ध्नि मयेदं निहितं पदम् ॥ २३१ ॥
एवमुक्ते मया सम्यगुत्तरं प्रब्रवीतु सः ।
स एव हि मया वध्यो भविष्यति न संशयः ॥ २३२ ॥
ततो न व्याजहारैषां कश्चिद्बुद्धिमतां सताम् ।
पूजयित्वा च पूजार्हान्ब्रह्मक्षत्रविशेषवित् ॥ २३३ ॥
सहदेवो नृणां देवः समापयत कर्म तत् ।
तस्मिन्नभ्यर्चिते कृष्णे सुनीथः शत्रुकर्षणः ॥ २३४ ॥
यज्ञोपघाताय ततः सोमन्त्रयत राजभिः ।
तत्राहूता गताः सर्वे सुनीथप्रमुखा गणाः ॥ २३५ ॥
समदृश्यन्त सङ्क्रुद्धा विवर्णवदनास्तथा ।
(अ.४०) ततः सागरसङ्काशं दृष्ट्वा नृपतिमण्डलम् ॥ २३६ ॥

रोषात्प्रचलितं सर्वमिदमाह युधिष्ठिरः।
भीष्मं मतिमतां मुख्यं वृद्धं कुरुपितामहम् ॥ २३७ ॥
अत्र यत्प्रतिपत्तव्यं तन्मे ब्रूहि पितामह।
यज्ञस्य च न विघ्नः स्यात्प्रजानां च हितं भवेत् ॥ २३८ ॥
यथा सर्वत्र तत्सर्वं ब्रूहि मेऽद्य पितामह।
उवाचेदं वचो भीष्मस्ततः कुरुपितामहः ॥ २३९ ॥
मा भैस्त्वं कुरुशार्दूल श्वा सिंहं हन्तुमर्हति।
शिवः पन्थाः सुनीतोऽत्र मया पूर्वतरं वृतः ॥ २४० ॥
न हि संबुध्यते यावत्सुप्तः सिंह इवाच्युतः।
तेन सिंहीकरोत्येतान्नृसिंहश्चेदिपुङ्गव. ॥ २४१ ॥
आदातु च नरव्याघ्रो यं यमिच्छत्ययं तदा।
तस्य विप्लवते बुद्धिरेवं चेदिपतेर्यथा ॥ २४२ ॥
इति तस्य वचः श्रुत्वा ततश्चेदिपतिर्नृपः।
भीष्मं रूक्षाक्षरा वाचः श्रावयामास भारत ॥ २४३ ॥
शिशु- विभीषिकाभिर्बह्वीभिर्भीषयन्सर्वपार्थिवान्।
(अ.४१) न व्यपत्रपसे कस्माद्वृद्धः सन्कुलपांसन. ॥ २४४ ॥
युक्तमेतत्तृतीयायां प्रकृतौ वर्तता त्वया।
वक्तुं धर्मादपेतार्थं त्वं हि सर्वकुरूत्तमः ॥ २४५ ॥
अवलिप्तस्य मूर्खस्य केशवं स्तोतुमिच्छतः।
कथं भीष्म न ते जिह्वा शतधेयं विदीर्यते ॥ २४६ ॥
यत्र कुत्सा प्रयोक्तव्या भीष्म बालतरैर्नरैः।
तमिमं ज्ञानवृद्धः सन्गोपं संस्तोतुमिच्छसि ॥ २४७ ॥
(अ.४२) केशवेन कृतं कर्म जरासन्धवधे तदा।
भीमसेनार्जुनाभ्यां च कस्तत्साध्विति मन्यते ॥ २४८ ॥
अद्वारेण प्रविष्टेन छद्मना ब्रह्मवादिना।
इदं त्वाश्चर्यभूतं मे यदिमे पाण्डवास्त्वया ॥ २४९ ॥

अपकृष्टा॰ सतां मार्गान्मन्यन्ते तच्च साध्विति ।
(अ.४४) ततश्चेदिपतेः श्रुत्वा भीष्मः स कटुकं वच॰ ॥ २५० ॥
उवाचेदं वचो राजंश्चेदिराजस्य शृण्वत॰ ।
उक्तस्योक्तस्य नेहान्तमहं समुपलक्षये ॥ २५१ ॥
यत्तु वक्ष्यामि तत्सर्व शृणुध्व वसुधाधिपा॰ ।
एष तिष्ठति गोविन्दः पूजितोऽस्माभिरच्युतः ॥ २५२ ॥
यस्य यस्त्वरते बुद्धिर्मरणाय स माधवम् ।
कृष्णमाह्वयतामद्य युद्धे चक्रगदाधरम् ॥ २५३ ॥
(अ.४५) ततः श्रुत्वैव भीष्मस्य चेदिराडुरुविक्रमः ।
युयुत्सुर्वासुदेवेन वासुदेवमुवाच ह ॥ २५४ ॥
आह्वये त्वां रणं गच्छ मया सार्ध जनार्दन ।
यावदद्य निहन्मि त्वां सहितं सर्वपाण्डवै॰ ॥ २५५ ॥
एवमुक्तस्तत कृष्णो मृदुपूर्वमिदं वचः ।
उवाच पार्थिवान्सर्वान्स समक्षं च वीर्यवान् ॥ २५६ ॥
एष न॰ शत्रुरत्यन्तं पार्थिवा॰ सात्वतीसुत ।
सात्वतानां नृशंसात्मा न हितोनपकारिणाम् ॥ २५७ ॥
प्राग्ज्योतिषपुरं यातानस्माञ्ज्ञात्वा नृशंसकृत् ।
अदहद्द्वारकामेष स्वस्रीयः सन्नराधिपा॰ ॥ २५८ ॥
क्रीडतो भोजराजस्य एष रैवतके गिरौ ।
हत्वा बद्ध्वा च तान्सर्वानुपायात्स्वपुरं पुरा ॥ २५९ ॥
अश्वमेधे हयं मेध्यमुत्सृष्टं रक्षिभिर्वृतम् ।
पितुर्मे यज्ञविघ्नार्थमहरत्पापनिश्चय॰ ॥ २६० ॥
सौवीरान्प्रतियातां च बभ्रोरेष तपस्विनः ।
भार्यामभ्यहरन्मोहादकामां तामितो गताम् ॥ २६१ ॥
एष मायाप्रतिच्छन्नः करूषार्थे तपस्विनीम् ।
जहार भद्रां वैशालीं मातुलस्य नृशंसकृत् ॥ २६२ ॥

पितृष्वसुः कृते दुःखं सुमहन्मर्षयाम्यहम्।
दिष्ट्या हीदं सर्वराज्ञां सन्निधावद्य वर्तते ॥ २६३ ॥
इमं त्वस्य न शक्ष्यामि क्षन्तुमद्य व्यतिक्रमम्।
अवलेपाद्वधार्हस्य समग्रे राजमण्डले ॥ २६४ ॥
तस्य तद्वचनं श्रुत्वा शिशुपालः प्रतापवान्।
जहास स्वनवद्धासं वाक्यं चेदमुवाच ह ॥ २६५ ॥
क्षम वा यदि ते श्रद्धा मा वा कृष्ण मम क्षम।
क्रुद्धाद्वापि प्रसन्नाद्वा किं मे त्वत्तो भविष्यति ॥ २६६ ॥
तथा ब्रुवत एवास्य भगवान्मधुसूदनः।
मनसाऽचिन्तयच्चक्रं दैत्यवर्गनिषूदनम् ॥ २६७ ॥
एतस्मिन्नेव काले तु चक्रे हस्तगते सति।
उवाच भगवानुच्चैर्वाक्यं वाक्यविशारदः ॥ २६८ ॥
अपराधशतं क्षाम्यं मातुरस्यैव याचने।
दत्तं मया याचितं च तानि पूर्णानि पार्थिवाः ॥ २६९ ॥
अधुना वधयिष्यामि पश्यतां वो महीक्षिताम्।
एवमुक्त्वा यदुश्रेष्ठश्चेदिराजस्य तत्क्षणात् ॥ २७० ॥
व्यपाहरच्छिरः क्रुद्धश्चक्रेणामित्रकर्षणः।
चेदीनामाधिपत्ये च पुत्रमस्य महीपतेः ॥ २७१ ॥
अभ्यषिञ्चत्तदा पार्थः सह तैर्वसुधाधिपैः।
समापयामास च तं राजसूयं महाक्रतुम् ॥ २७२ ॥
ततस्त्ववभृथस्नातं धर्मात्मानं युधिष्ठिरम्।
समस्तं पार्थिवं क्षत्रमुपगम्येदमब्रवीत् ॥ २७३ ॥
दिष्ट्या वर्धसि धर्मज्ञ साम्राज्यं प्राप्तवानसि।
आजमीढाजमीढानां यशः संवर्धितं त्वया ॥ २७४ ॥
आपृच्छामो नरव्याघ्र सर्वकामैः सुपूजिताः।
स्वराष्ट्राणि गमिष्यामस्तदनुज्ञातुमर्हसि ॥ २७५ ॥

गतेषु पार्थिवेन्द्रेषु सर्वेषु ब्राह्मणेषु च।
प्रययौ पुण्डरीकाक्षस्ततो द्वारवतीं पुरीम् ॥ २७६ ॥
एको दुर्योधनो राजा शकुनिश्चापि सौबलः।
तस्यां सभायां दिव्यायामूषतुस्तौ नरर्षभौ ॥ २७७ ॥

## मयसभायां दुर्योधनप्रलम्भाः, दुर्योधनसन्तापः

(अ.४७) वसन्दुर्योधनस्तस्यां सभायां पुरुषर्षभ।
शनैर्ददर्श तां सर्वां सभां शकुनिना सह ॥ २७८ ॥
तस्यां दिव्यानभिप्रायान्ददर्श कुरुनन्दनः।
न दृष्टपूर्वा ये तेन नगरे नागसाह्वये ॥ २७९ ॥
स कदाचित्सभामध्ये धार्तराष्ट्रो महीपतिः।
स्फाटिकं स्थलमासाद्य जलमित्यभिशङ्कया ॥ २८० ॥
स्ववस्त्रोत्कर्षणं राजा कृतवान्बुद्धिमोहितः ॥ २८१ ॥
ततः स्फाटिकतोयां वै स्फाटिकाम्बुजशोभिताम्।
वापीं मत्वा स्थलमिव सवासाः प्रापतज्जले ॥ २८२ ॥
जले निपतितं दृष्ट्वा भीमसेनो महाबलः।
जहास जहसुश्चैव किंकराश्च सुयोधनम् ॥ २८३ ॥
वासांसि च शुभान्यस्मै प्रददू राजशासनात्।
नामर्षयत्ततस्तेषामवहासममर्षणः ॥ २८४ ॥
पुनर्वसनमुत्क्षिप्य प्रतरिष्यन्निव स्थलम्।
आरुरोह ततः सर्वे जहसुश्च पुनर्जनाः ॥ २८५ ॥
द्वारं तु पिहिताकारं स्फाटिकं प्रेक्ष्य भूमिपः।
प्रविशन्नाहतो मूर्ध्नि व्याघूर्णित इव स्थितः ॥ २८६ ॥
तादृशं च परं द्वारं स्फाटिकोरुकपाटकम्।
विघट्टयन्कराभ्यां तु निष्क्रम्याग्रे पपात ह ॥ २८७ ॥

एवं प्रलम्भान्विविधान्प्राप्य तत्र विशाम्पते ।
पाण्डवैरभ्यनुज्ञातस्ततो दुर्योधनो नृप. ॥ २८८ ॥
अप्रहृष्टेन मनसा राजसूये महाक्रतौ ।
प्रेक्ष्य तामद्भुतामृद्धिं जगाम गजसाह्वयम् ॥ २८९ ॥
प्रमत्तो धृतराष्ट्रस्य पुत्रो दुर्योधनस्तदा ।
नाभ्यभाषत्सुबलजं भाषमाणं पुनः पुनः ॥ २९० ॥
अनेकाग्रं तु तं दृष्ट्वा शकुनिः प्रत्यभाषत ।
दुर्योधन कुतोमूलं निःश्वसन्निव गच्छसि ॥ २९१ ॥
दुर्यो- दृष्ट्वेमां पृथिवीं कृत्स्नां युधिष्ठिरवशानुगाम् ।
तं च यज्ञं तथाभूतं दृष्ट्वा पार्थस्य मातुल ॥ २९२ ॥
श्रियं तथागतां दृष्ट्वा ज्वलन्तीमिव पाण्डवे ।
अमर्षवशमापन्नो दह्यामि न तथोचितः ॥ २९३ ॥
वह्निमेव प्रवेक्ष्यामि भक्षयिष्यामि वा विषम् ।
अपो वापि प्रवेक्ष्यामि न हि शक्ष्यामि जीवितुम् ॥ २९४ ॥
को हि नाम पुमाँल्लोके मर्षयिष्यति सत्त्ववान् ।
सपत्नानृध्यतो दृष्ट्वा हीनमात्मानमेव च ॥ २९५ ॥
सोऽहं न स्त्री न चाप्यस्त्री न पुमान्नापुमानपि ।
योऽहं तां मर्षयाम्यद्य तादृशीं श्रियमागताम् ॥ २९६ ॥
अशक्तश्चैक एवाहं तामाहर्तुं नृपश्रियम् ।
सहायांश्च न पश्यामि तेन मृत्युं विचिन्तये ॥ २९७ ॥

एतानेव विजेष्यामि यदि त्वमनुमन्यसे।
एतेषु विजितेष्वद्य भविष्यति मही मम ॥ ३०१ ॥
सर्वे च पृथिवीपालाः सभा सा च महाधना।
शकुनि- नैते युधि पराजेतुं शक्या देवगणैरपि ॥ ३०२ ॥
द्यूतप्रियश्च कौन्तेयो न स जानाति देवितुम्।
तस्याक्षकुशलो राजन्नादास्येहमसंशयम् ॥ ३०३ ॥
राज्यं श्रियं च तां दीप्तां त्वदर्थं पुरुषर्षभ।
इदं तु सर्वं त्व राज्ञे दुर्योधन निवेदय ॥ ३०४ ॥
अनुज्ञातस्तु ते पित्रा विजेष्ये तान्न संशयः।
दुर्यो- त्वमेव कुरुमुख्याय धृतराष्ट्राय सौबल ॥ ३०५ ॥
निवेदय यथान्यायं नाहं शक्ष्ये निवेदितुम्।
(अ.४९) दुर्योधनवचः श्रुत्वा धृतराष्ट्रं जनाधिपम् ॥ ३०६ ॥
उपगम्य महाप्राज्ञं शकुनिर्वाक्यमब्रवीत्।
दुर्योधनो महाराज विवर्णो हरिणः कृशः ॥ ३०७ ॥
दीनश्चिन्तापरश्चैव त विद्धि मनुजाधिप।
धृत- दुर्योधन कुतोमूलं भृशमार्तोऽसि पुत्रक ॥ ३०८ ॥
अयं त्वां शकुनिः प्राह विवर्णं हरिणं कृशम्।
चिन्तयश्च न पश्यामि शोकस्य तव सम्भवम् ॥ ३०९ ॥
आच्छादयसि प्रावारानश्नासि पिशितौदनम्।
स दीन इव दुर्धर्ष कस्माच्छोचसि पुत्रक ॥ ३१० ॥
दुर्यो- अश्नाम्याच्छादये चाहं यथा कुपुरुषस्तथा।
न मां प्रीणाति मद्भुक्तं श्रियं दृष्ट्वा युधिष्ठिरे ॥ ३११ ॥
तस्मादहं विवर्णश्च दीनश्च हरिणः कृशः।
न क्वचिद्धि मया तादृग्दृष्टपूर्वो न च श्रुतः ॥ ३१२ ॥
यादृग्धनागमो यज्ञे पाण्डुपुत्रस्य धीमतः।
अपर्यन्तं धनौघं तं दृष्ट्वा शत्रोरहं नृप ॥ ३१३ ॥

शमं नैवाभिगच्छामि चिन्तयानो विशाम्पते।

शकुनि- द्यूतप्रियश्च कौन्तेयो न च जानाति देवितुम्॥ ३१४॥

आहूतश्चैष्यति व्यक्तं द्यूतादपि रणादपि।

नियतं तं विजेष्यामि कृत्वा तु कपटं विभो॥ ३१५॥

आनयामि समृद्धिं तां दिव्यां चोपाह्वयस्व तम्।

धृत- क्षत्ता मन्त्री महाप्राज्ञः स्थितो यस्यास्मि शासने॥ ३१६॥

तेन सङ्गम्य वेत्स्यामि कार्यस्यास्य विनिश्चयम्।

दुर्यो- निवर्तयिष्यति त्वासौ यदि क्षत्ता समेष्यति॥ ३१७॥

निवृत्ते त्वयि राजेन्द्र मरिष्येऽहमसंशयम्।

स त्वं मयि मृते राजन्विदुरेण सुखी भव॥ ३१८॥

भोक्ष्यसे पृथिवीं कृत्स्नां किं मया त्वं करिष्यसि।

आर्तवाक्यं तु तत्तस्य प्रणयोक्तं निशम्य सः॥ ३१९॥

धृतराष्ट्रोऽब्रवीत्प्रेष्यान्दुर्योधनमते स्थितः।

स्थूणासहस्रैर्बृहतीं शतद्वारां सभां मम॥ ३२०॥

मनोरमां दर्शनीयामाशु कुर्वन्तु शिल्पिनः।

दुर्योधनस्य शान्त्यर्थमिति निश्चित्य भूमिपः॥ ३२१॥

धृतराष्ट्रो महाराज प्राहिणोद्विदुराय वै।

तच्छ्रुत्वा विदुरो धीमान्धृतराष्ट्रमुपाद्रवत्॥ ३२२॥

मूर्ध्ना प्रणम्य चरणाविदं वचनमब्रवीत्।

नाभिनन्दामि ते राजन्व्यवसायमिमं प्रभो॥ ३२३॥

पुत्रैर्भेदो यथा न स्याद्द्यूतहेतोस्तथा कुरु।

(अ.५०) विदुरस्य मतिं ज्ञात्वा धृतराष्ट्रोऽम्बिकासुतः॥ ३२४॥

दुर्योधनमिदं वाक्यमुवाच विजने पुनः।

अलं द्यूतेन गान्धारे विदुरो न प्रशंसति॥ ३२५॥

न ह्यसौ सुमहाबुद्धिरहितं नो वदिष्यति।

तदलं पुन द्यूतेन द्यूते भेदो हि दृश्यते॥ ३२६॥

भेदे विनाशो राज्यस्य तत्पुत्र परिवर्जय।
दुर्यो– ज्येष्ठोऽयमिति मां मत्वा श्रेष्ठश्चेति विशाम्पते॥ ३२७॥
युधिष्ठिरेण सत्कृत्य युक्तो रत्नपरिग्रहे।
न मे हस्तः समभवद्वसु तत्प्रतिगृह्णतः॥ ३२८॥
अतिष्ठन्त मयि श्रान्ते गृह्य दूराहृतं वसु।
कृतां विन्दुसरोरत्नैर्मयेन स्फाटिकच्छदाम्॥ ३२९॥
अपश्यं नलिनीं पूर्णामुदकस्येव भारत।
वस्त्रमुत्कर्षति मयि प्राहसत्स वृकोदरः॥ ३३०॥
सपत्नेनावहासो मे स मां दहति भारत।
पुनश्च तादृशीमेव वापीं जलजशालिनीम्॥ ३३१॥
मत्वा शिलासमां तोये पतितोऽस्मि नराधिप।
तत्र मां प्राहसत्कृष्णः पार्थेन सह सुस्वरम्॥ ३३२॥
द्रौपदी च सह स्त्रीभिर्व्यथयन्ती मनो मम।
अद्वारेण विनिर्गच्छन्द्वारसंस्थानरूपिणा।
अभिहत्य शिलां भूयो ललाटेनास्मि विक्षतः॥ ३३३॥
भीमसेनेन तत्रोक्तो धृतराष्ट्रात्मजेति च॥ ३३४॥
सम्बोध्य प्रहसित्वा च इतो द्वारं नराधिप।
नामधेयानि रत्नानां पुरस्ताच्च श्रुतानि मे॥ ३३५॥
यानि दृष्टानि मे तस्यां मनस्तपति तच्च मे।
धृत– त्वं वै ज्येष्ठो ज्यैष्ठिनेयः पुत्र मा पाण्डवान्द्विषः॥ ३३६॥
(अ ५४) द्वेष्टा ह्यसुखमादत्ते यथैव निधनं तथा।
तुल्याभिजनवीर्यश्च कथं भ्रातुः श्रियं नृप॥ ३३७॥
पुत्र कामयसे मोहान्मैवं भूः शाम्य मा शुचः।
अथ यज्ञविभूतिं तां काङ्क्षसे भरतर्षभ॥ ३३८॥
ऋत्विजस्तव तन्वन्तु सप्ततन्तुं महाध्वरम्।
आहरिष्यन्ति राजानस्तवापि विपुलं धनम्॥ ३३९॥

अनार्याचरितं तात परस्वस्पृहणं भृशम्।
अव्यापारः परार्थेषु नित्योद्योगः स्वकर्मसु ॥ ३४० ॥
रक्षणं समुपात्तानामेतद्वैभवलक्षणम्।
अन्तर्वेद्यां ददद्वित्तं कामाननुभवन्प्रियान् ॥ ३४१ ॥
क्रीडन्स्त्रीभिर्निरातङ्कः प्रशाम्य भरतर्षभ ।
दुर्यो- यस्य नास्ति निजा प्रज्ञा केवलं तु बहुश्रुतः ॥ ३४२ ॥
(अ.५५) न स जानाति शास्त्रार्थं दर्वी सूपरसानिव।
जानन्वै मोहयसि मां नावि नौरिव संयता ॥ ३४३ ॥
स्वार्थे किं नावधानं ते उताहो द्वेष्टि मां भवान्।
प्रच्छन्नो वा प्रकाशो वा योगो योरिं प्रबाधते ॥ ३४४ ॥
तद्वै शस्त्रं शस्त्रविदो न शस्त्रं छेदनं स्मृतम्।
शत्रुश्चैव हि मित्रं च न लेख्यं न च मातृका ॥ ३४५ ॥
यो वे सन्तापयति य स शत्रुः प्रोच्यते नृप।
असन्तोषः श्रियो मूलं तस्मात्तं कामयाम्यहम् ॥ ३४६ ॥
समुच्छ्रये यो यतते स राजन्परमो नयः।
द्वावेतौ ग्रसते भूमिः सर्पो बिलशयानिव ॥ ३४७ ॥
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम्।
नास्ति वै जातितः शत्रुः पुरुषस्य विशांपते ॥ ३४८ ॥
येन साधारणी वृत्तिः स शत्रुर्नेतरो जनः।
शत्रुपक्षं समृध्यन्तं यो मोहात्समुपेक्षते ॥ ३४९ ॥
व्याधिराप्यायित इव तस्य मूलं छिनत्ति सः।
नाप्राप्य पाण्डवैश्वर्यं संशयो मे भविष्यति ॥ ३५० ॥
अवाप्स्ये वा श्रियं तां हि शिष्ये वा निहतो युधि।
एतादृशस्य किं मेद्य जीवितेन विशांपते ॥ ३५१ ॥
वर्धन्ते पाण्डवा नित्यं वयं त्वस्थिरवृद्धयः।

## द्यूतविचारः, प्रथमद्यूतम्, द्रौपदीवस्त्रहरणम्

(अ.५९) अयमुत्सहते राजञ्छ्रियमाहर्तुमक्षवित् ॥ ३५२ ॥
द्यूतेन पाण्डुपुत्रेभ्यस्तदनुज्ञातुमर्हसि ।

धृत– सर्वथा पुत्र बलिभिर्विग्रहो मे न रोचते ॥ ३५३ ॥
वैरं विकारं सृजति तद्वै शस्त्रमनायसम् ॥ ३५४ ॥

दुर्यो– द्यूते पुराणैर्व्यवहारः प्रणीत-
स्तत्रात्ययो नास्ति न सम्प्रहारः ।
तद्रोचतां शकुनेर्वाक्यमद्य
दुरोदरं पाण्डवैस्त्वं कुरुष्व ॥ ३५५ ॥
ततो विद्वान्विदुरं मन्त्रिमुख्य
मुवाचेदं धृतराष्ट्रो नरेन्द्रः ।
युधिष्ठिरं राजपुत्रं च गत्वा
मद्वाक्येन क्षिप्रमिहानयस्व ॥ ३५६ ॥
सभेयं मे बहुरत्ना विचित्रा
शय्यासनैरुपपन्ना महार्हैः ।
सा दृश्यतां भ्रातृभिः सार्धमेत्य
सुहृद्द्यूतं वर्ततामत्र चेति ॥ ३५७ ॥

(अ.५८) ततः प्रायाद्विदुरोऽश्वैरुदारै
र्मनीषिणां पाण्डवानां सकाशे ।

विदुर– इदं तु त्वां कुरुराजोऽभ्युवाच
पूर्वं पृष्ट्वा कुशलं चाव्ययं च ॥ ३५८ ॥
इयं सभा त्वत्सभातुल्यरूपा
भ्रातृणां ते दृश्यतामेत्य पुत्र ।
समागम्य भ्रातृभिः पार्थ तस्यां
सुहृद्द्यूतं क्रियतां रम्यतां च ॥ ३५९ ॥

युधि- नाहं राज्ञो धृतराष्ट्रस्य शासना-
न्न गन्तुमिच्छामि कवे दुरोदरम्।
आहूतोऽहं न निवर्ते कदाचि-
त्तदाहितं शाश्वतं वै व्रतं मे ॥ ३६० ॥
एवमुक्त्वा विदुरं धर्मराजः
प्रायात्रिकं सर्वमाज्ञाप्य तूर्णम्।
प्रायाच्छ्वोभूते सगणः सानुयात्रः।
सह स्त्रीभिर्द्रौपदीमादि कृत्वा ॥ ३६१ ॥
दैवं हि प्रज्ञां मुष्णाति चक्षुस्तेज इवापतत्।
धातुश्च वशमन्वेति पाशैरिव नरः सितः ॥ ३६२ ॥
इत्युक्त्वा प्रययौ राजा सह क्षत्रा युधिष्ठिरः।
स हास्तिनपुरं गत्वा धृतराष्ट्रगृहं ययौ ॥ ३६३ ॥
ततो हर्षः समभवत्कौरवाणां विशाम्पते।
(अ.५९) प्रविश्य तां सभां पार्था युधिष्ठिरपुरोगमाः ॥ ३६४ ॥
यथावयः समेयाना उपविष्टा यथार्हतः।
तेषु तत्रोपविष्टेषु सर्वेष्वथ नृपेषु च ॥ ३६५ ॥
शकुनिः सौबलस्तत्र युधिष्ठिरमभाषत।
उपस्तीर्णा सभा राजन्सर्वे त्वयि कृतक्षणाः ॥ ३६६ ॥
अक्षानुप्त्वा देवनस्य समयोऽस्तु युधिष्ठिर।
युधि- अस्मिन्समागमे केन देवनं मे भविष्यति ॥ ३६७ ॥
प्रतिपाणश्च कोन्योऽस्ति ततो द्यूतं प्रवर्तताम्।
दुर्यो- अहं दातास्मि रत्नानां धनानां च विशाम्पते ॥ ३६८ ॥
मदर्थे देविता चायं शकुनिर्मातुलो मम।
(अ.६०) उपोह्यमाने द्यूते तु राजानः सर्व एव ते ॥ ३६९ ॥
धृतराष्ट्रं पुरस्कृत्य विविशुस्तां सभां ततः।
भीष्मो द्रोणः कृपश्चैव विदुरश्च महामतिः ॥ ३७० ॥

नातिप्रीतेन मनसा तेन्ववर्तन्त भारत।
प्रावर्तत महाराज सुहृद्द्यूतमनन्तरम् ॥ ३७१ ॥

युधि- अयं बहुधनो राजन्सागरावर्तसम्भवः।
मणिर्हारोत्तरः श्रीमान्कनकोत्तमभूषणः ॥ ३७२ ॥
एतद्राजन्मम धनं प्रतिपाणोऽस्ति कस्तव।

दुर्यो- सन्ति मे मणयश्चैव धनानि सुबहूनि च ॥ ३७३ ॥
मत्सरश्च न मेऽर्थेषु जयस्वैनं दुरोदरम्।
तता जग्राह शकुनिस्तानक्षानक्षतत्त्ववित् ॥ ३७४ ॥
जितमित्येव शकुनिर्युधिष्ठिरमभाषत।

युधि- सन्ति निष्कसहस्रस्य भाण्डिन्यो भरिताः शुभाः ॥ ३७५ ॥

(अ.६१) कोशो हिरण्यमक्षय्यं जातरूपमनेकशः।
शतं दासीसहस्राणि तरुण्यो हेमभद्रिकाः ॥ ३७६ ॥
एतावन्ति च दासानां सहस्राण्युत सन्ति मे।
सहस्रसंख्या नागा मे मत्तास्तिष्ठन्ति सौबल ॥ ३७७ ॥
रथास्तावन्त एवेमे हेमदण्डाः पताकिनः।
रथानां शकटानां च श्रेष्ठानां चायुतानि मे ॥ ३७८ ॥
ताम्रलोहैः परिवृता निधयो ये चतुःशताः।
पञ्चद्रौणिक एकैकः सुवर्णस्याहतस्य वै ॥ ३७९ ॥
एतद्राजन्मम धनं तेन दीव्याम्यहं त्वया।
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ॥ ३८० ॥
जितमित्येव शकुनिर्युधिष्ठिरमभाषत।

(अ.६२) एवं प्रवर्तिते द्यूते घोरे सर्वापहारिणि ॥ ३८१ ॥
सर्वसंशयनिर्मोक्ता विदुरो वाक्यमब्रवीत्।
महाराज विजानीहि यत्त्वां वक्ष्यामि भारत।
मुमूर्षोरौषधमिव न रोचेतापि ते श्रुतम् ॥ ३८२ ॥

यद्वै पुरा जातमात्रो रुराव
गोमायुवद्विस्वरं पापचेताः।
दुर्योधनो भारताना कुलघ्नः
सोयं युक्तो भवतां कालहेतुः॥ ३८३॥

निग्रहादस्य पापस्य मोदन्तां कुरव· सुखम्।
काकेनेमांश्चित्रवर्हान् शार्दूलान्क्रोष्टुकेन च॥ ३८४॥

क्षीणीध्व पाण्डवान्राजन्मा मज्जीः शोकसागरे।
त्यजेत्कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत्
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्॥ ३८५॥

(अ.६१) दुर्योधनो ग्लहते पाण्डवेन
प्रीयायसे त्वं जयतीति तच्च।
अतिनर्मा जायते सम्प्रहारो
यतो विनाशः समुपैति पुंसाम्॥ ३८६॥

जानीमहे देवितं सौवलस्य
वेद द्यूते निकृतिं पार्वतीयः।
यतः प्राप्त· शकुनिस्तत्र यातु
मा यूयुधो भारत पाण्डवेयान्॥ ३८७॥

दुर्यो- (अ.६४) परेषामेव यशसा श्लाघसे त्वं
सदा क्षत्तः कुत्सयन्धार्तराष्ट्रान्।
जानीमहे विदुर यत्प्रियस्त्वं
बालानिवास्मानवमन्यसे नित्यमेव॥ ३८८॥

उत्सङ्गे च व्याल इवाहितोऽसि
मार्जारवत्पोषकं चोपहंसि।
भर्तृघ्नं त्वां न हि पापीय आहु-
स्तस्मात्क्षत्त· किं न विभेषि पापात्॥ ३८९॥

न वासयेत्पारवर्ग्यं द्विषन्त
विशेषत क्षत्तरहितं मनुष्यम्।
स यत्रेच्छसि विदुर तत्र गच्छ
सुसान्त्विता ह्यसती स्त्री जहाति ॥ ३९० ॥

विदुर- अबालत्वं मन्यसे राजपुत्र
बालोऽहमित्येव सुमन्दबुद्धे।
य सोहृदे पुरुषं स्थापयित्वा
पश्चादेन दूषयते स बाल• ॥ ३९१ ॥

लभ्यते खलु पापीयान्नरो नु प्रियवागिह।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभ• ॥ ३९२ ॥
आशीविषान्नेत्रविषान्कोपयेन्न च पण्डित•।
एष तेऽह वदामीदं प्रयत्त कुरुनन्दन ॥ ३९३ ॥

शकुनि- बहुवित्त पराजैषी पाण्डवाना युधिष्ठिर।
(अ.६५) आचक्ष्व वित्त कौन्तेय यदि तेऽस्त्यपराजितम् ॥ ३९४॥

युधि- गवाश्वं बहुधेनूकमसङ्ख्येयमजाविकम्।
पुरं जनपदो भूमिरब्राह्मणधनै• सह ॥ ३९५ ॥
राजपुत्रा इमे राजञ्छोभन्ते यैर्विभूषिता ।
कुण्डलानि च निष्काश्च सर्वं राजविभूषणम् ॥ ३९६ ॥
श्यामो युवा लोहिताक्ष सिंहस्कन्धो महाभुज•।
नकुलो ग्लह एवैको विद्ध्येतन्मम तद्धनम् ॥ ३९७ ॥

अय धर्मान्सहदेवोनुशास्ति
लोके ह्यस्मिन् पण्डिताख्या गतश्च।
अनर्हता राजपुत्रेण तेन
दीव्याम्यहं चाप्रियवत्प्रियेण ॥ ३९८ ॥
यो न• सङ्ख्ये नौरिव पारनेता
जेता रिपूणा राजपुत्रस्तरस्वी।

अनर्हता लोकवीरेण तेन
दीव्याम्यहं शकुने फाल्गुनेन ॥ ३९९ ॥
यो नो नेता युधि नः प्रणेता
यथा वज्री दानवशत्रुरेकः।
अनर्हता राजपुत्रेण तेन
दीव्याम्यहं भीमसेनेन राजन् ॥ ४०० ॥
अहं विशिष्टः सर्वेषां भ्रातॄणां दयितस्तथा।
कुर्यामहं जितः कर्म स्वयमात्मन्युपप्लुते ॥ ४०१ ॥
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ४०२ ॥

शकुनि– एतत्पापिष्ठमकरोर्यदात्मानं पराजये।
शिष्टे सति धने राजन्पाप आत्मपराजयः ॥ ४०३ ॥
अस्ति ते वै प्रिया राज्ञन् ग्लह एकोपराजितः।
पणस्व कृष्णा पाञ्चालीं तयात्मान पुनर्जय ॥ ४०४ ॥

युधि– वेदीमध्या दीर्घकेशी ताम्रास्या नातिलोमशा।
तयैवंविधया राजन्पाञ्चाल्याहं सुमध्यया ॥ ४०५ ॥
ग्लहं दीव्यामि चार्वङ्ग्या द्रौपद्या हन्त सौबल।
एवमुक्ते तु वचने धर्मराजेन धीमता ॥ ४०६ ॥
धिग्धिगित्येव वृद्धानां सभ्यानां निःसृता गिरः।
भीष्मद्रोणकृपादीनां स्वेदश्च समजायत ॥ ४०७ ॥
शिरो गृहीत्वा विदुरो गतसत्व इवाभवत्।
धृतराष्ट्रस्तु तं हृष्टः पर्यपृच्छत्पुनः पुनः ॥ ४०८ ॥
किं जितं किं जितमिति ह्याकारं नाभ्यरक्षत।
जहर्ष कर्णोऽतिभृशं सह दुःशासनादिभिः ॥ ४०९ ॥
इतरेषां तु सभ्यानां नेत्रेभ्यः प्रापतज्जलम्।
सौबलस्त्वविधायैवं जितकाशी मदोत्कटः।
जितमित्येव तानक्षान्पुनरेवान्वपद्यत ॥ ४१० ॥

दुर्यो- (अ.६६)
एहि क्षत्तर्द्रौपदीमानयस्व
प्रियां भार्यां सम्मतां पाण्डवानाम्।
सम्मार्जतां वेश्म परैतु शीघ्रं
तत्रास्तु दासीभिरपुण्यशीला ॥ ४११ ॥

विदुर- न हि दासीत्वमापन्ना कृष्णा भवितुमर्हति।
अनीशेन हि राज्ञैषा पणे न्यस्तेति मे मतिः ॥ ४१२ ॥

दुर्यो- (अ.६७)
प्रातिकामिन्द्रौपदीमानयस्व
न ते भयं विद्यते पाण्डवेभ्यः।
क्षत्ता ह्ययं विवदत्येव भीतो
न चास्माकं वृद्धिकामः सदैव ॥ ४१३ ॥

एवमुक्तः प्रातिकामी स सूतः
प्रायाच्छीघ्रं राजवचो निशम्य।
प्रविश्य च श्वेव हि सिंहगोष्ठं
समासदन्महिषीं पाण्डवानाम् ॥ ४१४ ॥

प्रातिकामी- युधिष्ठिरो द्यूतमदेन मत्तो
दुर्योधनो द्रौपदि त्वामजैषीत्।
सा त्वं प्रपद्यस्व धृतराष्ट्रस्य वेश्म।
नयामि त्वां कर्मणे याज्ञसेनि ॥ ४१५ ॥

द्रौपदी- गच्छ त्वं कितवं गत्वा सभायां पृच्छ सूतज।
किं नु पूर्वं पराजैषीरात्मानमथवा नु माम् ॥ ४१६ ॥

सभां गत्वा स चोवाच द्रौपद्यास्तद्वचस्तदा।

दुर्यो- इहैवागत्य पाञ्चाली प्रश्नमेनं प्रभाषताम् ॥ ४१७ ॥
इहैव सर्वे शृण्वन्तु तस्याश्चैतस्य यद्वचः।
स गत्वा राजभवनं दुर्योधनवशानुगः ॥ ४१८ ॥
उवाच द्रौपदीं सूतः प्रातिकामी व्यथन्निव ॥ ४१९ ॥

सभ्यास्त्वमी राजपुत्र्याह्वयन्ति
मन्ये प्राप्तः संशयः कौरवाणाम्।
न वै समृद्धिं पालयते लघीयान्
यस्त्वां सभां नेष्यति राजपुत्रि ॥ ४२० ॥

द्रौपदी– एवं नूनं व्यदधात्संविधाता
स्पर्शावुभौ स्पृशतो वृद्धबालौ।
धर्मं त्वेकं परमं प्राह लोके
स नः शर्म धास्यति गोप्यमानः ॥ ४२१ ॥

सोयं धर्मो मात्यगात्कौरवान्वै
सभ्यान् गत्वा पृच्छ धर्म्यं वचो मे।
ते मां ब्रूयुर्निश्चितं तत्करिष्ये
धर्मात्मानो नीतिमन्तो वरिष्ठाः ॥ ४२२ ॥

श्रुत्वा सूतस्तद्वचो याज्ञसेन्याः
सभां गत्वा प्राह वाक्यं तदानीम्।
अधोमुखास्ते न च किंचिदूचु-
र्निर्बन्धं तं धार्तराष्ट्रस्य बुद्ध्वा ॥ ४२३ ॥

कुरून्भजस्वायतपत्ननेत्रे
धर्मेण लब्धासि सभां परैहि ॥ ४२६ ॥
ततः समुत्थाय सुदुर्मना· सा
विवर्णमामृज्य मुखं करेण।
आर्ता प्रदुद्राव यत· स्त्रियस्ता
वृद्धस्य राज्ञ· कुरुपुङ्गवस्य ॥ ४२७ ॥
ततो जवेनाभिससार रोषा-
दु शासनस्तामभिगर्जमान·।
दीर्घेषु नीलेष्वथ चोर्मिमत्सु
जग्राह केशेषु नरेन्द्रपत्नीम् ॥ ४२८ ॥
स तां पराकृष्य सभासमीप-
मानीय कृष्णामतिदीर्घकेशीम्।
दु·शासनो नाथवतीमनाथव-
च्चकर्ष वायु· कदलीमिवार्त्ताम् ॥ ४२९ ॥
सा कृष्यमाणा नमिताङ्गयष्टि·
शनैरुवाचाथ रजस्वलास्मि।
एकं च वासो मम मन्दबुद्धे।
सभा नेतुं नार्हसि मामनार्य ॥ ४३० ॥
ततोऽब्रवीत्तां प्रसभं निगृह्य
केशेषु कृष्णेषु तदा स कृष्णाम्।
रजस्वला वा भव याज्ञसेनि
एकाम्बरा वाप्यथवा विवस्त्रा।
द्यूते जिता चासि कृतासि दासी
दासीषु वासश्च यथोपजोषम् ॥ ४३१ ॥
प्रकीर्णकेशी पतितार्धवस्त्रा
दु·शासनेन व्यवधूयमाना।

ह्रीमत्यमर्षेण च दह्यमाना
  शनैरिदं वाक्यमुवाच कृष्णा ॥ ४३२ ॥
इमे सभायामुपनीतशास्त्राः
  क्रियावन्तः सर्व एवेन्द्रकल्पाः।
गुरुस्थाना गुरवश्चैव सर्वे
  तेषामग्रे नोत्सहे स्थातुमेवम् ॥ ४३३ ॥
धिगस्तु नष्टः खलु भारतानां
  धर्मस्तथा क्षत्रविदां च वृत्तम्।
यत्र ह्यतीतां कुरुधर्मवेलाम्
  प्रेक्षन्ति सर्वे कुरवः सभायाम् ॥ ४३४ ॥
द्रोणस्य भीष्मस्य च नास्ति सत्त्वं
  क्षत्तुस्तथैवास्य महात्मनोऽपि।
राज्ञस्तथा हीममधर्ममुग्रं
  न लक्षयन्ते कुरुवृद्धमुख्याः ॥ ४३५ ॥

भीष्म- न धर्मसौक्ष्म्यात्सुभगे विवेक्तुं
  शक्नोमि ते प्रश्नमिमं यथावत्
अस्वाम्यशक्तः पणितुं परस्वं
  स्त्रियाश्च भर्तुर्वशतां समीक्ष्य ॥ ४३६ ॥
द्यूतेऽद्वितीयः शकुनिर्नरेषु
  कुन्तीसुतस्तेन निसृष्टकामः।
न मन्यते तां निकृतिं युधिष्ठिर-
  स्तस्मान्न ते प्रश्नमिमं ब्रवीमि ॥ ४३७ ॥

द्रौपदी- अशुद्धभावैर्निकृतिप्रवृत्तै-
  रबुध्यमानः कुरुपाण्डवाग्र्यः।
सम्भूय सर्वैश्च जितोऽपि यस्मात्
  पश्चादयं कैतवमभ्युपेतः ॥ ४३८ ॥

तिष्ठन्ति चेमे कुरव सभाया-
मीशा. सुतानां च तथा स्नुपाणाम्।
समीक्ष्य सर्वे मम चापि वाक्यं
विब्रूत मे प्रश्नमिमं यथावत्॥ ४३९॥
तथा ब्रुवन्तीं करुणं रुदन्ती-
मवेक्षमाणां कृपणान्पतींस्तान्।
वृकोदर. प्रेक्ष्य युधिष्ठिरं च
चकार कोपं परमार्तरूप.॥ ४४०॥

भीम- भवन्ति गेहे बन्धक्य. कितवाना युधिष्ठिर।
(अ.६८) न ताभिरुत दीव्यन्ति दया चैवास्ति तास्वपि॥ ४४१॥
एषा ह्यनर्हती बाला पाण्डवान्प्राप्य कौरवै.।
त्वत्कृते क्लिश्यते क्षुद्रैर्नृशंसैरकृतात्मभि.॥ ४४२॥
अस्या. कृते मन्युरयं त्वयि राजन्निपात्यते।
बाहू ते सम्प्रधक्ष्यामि सहदेवाग्निमानय॥ ४४३॥

अर्जुन- न पुरा भीमसेन त्वमीदृशीर्वदिता गिर।
भ्रातरं धार्मिकं ज्येष्ठं कोतिवर्तितुमर्हति॥ ४४४॥
आहूतो हि परै राजा क्षात्रं व्रतमनुस्मरन्।
दीव्यते परकामेन तन्न. कीर्तिकरं महत्॥ ४४५॥

भीम- एवमस्मिन्कृतं विद्या यदि नाहं धनञ्जय।
दीप्तेऽग्नौ सहितौ बाहू निर्दहेयं बलादिव॥ ४४६॥
तथा तान्दु खितान्दृष्ट्वा पाण्डवान्धृतराष्ट्रजः।
कृष्यमाणां च पाञ्चालीं विकर्ण इदमब्रवीत्॥ ४४७॥
चत्वार्याहुर्नरश्रेष्ठा व्यसनानि महीक्षिताम्।
मृगया पानमक्षाश्च ग्राम्ये चैवातिरक्तताम्॥ ४४८॥
एतेषु हि नर सक्तो धर्ममुत्सृज्य वर्तते।
तथाऽयुक्तेन च कृता क्रिया लोको न मन्यते॥ ४४९॥

तदयं पाण्डुपुत्रेण व्यसने वर्तता भृशम्।
समाहूतेन कितवैरास्थितो द्रौपदीपणः ॥ ४५० ॥
साधारणी च सर्वेषां पाण्डवानामनिन्दिता।
जितेन पूर्वं चानेन पाण्डवेन कृतः पणः ॥ ४५१ ॥
इयं च कीर्तिता कृष्णा सौबलेन पणार्थिना।
एतत्सर्वं विचार्याहं मन्ये न विजितामिमाम् ॥ ४५२ ॥
एतच्छ्रुत्वा महानादः सभ्यानामुदतिष्ठत।
विकर्णं शंसमानानां सौबलं चापि निन्दताम् ॥ ४५३ ॥
तस्मिन्नुपरते शब्दे राधेयः क्रोधमूर्च्छितः।
प्रगृह्य रुचिरं बाहुमिदं वचनमब्रवीत् ॥ ४५४ ॥
यदा सभायां सर्वस्वं न्यस्तवान्पाण्डवाग्रजः।
अभ्यन्तरा च सर्वस्वे द्रौपदी भरतर्षभ ॥ ४५५ ॥
एवं धर्मजितां कृष्णां मन्यसे न जितां कथम्।
मन्यसे वा सभामेतामानीतामेकवाससम् ॥ ४५६ ॥
अधर्मेणेति तत्रापि शृणु मे वाक्यमुत्तमम्।
एको भर्ता स्त्रिया देवैर्विहितः कुरुनन्दन ॥ ४५७ ॥
इयं त्वनेकवशगा बन्धकीति विनिश्चिता।
अस्याः सभामानयनं न चित्रमिति मे मतिः ॥ ४५८ ॥
एकाम्बरधरत्वं वाप्यथवापि विवस्त्रता।
दुःशासन सुबालोऽयं विकर्णः प्राज्ञवादिकः ॥ ४५९ ॥
पाण्डवानां च वासांसि द्रौपद्याश्चाप्युपाहर।
तच्छ्रुत्वा पाण्डवाः सर्वे स्वानि वासांसि भारत ॥ ४६० ॥
अवकीर्योत्तरीयाणि सभायां समुपाविशन्।
ततो दुःशासनो राजन्द्रौपद्या वसनं बलात् ॥ ४६१ ॥
सभामध्ये समाक्षिप्य व्यपाक्रष्टुं प्रचक्रमे।
आकृष्यमाणे वसने द्रौपद्या चिन्तितो हरिः ॥ ४६२ ॥

गोविन्द द्वारकावासिन्कृष्ण गोपीजनप्रिय।
कौरवै. परिभूता मा किं न जानासि केशव ॥ ४६३ ॥
हे नाथ हे रमानाथ व्रजनाथार्तिनाशन।
कौरवार्णवमग्ना मामुद्धरस्व जनार्दन ॥ ४६४ ॥
कृष्ण कृष्ण महायोगिन्विश्वात्मन्विश्वभावन।
प्रपन्ना पाहि गोविन्द कुरुमध्येवसीदतीम् ॥ ४६५ ॥
याज्ञसेन्या वच श्रुत्वा कृष्णो गह्वरितोऽभवत्।
त्यक्त्वा शय्यासनं पद्भ्या कृपालु कृपयाभ्यगात् ॥ ४६६ ॥
आकृष्यमाणे वसने द्रौपद्यास्तु विशाम्पते।
तद्रूपमपरं वस्त्रं प्रादुरासीदनेकश. ॥ ४६७ ॥
नानारागविरागाणि वसनान्यथ वै प्रभो।
प्रादुर्भवन्ति शतशो धर्मस्य परिपालनात् ॥ ४६८ ॥
तदद्भुततमं लोको वीक्ष्य सर्वे महीभृत ।
शशंसुर्द्रौपदीं तत्र कुत्सन्तो धृतराष्ट्रजम् ॥ ४६९ ॥
शशाप तत्र भीमस्तु राजमध्ये बृहत्स्वन.।
पितामहाना पूर्वेषा नाह गतिमवाप्नुयाम् ॥ ४७० ॥
अस्य पापस्य दुर्बुद्धेर्भारतापसदस्य च।
न पिबेयं बलाद्वक्षो भित्वा चेद्रुधिर युधि ॥ ४७१ ॥
यदा तु वाससा राशि सभामध्ये समाचित ।
ततो दु शासन श्रान्तो व्रीडित समुपाविशत् ॥ ४७२ ॥
धिक्शब्दस्तु ततस्तत्र समभूल्लोमहर्षण ।
सभ्याना नरदेवाना दृष्ट्वा कुन्तीसुतास्तथा ॥ ४७३ ॥
ततो बाहू समुत्क्षिप्य निवार्य च सभासद.।
विदुर सर्वधर्मज्ञ इद वचनमब्रवीत् ॥ ४७४ ॥
सभा प्रपद्यते ह्यार्त प्रज्वलन्निव हव्यवाट्।
सं वै सत्येन धर्मेण सभ्या प्रशमयन्त्युत ॥ ४७५ ॥

विकर्णेन यथाप्रश्नमुक्तः प्रश्नो नराधिपाः।
भवन्तोऽपि हि तं प्रश्नं विब्रुवन्तु यथामति॥ ४७६ ॥
विदुरस्य वचः श्रुत्वा नोचुः किञ्चन पार्थिवाः।
कर्णो दुःशासनं त्वाह कृष्णां दासीं गृहान्नय ॥ ४७७ ॥
तां वेपमानां सव्रीडां प्रलपन्तीं स्म पाण्डवान्।
दुःशासनः सभामध्ये विचकर्ष तपस्विनीम् ॥ ४७८ ॥
द्रौपदी– अयं मां सुदृढं क्षुद्रः कौरवाणां यशोहरः।
(अ.६९) क्लिश्नाति नाहं तत्सोढुं चिरं शक्ष्यामि कौरवाः ॥ ४७९ ॥
जितां वाप्यजितां वापि मन्यध्वं मा यथा नृपाः।
तथा प्रत्युक्तमिच्छामि तत्करिष्यामि कौरवाः ॥ ४८० ॥
दुर्यो– तिष्ठत्वयं प्रश्न उदारसत्त्वे
भीमेऽर्जुने सहदेवे तथैव।
पत्यौ च ते नकुले याज्ञसेनि
वदन्त्वेते वचनं त्वत्प्रसूतम् ॥ ४८१ ॥
भीम– यद्येष गुरुरस्माकं धर्मराजो महामनाः।
न प्रभुः स्यात्कुलस्यास्य न वयं मर्षयेमहि ॥ ४८२ ॥
ईशो नः पुण्यतपसां प्राणानामपि चेश्वरः।
मन्यतेऽजितमात्मानं यद्येष विजिता वयम् ॥ ४८३ ॥
(अ.७१) भीमसेनवचः श्रुत्वा राजा दुर्योधनस्तदा।
युधिष्ठिरमुवाचेदं तूष्णींभूतमचेतनम् ॥ ४८४ ॥
भीमार्जुनौ यमौ चैव स्थितौ ते नृप शासने।
प्रश्नं ब्रूहि च कृष्णां त्वमजितां यदि मन्यसे ॥ ४८५ ॥
एवमुक्त्वा तु कौन्तेयमपोह्य वसनं स्वकम्।
स्मयन्निवेक्ष्य पाञ्चालीमैश्वर्यमदमोहितः ॥ ४८६ ॥
अभ्युत्स्मयित्वा राधेयं भीममाधर्षयन्निव ।
द्रौपद्याः प्रेक्षमाणायाः सव्यमूरुमदर्शयत् ॥ ४८७ ॥

भीमसेनस्तमालोक्य नेत्रे उत्फाल्य लोहिते।
प्रोवाच राजमध्ये तं सभा विश्रावयन्निव ॥ ४८८ ॥
पितृभिः सह सालोक्यं मा स्म गच्छेद्वृकोदरः।
यद्येतमूरुं गदया न भिन्द्यां ते महाहवे ॥ ४८९ ॥

धृतराष्ट्र- हतोऽसि दुर्योधन मन्दबुद्धे
यस्त्वं सभायां कुरुपुङ्गवानाम्।
स्त्रियं समाभाषसि दुर्विनीत
विशेषतो द्रौपदीं धर्मपत्नीम् ॥ ४९० ॥
एवमुक्त्वा धृतराष्ट्रो मनीषी
हितान्वेषी बान्धवानामपायात्।
कृष्णां पाञ्चालीमब्रवीत्सान्त्वपूर्वं
विमृश्यैतत्प्रज्ञया तत्त्वबुद्धिः ॥ ४९१ ॥
वरं वृणीष्व पाञ्चालि मत्तो यदभिवाञ्छसि।
वधूनां हि विशिष्टा मे त्वं धर्मपरमा सती ॥ ४९२ ॥

द्रौपदी- ददासि चेद्वरं मह्यं वृणोमि भरतर्षभ।
सर्वधर्मानुगः श्रीमानदासोऽस्तु युधिष्ठिरः ॥ ४९३ ॥

धृत- एवं भवतु कल्याणि यथा त्वमभिभाषसे।
द्वितीयं ते वरं भद्रे ददानि वरयस्व ह ॥ ४९४ ॥

द्रौपदी- सरथौ सधनुष्कौ च भीमसेनधनञ्जयौ।
यमौ च वरये राजन्नदासान्स्ववशानहम् ॥ ४९५ ॥

धृत- तथास्तु ते महाभागे यथा त्वं नन्दिनीच्छसि।
तृतीयं वरयास्मत्तो नासि द्वाभ्यां सुसंस्कृता ॥ ४९६ ॥

द्रौपदी- लोभो धर्मस्य नाशाय भगवन्नाहमुत्सहे।
अनर्हा वरमादातुं तृतीयं राजसत्तम ॥ ४९७ ॥
एकमाहुर्वैश्यवरं द्वौ तु क्षत्रस्त्रियो वरौ।
त्रयस्तु राज्ञो राजेन्द्र ब्राह्मणस्य शतं वराः ॥ ४९८ ॥

धृतराष्ट्र– अजातशत्रो भद्रं ते अरिष्टं स्वस्ति गच्छत।
(अ.७१) अनुज्ञाताः सहधनाः स्वराज्यमनुशासत ॥ ४९९ ॥
दुर्योधनस्य पारुष्यं तत्तात हृदि मा कृथाः।
इत्युक्तो भरतश्रेष्ठ धर्मराजो युधिष्ठिरः ॥ ५०० ॥
कृत्वार्यसमयं सर्वं प्रतस्थे भ्रातृभिः सह।

अनुद्यूतम्, पाण्डवानां वनगमनम्

(अ.७४) अथ दुर्योधनः कर्णः शकुनिश्चापि सौबलः ॥ ५०१ ॥
मिथः सङ्गम्य सहिताः पाण्डवान्प्रतिमानिनः।
वैचित्रवीर्यं राजानं धृतराष्ट्रं मनीषिणम् ॥ ५०२ ॥
अभिगम्य त्वरायुक्ताः श्लक्ष्णं वचनमब्रुवन्।
दुर्यो– न त्वयेदं श्रुतं राजन्यज्जगाद बृहस्पतिः ॥ ५०३ ॥
सर्वोपायैर्निहन्तव्याः शत्रवः शत्रुसूदन।
न क्षंस्यन्ते तथास्माभिर्जातु विप्रकृता हि ते ॥ ५०४ ॥
द्रौपद्याश्च परिक्लेशं कस्तेषां क्षन्तुमर्हति।
पुनर्दीव्याम भद्रं ते वनवासाय पाण्डवैः ॥ ५०५ ॥
एतत्कृत्यतमं राजन्नस्माकं भरतर्षभ।
धृतराष्ट्र– तूर्णं प्रत्यानयस्वैतान्कामं व्यध्वगतानपि ॥ ५०६ ॥
आगच्छन्तु पुनर्द्यूतमिदं कुर्वन्तु पाण्डवाः।
(अ.७५) ततो व्यध्वगतं पार्थं प्रातिकामी युधिष्ठिरम् ॥ ५०७ ॥
उवाच वचनाद्राज्ञो धृतराष्ट्रस्य धीमतः।
उपास्तीर्णा सभा राजन्नक्षानुप्त्वा युधिष्ठिर ॥ ५०८ ॥
एहि पाण्डव दीव्येति पिता त्वाहेति भारत।
युधिष्ठिर– अक्षद्यूते समाह्वानं नियोगात्स्थविरस्य च ॥ ५०९ ॥
जानन्नपि क्षयकरं नातिक्रमितुमुत्सहे।
इति ब्रुवन्निवृत्ते भ्रातृभिः सह पाण्डवः ॥ ५१० ॥

जानंश्च शकुनेर्मायां पार्थो द्यूतमियात्पुनः।
विविशुस्ते सभां तां तु पुनरेव महारथाः ॥ ५११ ॥

शकुनि– अमुञ्चत्स्थविरो यद्वो धनं पूजितमेव तत्।
महाधनं ग्लहं त्वेकं शृणु भो भरतर्षभ ॥ ५१२ ॥
वयं वा द्वादशाब्दानि युष्माभिर्द्यूतनिर्जिताः।
प्रविशेम महारण्यं रौरवाजिनवाससः ॥ ५१३ ॥
त्रयोदशं च सजने अज्ञाताः परिवत्सरम्।
ज्ञाताश्च पुनरन्यानि वने वर्षाणि द्वादश ॥ ५१४ ॥
अस्माभिर्निर्जिता यूयं वने द्वादशवत्सरान्।
वसध्वं कृष्णया सार्धमजिनैः प्रतिवासिताः ॥ ५१५ ॥
त्रयोदशं च सजने अज्ञाताः परिवत्सरम्।
ज्ञाताश्च पुनरन्यानि वने वर्षाणि द्वादश ॥ ५१६ ॥
त्रयोदशे च निर्वृत्ते पुनरेव यथोचितम्।
स्वराज्यं प्रतिपत्तव्यमितरैरथवेतरैः ॥ ५१७ ॥
अनेन व्यवसायेन दीव्याम पुरुषर्षभाः।
प्रतिजग्राह तं पार्थो ग्लहं जग्राह सौबलः ॥ ५१८ ॥
जितमित्येव शकुनिर्युधिष्ठिरमभाषत।

(अ. ७७) *ततः पराजिताः पार्था वनवासाय दीक्षिताः ॥ ५१९ ॥*
अजिनान्युत्तरीयाणि जगृहुश्च यथाक्रमम्।
अजिनैः संवृतान्दृष्ट्वा हृतराज्यानरिन्दमान् ॥ ५२० ॥
प्रस्थितान्वनवासाय ततो दुःशासनोऽब्रवीत्।
प्रवृत्तं धार्तराष्ट्रस्य चक्रं राज्ञो महात्मनः।
पराजिताः पाण्डवेया विपत्तिं परमां गताः ॥ ५२१ ॥

सूक्ष्मप्रावारानजिनोत्तरीयान्
दृष्ट्वारण्ये निर्धनानप्रतिष्ठान्।

कां त्वं प्रीतिं लप्स्यसे याज्ञसेनि
पतिं वृणीष्वेह यमन्यमिच्छसि ॥ ५२२ ॥

भीम- क्रूरं पापजनैर्जुष्टमकृतार्थं प्रभाषसे।
गान्धारविद्यया हि त्वं राजमध्ये विकत्थसे ॥ ५२३ ॥
यथा तुदसि मर्माणि वाक्शरैरिह नो भृशम्।
तथा स्मारयिता तेऽहं कृन्तन्मर्माणि संयुगे ॥ ५२४ ॥

एवं ब्रुवाणमजिनैर्विवासितं
दुःशासनस्तं परिनृत्यति स्म।
मध्ये कुरूणां धर्मनिबद्धमार्गं
गौर्गौरिति स्माह्वयन्मुक्तलज्जः ॥ ५२५ ॥

भीम- मैव स्म सुकृताँल्लोकान्गच्छेत्पार्थो वृकोदरः।
यदि वक्षो हि ते भित्त्वा न पिबेच्छोणितं रणे ॥ ५२६ ॥
धार्तराष्ट्रान्रणे हत्वा मिषतां सर्वधन्विनाम्।
शर्म गन्तास्मि न चिरात्सत्यमेतद्ब्रवीमि ते ॥ ५२७ ॥
अहं दुर्योधनं हन्ता कर्णं हन्ता धनञ्जयः।
शकुनिं चाक्षकितवं सहदेवो हनिष्यति ॥ ५२८ ॥
एवं ते पुरुषव्याघ्राः सर्वे व्यायतबाहवः।
प्रतिज्ञा बहुलाः कृत्वा धृतराष्ट्रमुपागमन् ॥ ५२९ ॥

युधि- आमन्त्रयामि भरतांस्तथा वृद्धं पितामहम्।
(अ.७८) विदुरं धृतराष्ट्रं च धार्तराष्ट्रांश्च सर्वशः ॥ ५३० ॥
सर्वानामन्त्र्य गच्छामि द्रष्टाऽस्मि पुनरेत्य वः।

विदुर- आर्या पृथा राजपुत्री नारण्यं गन्तुमर्हति ॥ ५३१ ॥
इह वत्स्यति कल्याणी सत्कृता मम वेश्मनि।
एवमुक्तस्तथेत्युक्त्वा पाण्डवः सत्यविक्रमः ॥ ५३२ ॥
भीष्मद्रोणौ नमस्कृत्य प्रातिष्ठत युधिष्ठिरः।
(अ.७९) तस्मिन्सम्प्रस्थिते कृष्णा पृथां प्राप्य यशस्विनीम् ॥ ५३३ ॥

अपृच्छद्भृशदुःखार्ता याश्चान्यास्तत्र योषितः।
कुन्ती च भृशसन्तप्ता द्रौपदीं प्रेक्ष्य गच्छतीम् ॥ ५३४ ॥
शोकविह्वलया वाचा कृच्छ्राद्वचनमब्रवीत्।
सभाग्याः कुरवश्चेमे ये न दग्धास्त्वयाऽनघे ॥ ५३५ ॥
अरिष्टं व्रज पन्थानं मदनुध्यानबृंहिता।
सहदेवश्च मे पुत्रः सदावेक्ष्यो वने वसन् ॥ ५३६ ॥
यथेदं व्यसनं प्राप्य नायं सीदेन्महामतिः।
अथापश्यत्सुतान्सर्वान्हृताभरणवाससः ॥ ५३७ ॥
रुरुचर्मावृततनून् ह्रिया किञ्चिदवाङ्मुखान्।
तदवस्थान्सुतान्सर्वानुपसृत्यातिवत्सला ॥ ५३८ ॥
स्वजमानावदच्छोकात्तत्तद्विलपती बहु।
कथं सद्धर्मचारित्राम्वृत्तस्थितिविभूषितान् ॥ ५३९ ॥
व्यसनं वः समभ्यागात्कोऽयं विधिविपर्ययः।
कथं वत्स्यथ दुर्गेषु वने ऋद्धिविनाकृताः ॥ ५४० ॥
अन्तवत्यसुधर्मेऽस्मिन्धात्रा किन्नु प्रमादतः।
ममान्तो नैव विहितस्तेनायुर्न जहाति माम् ॥ ५४१ ॥
हा कृष्ण द्वारकावासिन्क्वासि सङ्कर्षणानुज ।
इमे सद्धर्ममाहात्म्ययशोवीर्यानुवर्तिनः ॥ ५४२ ॥
नार्हन्ति व्यसनं भोक्तुं नन्वेषां क्रियतां दया।
एवं विलपतीं कुन्तीमभिवाद्य प्रणम्य च ॥ ५४३ ॥
पाण्डवा विगतानन्दा वनायैव प्रवव्रजुः।
विदुरश्चापि तामार्तां कुन्तीमाश्वास्य हेतुभिः ॥ ५४४ ॥
प्रावेशयद्गृहं क्षत्ता स्वयमार्ततरः शनैः।
ततो जगाम विदुरो धृतराष्ट्रनिवेशनम् ॥ ५४५ ॥
(अ.८०) धृतराष्ट्रोऽब्रवीत्क्षत्तरुपावर्तय पाण्डवान्।
यदि ते न निवर्तन्ते सत्कृता यान्तु पाण्डवाः ॥ ५४६ ॥

सद्यश्चस्थपादाता भोगवन्तश्च पुत्रकाः।
(अ.८१) धनं गतेषु पार्थेषु निर्जितेषु दुरोदरे ॥ ५४७ ॥
धृतराष्ट्रं महाराज तदा चिन्ता समाविशत्।
तं चिन्तयानमासीनं धृतराष्ट्रं जनेश्वरम् ॥ ५४८ ॥
निःश्वसन्तमनेकाग्रमिति होवाच सञ्जयः।
तवेदं सुकृतं राजन्महद्वैरमुपस्थितम् ॥ ५४९ ॥
विनाशो येन लोकस्य सानुबन्धो भविष्यति।
यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् ॥ ५५० ॥
बुद्धिं तस्यापकर्षन्ति सोऽवाचीनानि पश्यति।
न कालो दण्डमुद्यम्य शिरः कृन्तति कस्यचित् ॥ ५५१ ॥
कालस्य बलमेतावद्विपरीतार्थदर्शनम्।
आसादितमिदं घोरं तुमुलं लोमहर्षणम्।
पाञ्चालीमपकर्षद्भिः सभामध्ये तपस्विनीम् ॥ ५५२ ॥

उपकथा १ जरासन्धजन्म

कृष्ण– राजा बृहद्रथो नाम मगधाधिपतिर्बली।
(अ.१७) स काशिराजस्य सुते यमजे भरतर्षभ ॥ १ ॥
उपयेमे महावीर्यो रूपद्रविणसंयुते।
नाससाद नृपश्रेष्ठ• पुत्रं कुलविवर्धनम् ॥ २ ॥
अथ काक्षीवत• पुत्रं गौतमस्य महात्मनः।
शुश्राव तपसि श्रान्तमुदारं चण्डकौशिकम् ॥ ३ ॥
यदृच्छयागतं तं तु वृक्षमूलमुपाश्रितम्।
पत्नीभ्यां सहितो राजा सर्वरत्नैरतोषयत् ॥ ४ ॥
तमब्रवीत्सत्यधृति• सत्यवागृषिसत्तमः।
परितुष्टोऽस्मि राजेन्द्र वरं वरय सुव्रत ॥ ५ ॥

राजा– भगवन्राज्यमुत्सृज्य प्रस्थितोऽहं तपोवनम्।
किं वरेणाल्पभाग्यस्य किं राज्येनाप्रजस्य मे ॥ ६ ॥
तस्योपविष्टस्य मुनेरुत्सङ्गे निपपात ह।
अवातमशुकादष्टमेकमाम्रफलं किल ॥ ७ ॥
तत्प्रगृह्य मुनिश्रेष्ठो हृदयेनाभिमन्त्र्य च।
राज्ञे ददावप्रतिमं पुत्रसम्प्राप्तिकारणम् ॥ ८ ॥
उवाच च महाप्राज्ञस्तं राजानं महामुनिः।
गच्छ राजन्कृतार्थोऽसि निवर्तस्व नराधिप ॥ ९ ॥
एतच्छ्रुत्वा मुनेर्वाक्यं स नृप. स्वगृहं गतः।
द्वाभ्यामेकं फलं प्रादात्पत्नीभ्यां भरतर्षभ ॥ १० ॥
ते तदाम्रं द्विधा कृत्वा भक्षयामासतुः शुभे।
तयोः समभवद्गर्भः फलप्राशनसम्भवः ॥ ११ ॥
अथ काले महाप्राज्ञ यथासमयमागते।
प्रजायेतामुभे राजञ्छरीरशकले तदा ॥ १२ ॥
एकाक्षिबाहुचरणे अर्धोदरमुखस्फिचे।
दृष्ट्वा शरीरशकले प्रवेपतुरुभे भृशम् ॥ १३ ॥
उद्विग्ने सह सम्मन्त्र्य ते भगिन्यौ तदाऽबले।
सजीवे प्राणिशकले तत्यजाते सुदुःखिते ॥ १४ ॥
ते चतुष्पथनिक्षिप्ते जरा नामाथ राक्षसी।
संयोजयामास तदा विधानबलचोदिता ॥ १५ ॥
ते समानीतमात्रे तु शकले पुरुषर्षभ।
एकमूर्तिधरो वीरः कुमारः समपद्यत ॥ १६ ॥
सा तं बालमुपादाय मेघलेखेव भास्करम्।
कृत्वा च मानुषं रूपमुवाच वसुधाधिपम् ॥ १७ ॥
बृहद्रथ सुतस्तेऽयं मया दत्तः प्रगृह्यताम्।
तव पत्नीद्वये जातो द्विजातिवरशासनात् ॥ १८ ॥

धात्रीजनपरित्यक्तो मयायं परिरक्षितः।
(श्र १८) जरा नामाऽस्मि भद्र ते राक्षसी कामरूपिणी ॥ १९ ॥
तव वेश्मनि राजेन्द्र पूजिता न्यवसं सुखम्।
गृहे गृहे मनुष्याणां नित्यं तिष्ठामि राक्षसी ॥ २० ॥
गृहदेवीति नाम्ना वै पुरा सृष्टा स्वयम्भुवा।
दानवानां विनाशाय स्थापिता दिव्यरूपिणी ॥ २१ ॥
यो मां भक्त्या लिखेत्कुड्ये सपुत्रां यौवनान्विताम्।
गृहे तस्य भवेद्वृद्धिरन्यथा क्षयमाप्नुयात् ॥ २२ ॥
त्वद्गृहे तिष्ठमानाहं पूजिताहं सदा विभो।
साहं प्रत्युपकारार्थं चिन्तयाम्यनिशं तव ॥ २३ ॥
तवेमे पुत्रशकले दृष्टवत्यस्मि धार्मिक।
संश्लेषिते मया दैवात्कुमारः समपद्यत ॥ २४ ॥
तव भाग्यान्महाराज हेतुमात्रमहं त्विह।
गृहसम्पूजनात्तुष्ट्या मया प्रत्यर्पितस्तव ॥ २५ ॥
स सङ्गृह्य कुमारं तं प्रविवेश गृहं नृप ।
तस्य नामाकरोच्चैव पितामहसमः पिता।
जरया सन्धितो यस्माज्जरासन्धो भवत्वयम् ॥ २६ ॥ ५७८ ॥

## उपकथा २ शिशुपालजन्म

भीष्म- चेदिराजकुले जातस्त्र्यक्ष एष चतुर्भुजः।
(अ.४३) रासभारावसदृशं रुराव च ननाद च ॥ १ ॥
तेनास्य मातापितरौ त्यागाय कुरुता मतिम्।
ततः सभार्यं नृपतिं वागुवाचाशरीरिणी ॥ २ ॥
एष ते नृपते पुत्रः श्रीमाञ्जातो बलाधिकः।
तस्मादस्मान्न भेतव्यमव्यग्रः पाहि वै शिशुम् ॥ ३ ॥

संश्रुत्योदाहृतं वाक्यं भूतमन्तर्हितं ततः।
पुत्रस्नेहाभिसन्तप्ता जननी वाक्यमब्रवीत् ॥ ४ ॥
श्रोतुमिच्छामि पुत्रस्य कोऽस्य मृत्युर्भविष्यति।
अन्तर्भूतं ततो भूतमुवाचेदं पुनर्वचः ॥ ५ ॥
यस्योत्सङ्गे गृहीतस्य भुजावभ्यधिकावुभौ।
पतिष्यतः क्षितितले पञ्चशीर्षाविवोरगौ ॥ ६ ॥
तृतीयमेतद्बालस्य ललाटस्थं तु लोचनम्।
निमज्जिष्यति तं दृष्ट्वा सोऽस्य मृत्युर्भविष्यति ॥ ७ ॥
त्र्यक्षं चतुर्भुजं श्रुत्वा तथा च समुदाहृतम्।
पृथिव्यां पार्थिवाः सर्वे अभ्यागच्छन्दिदृक्षवः ॥ ८ ॥
तान्पूजयित्वा सम्प्राप्तान्यथार्हं स महीपतिः।
एकैकस्य नृपस्याङ्के पुत्रमारोपयत्तदा ॥ ९ ॥
ततश्चेदिपुरं प्राप्तौ सङ्कर्षणजनार्दनौ।
यादवौ यादवीं द्रष्टुं स्वसारं तौ पितुस्तदा ॥ १० ॥
पुत्रं दामोदरोत्सङ्गे देवी सन्न्यदधात्स्वयम्।
न्यस्तमात्रस्य तस्याङ्के भुजावभ्यधिकावुभौ ॥ ११ ॥
पेततुस्तच्च नयनं न्यमज्जत ललाटजम्।
तद्दृष्ट्वा व्यथिता त्रस्ता वरं कृष्णमयाचत ॥ १२ ॥
शिशुपालस्यापराधान्क्षमेथास्त्वं महाबल।
मत्कृते यदुशार्दूल विद्ध्येनं मे वरं प्रभो ॥ १३ ॥
कृष्ण– अपराधशतं क्षाम्यं मया ह्यस्य पितृष्वसः।
पुत्रस्य ते वधार्हस्य मा त्वं शोके मनः कृथाः ॥ १४ ॥ ५९२ ॥

आदितः श्लोकाः ॥ १९६१ ॥

॥ इति श्रीमहाभारतसारे सभापर्व समाप्तम् ॥

# महाभारतसारः

## वनपर्व

नारायणं नमस्कृत्य नरं चैव नरोत्तमम्।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत्॥

### पाण्डवानां काम्यकवनप्रवेशः

वैशम्पायन– एवं द्यूतजिताः पार्थाः कोपिताश्च दुरात्मभिः।
(अ.१) धार्तराष्ट्रैः सहामात्यैर्निर्ययुर्गजसाह्वयात्॥ १॥
इन्द्रसेनादयश्चैव भृत्याः परिचतुर्दश।
रथैरनुययुः शीघ्रैः स्त्रिय आदाय सर्वशः॥ २॥
आजग्मुर्जाह्नवीतीरे प्रमाणाख्यं महावटम्।
ते तं दिवसशेषेण वटं गत्वा तु पाण्डवाः॥ ३॥
उदकेनैव तां रात्रिमूषुस्ते दुःखकर्षिताः।
अनुजग्मुश्च तत्रैतान्स्नेहात्केचिद्द्विजातयः॥ ४॥
साग्नयोऽनग्नयश्चैव सशिष्यगणबान्धवाः।
(अ.२) प्रभातायां तु शर्वर्यां तेषामक्लिष्टकर्मणाम्॥ ५॥
वनं यियासतां विप्रास्तस्थुर्भिक्षाभुजोऽग्रतः।
तानुवाच ततो राजा कुन्तीपुत्रो युधिष्ठिरः॥ ६॥
वयं हि हृतसर्वस्वा वनं गच्छाम दुःखिताः।
परिक्लेशश्च वो मन्ये ध्रुवं तत्र भविष्यति॥ ७॥
ब्राह्मणाः– गतिर्या भवतां राजंस्तां वयं गन्तुमुद्यताः।
अस्मत्पोषणजा चिन्ता माभूत्ते हृदि पार्थिव॥ ८॥
स्वयमाहृत्य चान्नानि त्वानुयास्यामहे वयम्।
अनुध्यानेन जप्येन विधास्यामः शिवं तव॥ ९॥

कथाभिश्चाभिरम्याभिः सह रंस्यामहे वयम्।
युधि- एवमेतन्न सन्देहो रमेऽहं सततं द्विजैः॥ १०॥
न्यूनभावात्तु पश्यामि प्रत्यादेशमिवात्मनः।
कथं द्रक्ष्यामि वः सर्वान्स्वयमाहृत्य भोजिनः॥ ११॥
तमध्यात्मरतो विद्वाञ्छौनको नाम वै द्विजः।
योगे साङ्ख्ये च कुशलो राजानमिदमब्रवीत्॥ १२॥
शोकस्थानसहस्राणि भयस्थानशतानि च।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम्॥ १३॥
अर्थकृच्छ्रेषु दुर्गेषु व्यापत्सु स्वजनस्य च।
शारीरमानसैर्दुःखैर्न सीदन्ति भवद्विधाः॥ १४॥
धर्मार्थं यस्य वित्तेहा वरं तस्य निरीहता।
प्रक्षालनाद्धि पङ्कस्य श्रेयो न स्पर्शनं नृणाम्॥ १५॥
युधिष्ठिरैवं सर्वेषु न स्पृहां कर्तुमर्हसि।
धर्मेण यदि ते कार्यं विमुक्तेच्छो भवार्थतः॥ १६॥
युधि- नार्थोपभोगलिप्सार्थमियमर्थेप्सुता मम।
भरणार्थं तु विप्राणां ब्रह्मन्काङ्क्षे न लोभतः॥ १७॥
कथं ह्यस्मद्विधो ब्रह्मन्वर्तमानो गृहाश्रमे।
भरणं पालनं चापि न कुर्यादनुयायिनाम्॥ १८॥
शौनक- पितृमातृमयी सिद्धिः प्राप्ता कर्ममयी च ते।
तपसा सिद्धिमन्विच्छ द्विजानां भरणाय वै॥ १९॥
सिद्धा हि यद्यदिच्छन्ति कुर्वते तदनुग्रहात्।
तस्मात्तपः समास्थाय कुरुष्वात्ममनोरथम्॥ २०॥
(अ.३) शौनकेनैवमुक्तस्तु कुन्तीपुत्रो युधिष्ठिरः।
पुरोहितमुपागम्य भ्रातृमध्येऽब्रवीदिदम्॥ २१॥
प्रस्थितं मानुयान्तीमे ब्राह्मणा वेदपारगाः।
न चास्मि पोषणे शक्तो बहुदुःखसमन्वितः॥ २२॥

परित्यक्तुं न शक्तोऽस्मि दानशक्तिश्च नास्ति मे।
कथमत्र मया कार्यं तद्ब्रूहि भगवन्मम ॥ २३ ॥

धौम्य– गत्वोत्तरायणं तेजोरसानुद्धृत्य रश्मिभिः।
दक्षिणायनमावृत्तो महीं निविशते रविः ॥ २४ ॥
क्षेत्रभूते ततस्तस्मिन्नोपधीरोपधीपतिः।
दिवस्तेजः समुद्धृत्य जनयामास वारिणा ॥ २५ ॥
एवं भानुमयं ह्यन्नं भूतानां प्राणधारणम्।
पितैप सर्वभूतानां तस्मात्तं शरणं व्रज ॥ २६ ॥
एवमुक्तस्तु धौम्येन तत्कालसदृशं वचः।
धर्मराजो विशुद्धात्मा तप आतिष्ठदुत्तमम् ॥ २७ ॥
सोऽवगाह्य जलं राजा देवस्याभिमुखोऽभवत्।
शुचिः प्रयतवाग्भूत्वा स्तोत्रमारब्धवांस्ततः ॥ २८ ॥

युधि– त्वं भानो जगतश्चक्षुस्त्वमात्मा सर्वदेहिनाम्।
त्वं योनिः सर्वभूतानां त्वमाचारः क्रियावताम् ॥ २९ ॥
त्वं ममापन्नकामस्य सर्वातिथ्यं चिकीर्षतः।
अन्नमन्नपते दातुमभितः श्रद्धयार्हसि ॥ ३० ॥
ततो दिवाकरः प्रीतो दर्शयामास पाण्डवम्।

विवस्वान्– अहमन्नं प्रदास्यामि सप्त पञ्च च ते समाः ॥ ३१ ॥
गृहीष्व पिठरं ताम्रं मया दत्तं नराधिप।
यावद्वर्त्स्यति पाञ्चाली पात्रेणानेन सुव्रत ॥ ३२ ॥
फलमूलामिषं शाकं संस्कृतं यन्महानसे।
चतुर्विधं तदन्नाद्यमक्षय्यं ते भविष्यति ॥ ३३ ॥
एवं दिवाकरात्प्राप्य दिवाकरसमप्रभः।
कामान्मनोभिलषितान्ब्राह्मणेभ्योऽददात्प्रभुः ॥ ३४ ॥
ततः कृतस्वस्त्ययना धौम्येन सह पाण्डवाः।
द्विजसङ्घैः परिवृताः प्रययुः काम्यकं वनम् ॥ ३५ ॥

## विदुरस्य निर्गमः, प्रत्यागमनम्, दुर्योधनाय मैत्रेयशापः

(अ.४) वनं प्रविष्टेष्वथ पाण्डवेषु
प्रज्ञाचक्षुस्तप्यमानोऽम्बिकेय ।
धर्मात्मानं विदुरमगाधबुद्धिं
सुखासीनो वाक्यमुवाच राजा ॥ ३६ ॥
एवं गते विदुर यदद्य कार्यं
तत्त्वं ब्रूयाः साधु कार्याणि वेत्सि ।
विदुर- त्रिवर्गोऽयं धर्ममूलो नरेन्द्र
राज्यं चेदं धर्ममूलं वदन्ति ॥ ३७ ॥
स वै धर्मो विप्रलब्धः सभायां
पापात्मभिः सौबलेयप्रधानैः ।
एष धर्मः परमो यत्स्वकेन
राजा तुष्येन्न परस्वेषु गृध्येत् ॥ ३८ ॥
उक्तं पूर्वं जातमात्रे सुते ते
मया यत्ते हितमासीत्तदानीम् ।
पुत्रं त्यजेममहितं कुलस्य
हितं परं न च तत्त्वं चकर्थ ॥ ३९ ॥
इदं च राजन् हितमुक्तं न चेत्त्व
मेव कर्ता परितप्तासि पश्चात् ।
दुःशासनो याचतु भीमसेनं
सभामध्ये द्रुपदस्यात्मजां च ॥ ४० ॥
युधिष्ठिरं त्वं परिसान्त्वयस्व
राज्ये चैनं स्थापयस्वाभिपूज्य ।
धृतराष्ट्र- एतद्वाक्यं विदुर यत्ते सभाया
मिह प्रोक्तं पाण्डवान्प्राप्य मा च ॥ ४१ ॥

हितं तेषामहितं मामकाना-
मेतत्सर्वं मम नावैति चेत. ।
तेनाद्य मन्ये नासि हितो ममेति
कथं हि पुत्रं पाण्डवार्थे त्यजेयम् ॥ ४२ ॥
स मां जिह्मं विदुर सर्वं ब्रवीषि ।
यथेच्छक गच्छ वा तिष्ठ वा त्वम् ॥ ४३ ॥

(अ.५) विदुरस्त्वथ पाण्डूनां सदा दर्शनलालस. ।
जगामैकरथेनैव काम्यकं वनमृद्धिमत् ॥ ४४ ॥
तत उत्थाय विदुरं पाण्डवेया.
प्रत्यगृह्णन्नृपते सर्व एव ।
स चापि तेभ्यो विस्तरतः शशंस
यथावृत्तो धृतराष्ट्रोऽम्बिकेयः ॥ ४५ ॥

(अ.६) गते तु विदुरे राजन्नाश्रमं पाण्डवान्प्रति ।
धृतराष्ट्रो महाप्राज्ञः पर्यतप्यत भारत ॥ ४६ ॥
विदुरस्य प्रभावं च सन्धिविग्रहकारितम् ।
विवृद्धिं च परां मत्वा पाण्डवानां भविष्यति ॥ ४७ ॥
समीपोपस्थितं राजा सञ्जयं वाक्यमब्रवीत् ।
भ्राता मम सुहृच्चैव साक्षाद्धर्मं इवापरः ॥ ४८ ॥
तस्य स्मृत्वाद्य सुभृशं हृदयं दीर्यतीव मे ।
तमानयस्व धर्मज्ञं मम भ्रातरमाशु वै ॥ ४९ ॥
सञ्जयो वाढमित्युक्त्वा प्राद्रवत्काम्यकं प्रति ।
राज्ञा पृष्टः स कुशलं सुखासीनश्च सञ्जय. ॥ ५० ॥
शशंसागमने हेतुमिदं चैवाब्रवीद्वच ।
राजा स्मरति ते क्षत्तर्धृतराष्ट्रोऽम्बिकासुत. ॥ ५१ ॥
तं पश्य गत्वा त्वं क्षिप्रं सञ्जीवय च पार्थिवम् ।
एवमुक्तस्तु विदुरो पुनरयाद्गजाह्वयम् ॥ ५२ ॥

तमब्रवीन्महातेजा धृतराष्ट्रोऽम्बिकासुतः।
दिष्ट्या प्राप्तोऽसि धर्मज्ञ दिष्ट्या स्मरसि मेऽनघ ॥ ५३ ॥
सोऽङ्कमानीय विदुरं मूर्धन्याघ्राय चैव ह।
क्षम्यतामिति चोवाच यदुक्तोऽसि मयानघ ॥ ५४ ॥
विदुर- क्षान्तमेव मया राजन्नात्र कार्या विचारणा।
पाण्डोः सुता यादृशा मे तादृशास्तव भारत ॥ ५५ ॥
दीना इतीव मे बुद्धिरभिपन्नाद्य तान्प्रति।
(अ.७) श्रुत्वा च विदुरं प्राप्तं राज्ञा च परिसान्त्वितम् ॥ ५६ ॥
धृतराष्ट्रात्मजो राजा पर्यतप्यत दुर्मतिः।
स सौबलेयमानाय्य कर्णदुःशासनौ तथा ॥ ५७ ॥
अब्रवीद्वचनं राजा प्रविश्याबुद्धिजं तमः।
वयं तु शस्त्राण्यादाय रथानास्थाय दंशिताः ॥ ५८ ॥
गच्छामः सहिता हन्तुं पाण्डवान्वनगोचरान्।
तस्य तद्वचनं श्रुत्वा पूजयन्तः पुनः पुनः ॥ ५९ ॥
निर्ययुः पाण्डवान्हन्तुं सहिताः कृतनिश्चयाः।
तान्प्रस्थितान्परिज्ञाय कृष्णद्वैपायनः प्रभुः ॥ ६० ॥
आजगाम विशुद्धात्मा दृष्ट्वा दिव्येन चक्षुषा।
प्रतिषिध्याथ तान्सर्वान्भगवांल्लोकपूजितः ॥ ६१ ॥
प्रज्ञाचक्षुषमासीनमुवाचाभ्येत्य सत्वरम्।
(अ.८) धृतराष्ट्र महाप्राज्ञ निबोध वचनं मम ॥ ६२ ॥
न मे प्रियं महाबाहो यद्गताः पाण्डवा वनम्।
तदयं किं नु पापात्मा तव पुत्रः सुमन्दधीः ॥ ६३ ॥
पाण्डवान्नित्यसङ्क्रुद्धो राज्यहेतोर्जिघांसति।
वार्यतां साध्वयं मूढः शमं गच्छतु ते सुतः ॥ ६४ ॥
वनस्थांस्तानयं हन्तुमिच्छन्प्राणान्विमोक्ष्यति।
विग्रहो हि महाप्राज्ञ स्वजनेन विगर्हितः ॥ ६५ ॥

अधर्म्यमयशस्यं च मा राजन्प्रतिपद्यताम्।

धृत- परित्यक्तुं न शक्नोमि दुर्योधनमचेतनम् ॥ ६६ ॥

(अ.९) पुत्रस्नेहेन भगवञ्जानन्नपि प्रियव्रत।

व्यास- वैचित्रवीर्य नृपते सत्यमाह यथा भवान् ॥ ६७ ॥

अत्र ते वर्तयिष्यामि महदाख्यानमुत्तमम्।

त्रिविष्टपगता राजन्सुरभी प्रारुदत् किल ॥ ६८ ॥

इन्द्र- किमिदं रोदिषि शुभे कच्चित्क्षेमं दिवौकसाम्।

मनुष्येष्वथ नागेषु नैतदल्पं भविष्यति ॥ ६९ ॥

सुरभि- पश्यैनं कर्षकं क्षुद्रं दुर्बलं मम पुत्रकम्।

प्रतोदेनाभिनिघ्नन्तं लाङ्गलेन च पीडितम् ॥ ७० ॥

शक्र- तव पुत्रसहस्रेषु पीड्यमानेषु शोभने।

किं कृपायितवत्यत्र पुत्र एकत्र हन्यति ॥ ७१ ॥

सुरभि- यदि पुत्रसहस्राणि सर्वत्र समतैव मे।

दीनस्य तु सतः शक्र पुत्रस्याभ्यधिका कृपा ॥ ७२ ॥

व्यास- तद्यथा सुरभिः प्राह समतैवास्तु ते तथा।

सुतेषु राजन्सर्वेषु हीनेष्वभ्यधिका कृपा ॥ ७३ ॥

यदि पार्थिव कौरव्याञ्जीवमानानिहेच्छसि।

दुर्योधनस्तव सुतः शर्म गच्छतु पाण्डवैः ॥ ७४ ॥

धृत- एवमेतन्महाप्राज्ञ यथा वदसि नो मुने।

(अ.१०) अन्वशाधि दुरात्मानं पुत्रं दुर्योधनं मम ॥ ७५ ॥

व्यास- अयमायाति वै राजन्मैत्रेयो भगवानृषिः।

एष दुर्योधनं पुत्रं तव राजन्महानृषिः ॥ ७६ ॥

अनुशास्ता यथान्यायं शमायास्य कुलस्य च।

एवमुक्त्वा ययौ व्यासो मैत्रेयः प्रत्यदृश्यत ॥ ७७ ॥

पूजया प्रतिजग्राह सपुत्रस्तं नराधिपः।

ततो व्यावृत्य राजानं दुर्योधनममर्षणम् ॥ ७८ ॥

उवाच श्लक्ष्णया वाचा मैत्रेयो भगवानृषिः।
मा द्रुह. पाण्डवान्राजन्कुरुष्व प्रियमात्मन ॥ ७९ ॥
पाण्डवाना कुरूणा च लोकस्य च नरर्षभ।
ते हि सर्वे नरव्याघ्रा. शूरा विक्रान्तयोधिनः ॥ ८० ॥
हन्तारो देवशत्रूणां रक्षसा कामरूपिणाम्।
हिडिम्बबकमुख्यानां किर्मीरस्य च रक्षस. ॥ ८१ ॥
इत. प्रद्रवता रात्रौ य. स तेषा महात्मनाम्।
आवृत्य मार्ग रौद्रात्मा तस्थौ गिरिरिवाचल ॥ ८२ ॥
तं भीम समरश्लाघी बलेन बलिनां वर.।
जघान पशुमारेण व्याघ्र क्षुद्रमृगं यथा ॥ ८३ ॥
पश्य दिग्विजये राजन्यथा भीमेन पातित.।
जरासन्धो महेष्वासो नागायुतबलो युधि ॥ ८४ ॥
सम्बन्धी वासुदेवश्च श्याला. सर्वे च पार्षता.।
कस्तान्युधि समासीत जरामरणवान्नर. ॥ ८५ ॥
तस्य ते शम एवास्तु पाण्डवैर्भरतर्षभ।
कुरु मे वचनं राजन्मा मन्युवशमन्वगा. ॥ ८६ ॥
एवं तु ब्रुवतस्तस्य मैत्रेयस्य विशाम्पते।
ऊरुं गजकराकारं करेणाभिजघान स. ॥ ८७ ॥
दुर्योधन स्मित कृत्वा चरणेनोल्लिखन्महीम्।
तमशुश्रूषमाणं तु विलिखन्तं वसुन्धराम् ॥ ८८ ॥
दृष्ट्वा दुर्योधनं राजन्मैत्रेय कोप आविशत्।
मैत्रेयो धार्तराष्ट्रं तमशपद्दुष्टचेतसम् ॥ ८९ ॥
त्वदभिद्रोहसंयुक्तं युद्धमुत्पत्स्यते महत्।
तत्र भीमो गदाघातैस्तवोरुं भेत्स्यते बली।
इत्येवमुक्त्वा मैत्रेय. प्रातिष्ठत यथागतम् ॥ ९० ॥

## पाण्डवान् द्रष्टुं श्रीकृष्णादीनां वनगमनम्

(अ.११) भोजाः प्रव्रजिताञ्छ्रुत्वा वृष्णयश्चान्धकैः सह।
पाण्डवान्दुःखसन्तप्तान्समाजग्मुर्महावने ॥ ९१ ॥
पाञ्चालस्य च दायादो धृष्टकेतुश्च चेदिपः।
केकयाश्च महावीर्या भ्रातरो लोकविश्रुताः ॥ ९२ ॥
वने द्रष्टुं ययुः पार्थान्क्रोधामर्षसमन्विताः।
वासुदेवं पुरस्कृत्य सर्वे ते क्षत्रियर्षभाः ॥ ९३ ॥
परिवार्योपविविशुर्धर्मराजं युधिष्ठिरम्।
अभिवाद्य कुरुश्रेष्ठं विषण्णः केशवोऽब्रवीत् ॥ ९४ ॥
दुर्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः।
दुःशासनचतुर्थानां भूमिः पास्यति शोणितम् ॥ ९५ ॥
ममैव त्वं तवैवाहं ये मदीयास्तवैव ते।
यस्त्वां द्वेष्टि स मां द्वेष्टि यस्त्वामनु स मामनु ॥ ९६ ॥
द्रौपदी– कथं नु भार्या पार्थानां तव कृष्ण सखी विभो।
धृष्टद्युम्नस्य भगिनी सभां कृष्येत मादृशी ॥ ९७ ॥
दासीभावेन मां भोक्तुमीषुस्ते मधुसूदन।
जीवत्सु पाण्डुपुत्रेषु पाञ्चालेषु च वृष्णिषु ॥ ९८ ॥
शाश्वतोऽयं धर्मपथः सद्भिराचरितः सदा।
यद्भार्यां परिरक्षन्ति भर्तारोऽल्पबला अपि ॥ ९९ ॥
कुले महति जातास्मि दिव्येन विधिना किल।
कचग्रहमनुप्राप्ता सास्मि कृष्ण वरा सती ॥ १०० ॥
इत्युक्त्वा प्रारुदत्कृष्णा मुखं प्रच्छाद्य पाणिना
बाष्पपूर्णेन कण्ठेन क्रुद्धा वचनमब्रवीत् ॥ १०१ ॥
नैव मे पतयः सन्ति न पुत्रा न च बान्धवाः।
न भ्रातरो न च पिता नैव त्वं मधुसूदन ॥ १०२ ॥

वासुदेव– रोदिष्यन्ति स्त्रियो ह्येवं येषां क्रुद्धासि भाविनि।
यत्समर्थं पाण्डवानां तत्करिष्यामि मा शुचः ॥ १०३ ॥
धृष्टद्युम्न– अहं द्रोणं हनिष्यामि शिखण्डी तु पितामहम्।
दुर्योधनं भीमसेनः कर्णं हन्ता धनञ्जयः ॥ १०४ ॥
वासु– नैतत्कृच्छ्रमनुप्राप्तो भवान्स्याद्वसुधाधिप।
(अ.१३) यद्यहं द्वारकायां स्यां राजन्सन्निहितः पुरा ॥ १०५ ॥
युधि– असान्निध्यं कथं कृष्ण तवासीद्वृष्णिनन्दन।
(अ.१४) क्व चासीद्विप्रवासस्ते किं चाकार्षीः प्रवासतः ॥ १०६ ॥
कृष्ण– दमघोषात्मजो वीरः शिशुपालो मया हतः।
यज्ञे ते भरतश्रेष्ठ राजसूयेऽर्हणां प्रति ॥ १०७ ॥
श्रुत्वा तं निहतं शाल्वस्तीव्ररोषसमन्वितः।
आगतः कामगं सौभमारुह्यैवं नृशंसवत् ॥ १०८ ॥
उक्तवांश्च महाबाहो क्वासौ वृष्णिकुलाधमः।
मम पापस्वभावेन भ्राता येन निपातितः ॥ १०९ ॥
शिशुपालो महीपालस्तं वधिष्ये महीपते।
ततः सौभवधायाहं प्रतस्थे पृथिवीपते ॥ ११० ॥
स मया सागरावर्ते दृष्ट आसीत्परीप्सता।
ततः प्रध्माय जलजं पाञ्चजन्यमहं नृप ॥ १११ ॥
आहूय शाल्वं समरे युद्धाय समवस्थितः।
तन्मुहूर्तमभूद्युद्धं तत्र मे दानवैः सह ॥ ११२ ॥
वशीभूताश्च मे सर्वे भूतले च निपातिताः।
(अ.१५) तदेतत्कारणं राजन्यदहं नागसाह्वयम् ॥ ११३ ॥
नागमं परवीरघ्न न हि जीवेत्सुयोधनः।
एवमुक्त्वा महाबाहुः कौरवं पुरुषोत्तमः ॥ ११४ ॥
सुभद्रामभिमन्युं च रथमारोप्य काञ्चनम्।
द्वारकां प्रययौ कृष्णः समाश्वास्य युधिष्ठिरम् ॥ ११५ ॥

तत· प्रयाते दाशार्हे धृष्टद्युम्नोऽपि पार्षत·।
द्रौपदेयानुपादाय प्रययौ स्वपुरं तदा ॥ ११६ ॥
धृष्टकेतु· स्वसारं च समादायाथ चेदिराट्।
जगाम पाण्डवान्दृष्ट्वा रम्या शुक्तिमतीं पुरीम् ॥ ११७ ॥
केकयाश्चाप्यनुज्ञाता· कौन्तेयेनामितौजसा।
आमन्त्र्य पाण्डवान्सर्वा·प्रययुस्तेऽपि भारत ॥ ११८ ॥

## पाण्डवानां द्वैतवनप्रवेशः

(अ.२४) ततस्ते प्रययु· सर्वे पाण्डवा धर्मचारिणः।
ब्राह्मणैर्बहुभि· सार्धं पुण्यं द्वैतवनं सर· ॥ ११९ ॥
ते यात्वा पाण्डवास्तत्र ब्राह्मणैर्बहुभि· सह।
पुण्यं द्वैतवनं रम्यं विविशुर्भरतर्षभा· ॥ १२० ॥
(अ.२६) वसत्सु वै द्वैतवने पाण्डवेषु महात्मसु।
अनुकीर्णं महारण्यं ब्राह्मणै· समपद्यत ॥ १२१ ॥
अथाब्रवीद्बको दाल्भ्यो धर्मराजं युधिष्ठिरम्।
इद तु वचनं पार्थ शृणुष्व गदतो मम ॥ १२२ ॥
ब्रह्म क्षत्रेण संसृष्टं क्षत्रं च ब्रह्मणा सह।
उदीर्णे दहत· शत्रून्वनानीवाग्निमारुतौ ॥ १२३ ॥
नाब्राह्मणस्तात चिरं बुभूषे-
दिच्छन्निमं लोकममुं च जेतुम्।
विनीतधर्मार्थमपेतमोहम्
लब्ध्वा द्विजं नुदति नृप· सपत्नान् ॥ १२४ ॥
कुञ्जरस्येव सङ्ग्रामे परिगृह्याङ्कुशग्रहम्।
ब्राह्मणैर्विप्रहीनस्य क्षत्रस्य क्षीयते बलम् ॥ १२५ ॥
ब्राह्मण्यनुपमा दृष्टि· क्षात्रमप्रतिमं बलम्।
तौ यदा चरत· सार्धं तदा लोक प्रसीदति ॥ १२६ ॥

यथा हि सुमहानग्निः कक्षं दहति सानिलः।
तथा दहति राजन्यो ब्राह्मणेन समं रिपुम् ॥ १२७ ॥
ब्राह्मणेपूत्तमा वृत्तिस्तव नित्यं युधिष्ठिर।
तेन ते सर्वलोकेपु दीप्यते प्रथितं यशः ॥ १२८ ॥

## युधिष्ठिरेण सह द्रौपदी-भीमसंवादः पाण्डवानां काम्यकवनप्रवेशः

(अ.२७) ततो वनगताः पार्थाः सायाह्ने कृष्णया सह।
उपविष्टाः कथाश्चक्रुर्दुःखशोकपरायणाः ॥ १२९ ॥
प्रिया च दर्शनीया च पण्डिता च पतिव्रता।
अथ कृष्णा धर्मराजमिदं वचनमब्रवीत् ॥ १३० ॥
न नूनं तस्य पापस्य दुःखमस्मासु किञ्चन।
विद्यते धार्तराष्ट्रस्य नृशंसस्य दुरात्मनः ॥ १३१ ॥
चतुर्णामेव पापानामस्रं न पतितं तदा।
त्वयि भारत निष्क्रान्ते वनायाजिनवाससि ॥ १३२ ॥
दुर्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः।
दुर्भ्रातुस्तस्य चोग्रस्य राजन्दुःशासनस्य च ॥ १३३ ॥
यदपश्यं सभायां त्वां राजभिः परिवारितम्।
तच्च राजन्नपश्यन्त्याः का शान्तिर्हृदयस्य मे ॥ १३४ ॥
द्रुपदस्य कुले जातां स्नुषां पाण्डोर्महात्मनः।
धृष्टद्युम्नस्य भगिनीं वीरपत्नीमनुव्रताम् ॥ १३५ ॥
मां वै वनगतां दृष्ट्वा कस्मात्क्षमसि पार्थिव।
नूनं च तव वै नास्ति मन्युर्भरतसत्तम ॥ १३६ ॥
यच्ते भ्रातॄंश्च मां चैव दृष्ट्वा न व्यथते मनः।
न निर्मन्युः क्षत्रियोऽस्ति लोके निर्वचनं स्मृतम् ॥ १३७ ॥

तदद्य त्वयि पश्यामि क्षत्रिये विपरीतवत्।
(अ.२८) न श्रेयः सततं तेजो न नित्यं श्रेयसी क्षमा ॥ १३८ ॥
तस्मान्नित्यं सृजेत्तेजो न च नित्यं मृदुर्भवेत्।
काले काले तु सम्प्राप्ते मृदुस्तीक्ष्णोऽपि वा भवेत् ॥ १३९ ॥
पूर्वोपकारी यस्ते स्यादपराधे गरीयसि।
उपकारेण तत्तस्य क्षन्तव्यमपराधिनः ॥ १४० ॥
सर्वस्यैकोपराधस्ते क्षन्तव्यः प्राणिनो भवेत्।
अजानता भवेत्कश्चिदपराधः कृतो यदि ॥ १४१ ॥
क्षन्तव्यमेव तस्याहुः सुपरीक्ष्य परीक्षया।
तदहं तेजसः कालं तव मन्ये नराधिप ॥ १४२ ॥
धार्तराष्ट्रेषु लुब्धेषु सततं चापकारिषु।
युधि- यो हि संहरते क्रोधं भवस्तस्य सुशोभने ॥ १४३ ॥
यः पुनः पुरुषः क्रोधं नित्यं न सहते शुभे।
तस्याभावाय भवति क्रोधः परमदारुणः ॥ १४४ ॥
हिंस्यात्क्रोधादवध्यांस्तु वध्यान्सम्पूजयीत च।
आत्मानमपि च क्रुद्धः प्रेषयेद्यमसादनम् ॥ १४५ ॥
एतान्दोषान्प्रपश्यद्भिर्जितः क्रोधो मनीषिभिः।
इच्छद्भिः परमं श्रेय इह चामुत्र चोत्तमम् ॥ १४६ ॥
तं क्रोधं वर्जितं धीरैः कथमस्मद्विधश्चरेत्।
एतद्द्रौपदि सन्धाय न मे मन्युः प्रवर्धते ॥ १४७ ॥
मन्योर्हि विजयं कृष्णे प्रशंसन्तीह साधवः।
क्षमावतो जयो नित्यं साधोरिह सतां मतम् ॥ १४८ ॥
यस्तु क्रोधं समुत्पन्नं प्रज्ञया प्रतिबाधते।
तेजस्विनं तं विद्वांसो मन्यन्ते तत्त्वदर्शिनः ॥ १४९ ॥
पितामहः शान्तनवः शमं संपूजयिष्यति।
कृष्णश्च देवकीपुत्रः शमं सम्पूजयिष्यति ॥ १५० ॥

सोमदत्तो युयुत्सुश्च द्रोणपुत्रस्तथैव च।
पितामहश्च नो व्यासः शमं वदति नित्यशः ॥ १५१ ॥
एतैर्हि राजा नियतं चोद्यमानः शमं प्रति।
राज्यं दातेति मे बुद्धिर्न चेल्लोभान्नशिष्यति ॥ १५२ ॥
एतदात्मवतां वृत्तमेष धर्मः सनातनः।
क्षमा चैवानृशंस्यं च तत्कर्तास्म्यहमञ्जसा ॥ १५३ ॥

द्रौपदी– नेह धर्मानृशंसाभ्यां न क्षान्त्या नार्जवेन च।
(अ.३०) पुरुषः श्रियमाप्नोति न घृणित्वेन कर्हिचित् ॥ १५४ ॥
त्वां च व्यसनमभ्यागादिदं भारत दुःसहम्।
यत्त्वं नार्हसि नापीमे भ्रातरस्ते महौजसः ॥ १५५ ॥
भीमसेनार्जुनौ चोभौ माद्रेयौ च मया सह।
त्यजेस्त्वमिति मे बुद्धिर्न तु धर्म परित्यजेः ॥ १५६ ॥
राजानं धर्मगोप्तारं धर्मो रक्षति रक्षितः।
इति मे श्रुतमार्याणां त्वां तु मन्ये न रक्षति ॥ १५७ ॥

युधि– वल्गु चित्रपदं श्लक्ष्णं याज्ञसेनि त्वया वचः।
(अ.३१) उक्तं तच्छ्रुतमस्माभिर्नास्तिक्यं तु प्रभाषसे ॥ १५८ ॥
धर्मं चरामि सुश्रोणि न धर्मफलकारणात्।
आगमाननतिक्रम्य सतां वृत्तमवेक्ष्य च ॥ १५९ ॥
धर्म एव मनः कृष्णे स्वभावाच्चैव मे धृतम्।
धर्मवाणिज्यको हीनो जघन्यो धर्मवादिनाम् ॥ १६० ॥
न धर्मफलमाप्नोति यो धर्मं दोग्धुमिच्छति।
यश्चैनं शङ्कते कृत्वा नास्तिक्यात्पापचेतनः ॥ १६१ ॥
अतिवादाद्वदाम्येष मा धर्ममभिशङ्किथाः।
धर्माभिशङ्की पुरुषस्तिर्यग्गतिपरायणः ॥ १६२ ॥

द्रौप– नावमन्ये न गर्हे च धर्मं पार्थ कथञ्चन।
(अ.३२) आर्ताहं प्रलपामीदमिति मां विद्धि भारत ॥ १६३ ॥

कर्म खल्विह कर्तव्यं जानतामित्रकर्शन।
अकर्माणो हि जीवन्ति स्थावरा नेतरे जनाः ॥ १६४ ॥
यश्च दिष्टपरो लोके यश्चापि हठवादिकः।
उभावपि शठावेतौ कर्मबुद्धिः प्रशस्यते ॥ १६५ ॥
यो हि दिष्टमुपासीनो निर्विचेष्टः सुखं शयेत्।
अवसीदेत्स दुर्बुद्धिरामो घट इवोदके ॥ १६६ ॥
कर्तव्यमेव कर्मेति मनोरेष विनिश्चयः।
एकान्तेन ह्यनीहोयं पराभवति पूरुषः ॥ १६७ ॥
एकान्तेन ह्यनर्थोऽयं वर्ततेऽस्मासु साम्प्रतम्।
स तु निःसंशयं न स्यात्त्वयि कर्मण्यवस्थिते ॥ १६८ ॥
उत्थानयुक्तः सततं परेषामन्तरैषणे।
आनृण्यमाप्नोति नरः परस्यात्मन एव च ॥ १६९ ॥
(अ.३३) याज्ञसेन्या वचः श्रुत्वा भीमसेनो ह्यमर्षणः।
निःश्वसन्नुपसङ्गम्य क्रुद्धो राजानमब्रवीत् ॥ १७० ॥
राज्यस्य पदवीं धर्म्यां व्रज सत्पुरुषोचिताम्।
धर्मकामार्थहीनानां किं नो वस्तुं तपोवने ॥ १७१ ॥
नैव धर्मेण तद्राज्यं नार्जवेन न चौजसा।
अक्षकूटमधिष्ठाय हृतं दुर्योधनेन वै ॥ १७२ ॥
धर्मलेशप्रतिच्छन्नः प्रभवं धर्मकामयोः।
अर्थमुत्सृज्य किं राजन्दुःखेषु परितप्यसे ॥ १७३ ॥
भवान् धर्मो धर्म इति सततं व्रतकर्शितः।
कच्चिद्राजन्न निर्वेदादापन्नः क्लीबजीविकाम् ॥ १७४ ॥
सर्वथा धर्मनित्यं तु पुरुषं धर्मदुर्बलम्।
त्यजतस्तात धर्मार्थौ प्रेतं दुःखसुखे यथा ॥ १७५ ॥
यस्य धर्मो हि धर्मार्थं क्लेशभाङ्न स पण्डितः।
न स धर्मस्य वेदार्थं सूर्यस्यान्धः प्रभामिव ॥ १७६ ॥

सर्वथा धर्ममूलोऽर्थो धर्मश्चार्थपरिग्रह ।
इतरेतरयोर्नीतौ विद्धि मेघोदधी यथा ॥ १७७ ॥
न धर्मपर एव स्यान्न चार्थपरमो नर ।
न कामपरमो वा स्यात्सर्वान्सेवेत सर्वदा ॥ १७८ ॥
धर्म पूर्वे धन मध्ये जघन्ये काममाचरेत् ।
अहन्यनुचरेदेवमेष शास्त्रकृतो विधि ॥ १७९ ॥
क्षत्रियस्य विशेषेण धर्मस्तु बलमौरसम् ।
स्वधर्म प्रतिपद्यस्व जहि शत्रून्समागतान् ॥ १८० ॥
स क्षात्र हृदय कृत्वा त्यक्त्वेद शिथिल मन ।
वीर्यमास्थाय कौरव्य धुरमुद्वह धुर्यवत् ॥ १८१ ॥
न हि केवलधर्मात्मा पृथिवीं जातु कश्चन ।
पार्थिवो व्यजयद्राजन भूतिं न पुन श्रियम् ॥ १८२ ॥
भ्रातर॰ पूर्वजाताश्च सुसमृद्धाश्च सर्वश ।
निकृत्या निर्जिता देवैरसुरा पार्थिवर्षभ ॥ १८३ ॥
एवं बलवत सर्वमिति बुद्ध्वा महीपते ।
जहि शत्रून्महाबाहो परा निकृतिमास्थित ॥ १८४ ॥

युधि- (अ.३४)

असंशय भारत सत्यमेत
यन्मा तुदन्वाक्यशल्यै क्षिणोपि ।
न त्वा विगर्हे प्रतिकूलमेव
ममानयाद्धि व्यसन व आगात् ॥ १८५ ॥
स नो राजा धृतराष्ट्रस्य पुत्रो
न्यपातयद्व्यसने राज्यमिच्छन् ।
दास्य च नोऽगमयद्भीमसेन
यत्राभवच्छरण द्रौपदी न॰ ॥ १८६ ॥
त्व चापि तद्वेत्थ धनञ्जयश्च
पुनर्द्यूतायागतास्ता सभा न ।

यन्मां ब्रवीद्धृतराष्ट्रस्य पुत्र
एककलहार्थं भरतानां समक्षम् ॥ १८७ ॥
वने समा द्वादश राजपुत्र
यथा कामं विदितमजातशत्रो।
अथापरं चाविदितश्चरेथाः
सर्वैः सह भ्रातृभिश्छद्मगूढः ॥ १८८ ॥
तं सन्धिमास्थाय सतां सकाशे
को नाम जह्यादिह राज्यहेतोः।
आर्यस्य मन्ये मरणाद्गरीयो
यद्धर्ममुत्क्रम्य महीं प्रशासेत् ॥ १८९ ॥
तदेव चेद्वीर कर्माकरिष्यो
यदा द्यूते परिघं पर्यमृक्षः।
बाहू दिधक्षन्वारितः फाल्गुनेन।
किं दुष्कृतं भीम तदाऽभविष्यत् ॥ १९० ॥
प्रागेव चैवं समयक्रियायाः
किं नाब्रवीः पौरुषमाविदानः।
प्राप्तं तु कालं त्वभिपद्य पश्चात्
किं मामिदानीमतिवेलमात्थ ॥ १९१ ॥
न त्वद्य शक्यं भरतप्रवीर
कृत्वा यदुक्तं कुरुवीरमध्ये।
कालं प्रतीक्षस्व सुखोदयस्य
पक्तिं फलानामिव बीजवापः ॥ १९२ ॥

भीम- (अ.३५) यो नूनममितायुः स्यादथवापि प्रमाणवित्।
स कालं वै प्रतीक्षेत सर्वप्रत्यक्षदर्शिवान् ॥ १९३ ॥
प्रतीक्ष्यमाणः कालो नः समा राजंस्त्रयोदश।
आयुषोपचयं कृत्वा मरणायोपनेष्यति ॥ १९४ ॥

अस्माभिरुषिता॰ सम्यग्वने मासास्त्रयोदश।
परिमाणेन तान्पश्य तावत॰ परिवत्सरान् ॥ १९५ ॥
अस्ति मास॰ प्रतिनिधिर्यथा प्राहुर्मनीषिण॰।
पूतिकानिव सोमस्य तथेदं क्रियतामिति ॥ १९६ ॥
तस्माच्छत्रुवधे राजन् क्रियतां निश्चयस्त्वया।
क्षत्रियस्य हि सर्वस्य नान्यो धर्मोऽस्ति सयुगात् ॥ १९७ ॥

युधि- महापापानि कर्माणि यानि केवलसाहसात्।
(अ ३६) आरभ्यन्ते भीमसेन व्यथन्ते तानि भारत ॥ १९८ ॥
सुमन्त्रिते सुविक्रान्ते सुकृते सुविचारिते।
सिध्यन्त्यर्था महाबाहो दैवं चात्र प्रदक्षिणम् ॥ १९९ ॥
यत्तु केवलचापल्याद्बलदर्पोत्थित स्वयम्।
आरब्धव्यमिदं कार्यं मन्यसे शृणु तत्र मे ॥ २०० ॥
समा यद्यपि भीष्मस्य वृत्तिरस्मासु तेषु च।
द्रोणस्य च महाबाहो कृपस्य च महात्मन ॥ २०१ ॥
अवश्यं राजपिण्डस्तैर्निर्वेश्य इति मे मति ।
तस्मात्त्यक्ष्यन्ति सङ्ग्रामे प्राणानपि सुदुस्त्यजान् ॥ २०२ ॥
सर्वे दिव्यास्त्रविद्वास सर्वे धर्मपरायणा॰।
अजेयाश्चेति मे बुद्धिरपि देवै सवासवै ॥ २०३ ॥
अनिर्जित्य रणे सर्वानेतान्पुरुषसत्तमान्।
अशक्यो ह्यसहायेन हन्तु दुर्योधनस्त्वया ॥ २०४ ॥
तयो॰ संवदतोरेव तदा पाण्डवयोर्द्वयो॰।
आजगाम महायोगी व्यास सत्यवतीसुत ॥ २०५ ॥

व्यास- युधिष्ठिर महाबाहो वेद्मि ते हृदयस्थितम्।
मनीषया तत क्षिप्रमागतोऽस्मि नरर्षभ ॥ २०६ ॥
भीष्माद्द्रोणात्कृपात्कर्णाद्द्रोणपुत्राच्च भारत।
दुर्योधनान्नृपसुतात्तथा दु॰शासनादपि ॥ २०७ ॥

यत्ते भयममित्रघ्न हृदि सम्परिवर्तते ।
तत्तेऽहं नाशयिष्यामि विधिदृष्टेन कर्मणा ॥ २०८ ॥
गृहाणेमां मया प्रोक्तां सिद्धिं मूर्तिमतीमिव ।
विद्यां प्रतिस्मृतिं नाम प्रपन्नाय ब्रवीमि ते ॥ २०९ ॥
यामवाप्य महाबाहुरर्जुनः साधयिष्यति ।
अस्त्रहेतोर्महेन्द्रं च रुद्रं चैवाभिगच्छतु ॥ २१० ॥
वनादस्माच्च कौन्तेय वनमन्यद्विचिन्त्यताम् ।
निवासार्थाय यद्युक्तं भवेद्वः पृथिवीपते ॥ २११ ॥
एकत्र चिरवासो हि न प्रीतिजननो भवेत् ।
एवमुक्त्वा प्रपन्नाय शुचये भगवान्प्रभुः ॥ २१२ ॥
प्रोवाच लोकतत्त्वज्ञो योगी विद्यामनुत्तमाम् ।
अनुज्ञाय च कौन्तेयं तत्रैवान्तरधीयत ॥ २१३ ॥
युधिष्ठिरस्तु धर्मात्मा तद्ब्रह्म मनसा यतः ।
धारयामास मेधावी काले काले सदाऽभ्यसन् ॥ २१४ ॥
स व्यासवाक्यमुदितो वनाद्द्वैतवनात्ततः ।
ययौ सरस्वतीकूले काम्यकं नाम काननम् ॥ २१५ ॥

## अर्जुनस्य इन्द्रदर्शनार्थं गमनम्, नलोपाख्यानम्

(अ.३७) कस्यचित्त्वथ कालस्य धर्मराजो युधिष्ठिरः ।
संस्मृत्य मुनिसन्देशमिदं वचनमब्रवीत् ॥ २१६ ॥
विविक्ते विदितप्रज्ञमर्जुनं पुरुषर्षभ ।
अद्य चेयं मही कृत्स्ना दुर्योधनवशानुगा ॥ २१७ ॥
भवानेव प्रियोऽस्माकं त्वयि भारः समाहितः ।
अत्र कृत्यं प्रपद्यामि प्राप्तकालमरिन्दम ॥ २१८ ॥
कृष्णद्वैपायनात्तात गृहीतोपनिषन्मया ।
तया प्रयुक्तया सम्यग्जगत्सर्वं प्रकाशते ॥ २१९ ॥

तेन त्व ब्रह्मणा तात संयुक्त सुसमाहित ।
शक्रमेव प्रपद्यस्व स तेऽस्त्राणि प्रदास्यति ॥ २२० ॥
दीक्षितोद्यैव गच्छ त्व द्रष्टु देव पुरन्दरम् ।
एवमुक्त्वा धर्मराजस्तमध्यापयत प्रभु· ॥ २२१ ॥
तत प्रदक्षिणं कृत्वा भ्रातृन्धौम्य च पाण्डव ।
प्रातिष्ठत महाबाहु प्रगृह्य रुचिरं धनु ॥ २२२ ॥
(अ.५१) अस्त्रहेतोर्गते पार्थे शक्रलोकं महात्मनि ।
आवसन्कृष्णया सार्धं काम्यके भरतर्षभा· ॥ २२३ ॥
धनञ्जय शोचमाना साश्रुकण्ठा सुदु खिता· ।
अथ भीमो महाबाहुर्युधिष्ठिरमभाषत ॥ २२४ ॥
न हि धर्मो महाराज क्षत्रियस्य वनाश्रय ।
राज्यमेव परं धर्मं क्षत्रियस्य विदुर्बुधा ॥ २२५ ॥
स क्षत्रधर्मविद्राजा मा धर्म्याद्दीनश पथ ।
प्राग्द्वादशसमा राजन्धार्तराष्ट्रान्निहन्महि ॥ २२६ ॥
निकृत्या निकृतिप्रज्ञा हन्तव्या इति निश्चय ।
न हि नैकृतिकं हत्वा निकृत्या पापमुच्यते ॥ २२७ ॥
तथा भारत धर्मेषु धर्मज्ञैरिह दृश्यते ।
अहोरात्र महाराज तुल्यं संवत्सरेण ह ॥ २२८ ॥
त्रयोदशसमा कालो ज्ञायता परिनिष्ठित· ।
कालो दुर्योधन हन्तुं सानुबन्धमरिन्दम ॥ २२९ ॥
एकाग्रं पृथिवीं सर्वा पुरा राजन्करोति स· ।
यथैव कक्षमुत्सृष्टो दहेदनिलसारथि ॥ २३० ॥
हनिष्यामि तथा मन्दमनुजानातु मे भवान् ।
एवं ब्रुवाण भीम तु धर्मराजो युधिष्ठिर ॥ २३१ ॥
उवाच सान्त्वयन्राजा मूर्ध्न्युपाघ्राय पाण्डवम् ।
असंशयं महाबाहो हनिष्यसि सुयोधनम् ॥ २३२ ॥

धर्मात्मयोद्गमादूर्ध्वं सह गाण्डीवधन्वना।
यत्त्वमाप्स्यसे पार्थ प्राणः काल इति प्रभो ॥ २३३ ॥
अनृतं नोत्सहे वक्तुं न ह्येतन्मम विद्यते।
अन्तरेणापि कौन्तेय निकृतिं पापनिश्चयम् ॥ २३४ ॥
हन्ता त्वमसि दुर्धर्ष सानुबन्धं सुयोधनम्।
एवं ब्रुवति भीमं तु धर्मराजे युधिष्ठिरे ॥ २३५ ॥
आजगाम महाभागो बृहदश्वो महानृषिः।
तमभिप्रेक्ष्य धर्मात्मा सम्प्राप्तं धर्मचारिणम् ॥ २३६ ॥
शास्त्रवन्मधुपर्केण पूजयामास धर्मराट्।
आश्वस्तं चैनमासीनमुपासीनो युधिष्ठिरः ॥ २३७ ॥
अभिप्रेक्ष्य महाबाहुः कृपणं बह्वभाषत।
अस्ति राजा मया कश्चिदल्पभाग्यतरो भुवि ॥ २३८ ॥
भवता दृष्टपूर्वो वा श्रुतपूर्वोऽपि वा क्वचित्।
बृहदश्व– अत्र ते वर्णयिष्यामि यदि शुश्रूषसेऽनघ ॥ २३९ ॥
यस्त्वत्तो दुःखिततरो राजासीत्पृथिवीपते।
निषधेषु महीपालो वीरसेन इति श्रुतः ॥ २४० ॥
तस्य पुत्रोऽभवन्नाम्ना नलो धर्मार्थकोविदः।
(अ.५३) उपपन्नो गुणैरिष्टै रूपवानश्वकोविदः ॥ २४१ ॥
अक्षप्रियः सत्यवादी महानक्षौहिणीपतिः।
तथैवासीद्विदर्भेषु भीमो भीमपराक्रमः ॥ २४२ ॥
स प्रजार्थे परं यत्नमकरोत्सुसमाहितः।
तमभ्यगच्छद्ब्रह्मर्षिर्दमनो नाम भारत ॥ २४३ ॥
तं स भीमः प्रजाकामस्तोषयामास धर्मवित्।
तस्मै प्रसन्नो दमनः सभार्याय वरं ददौ ॥ २४४ ॥
कन्यारत्नं कुमारांश्च त्रीनुदारान्महायशाः।
दमयन्तीं दमं दान्तं दमनं च सुवर्चसम् ॥ २४५ ॥

दमयन्ती तु रूपेण तेजसा यशसा श्रिया।
सौभाग्येन च लोकेषु यशः प्राप सुमध्यमा ॥ २४६ ॥
नलश्च नरशार्दूलो लोकेष्वप्रतिमो भुवि।
कन्दर्प इव रूपेण मूर्तिमानभवत्स्वयम् ॥ २४७ ॥
तस्याः समीपे तु नलं प्रशशंसुः कुतूहलात्।
नैषधस्य समीपे तु दमयन्तीं पुनः पुनः ॥ २४८ ॥
तयोरदृष्टः कामोभूच्छृण्वतोः सततं गुणान्।
अन्योन्यं प्रति कौन्तेय स व्यवर्धत हृच्छयः ॥ २४९ ॥
अशक्नुवन्नलः कामं तदा धारयितुं हृदा।
अन्तःपुरसमीपस्थे वन आस्ते रहोगतः ॥ २५० ॥
स ददर्श ततो हंसाञ्जातरूपपरिष्कृतान्।
वने विचरतां तेषामेकं जग्राह पक्षिणम् ॥ २५१ ॥
ततोऽन्तरिक्षगो वाचं व्याजहार नलं तदा।
हन्तव्योऽस्मि न ते राजन्करिष्यामि तव प्रियम् ॥ २५२ ॥
दमयन्तीसकाशे त्वां कथयिष्यामि नैषध।
यथा त्वदन्यं पुरुषं न सा मंस्यति कर्हिचित् ॥ २५३ ॥
एवमुक्तस्ततो हंसमुत्ससर्ज महीपतिः।
ते तु हंसाः समुत्पत्य विदर्भानगमंस्तदा ॥ २५४ ॥
विदर्भनगरीं गत्वा दमयन्त्यास्तदान्तिके।
निपेतुस्ते गरुत्मन्तः सा ददर्श च तान्खगान् ॥ २५५ ॥
सा तानद्भुतरूपान्वै दृष्ट्वा सखिगणावृता।
हृष्टा ग्रहीतुं खगमांस्त्वरमाणोपचक्रमे ॥ २५६ ॥
दमयन्ती तु यं हंसं समुपाधावदन्तिके।
स मानुषीं गिरं कृत्वा दमयन्तीमथाब्रवीत् ॥ २५७ ॥
दमयन्ति नलो नाम निषधेषु महीपतिः।
अश्विनोः सदृशो रूपे न समास्तस्य मानुषाः ॥ २५८ ॥

तस्य वै यदि भार्या त्वं भवेथा वरवर्णिनि।
सफलं ते भवेज्जन्म रूपं चेदं सुमध्यमे ॥ २५९ ॥
एवमुक्ता तु हंसेन दमयन्ती विशाम्पते।
अब्रवीत्तत्र तं हंसं त्वमप्येवं नले वद ॥ २६० ॥
तथेत्युक्त्वाऽण्डजः कन्यां विदर्भस्य विशाम्पते।
पुनरागम्य निषधान्नले सर्वं न्यवेदयत् ॥ २६१ ॥
(अ.५४) दमयन्ती तु तच्छ्रुत्वा वचो हंसस्य भारत।
ततः प्रभृति न स्वस्था नलं प्रति बभूव सा ॥ २६२ ॥
न शय्यासनभोगेषु रतिं विन्दति कर्हिचित्।
न नक्तं न दिवा शेते हाहेति रुदती पुनः ॥ २६३ ॥
स समीक्ष्य महीपालः स्वां सुतां प्राप्तयौवनाम्।
अपश्यदात्मना कार्यं दमयन्त्याः स्वयंवरम् ॥ २६४ ॥
स संनिमन्त्रयामास महीपालान्विशाम्पतिः।
अनुभूयतामयं वीराः स्वयंवर इति प्रभो ॥ २६५ ॥
श्रुत्वा तु पार्थिवाः सर्वे दमयन्त्याः स्वयंवरम्।
अभिजग्मुस्ततो भीमं राजानो भीमशासनात् ॥ २६६ ॥
एतस्मिन्नेव काले तु सुराणामृषिसत्तमौ।
नारदः पर्वतश्चैव महाप्राज्ञौ महाव्रतौ।
देवराजस्य भवनं विविशाते सुपूजितौ ॥ २६७ ॥
नारदः- विदर्भराज्ञो दुहिता दमयन्तीति विश्रुता।
रूपेण समतिक्रान्ता पृथिव्यां सर्वयोषितः ॥ २६८ ॥
तस्याः स्वयंवरः शक्र भविता न चिरादिव।
तत्र गच्छन्ति राजानो राजपुत्राश्च सर्वशः ॥ २६९ ॥
एतस्मिन्कथ्यमाने तु लोकपालाश्च साग्निकाः।
आजग्मुर्देवराजस्य समीपममरोत्तमाः ॥ २७० ॥

ततस्ते शुश्रुवुः सर्वे नारदस्य वचो महत्।
श्रुत्वैव चाब्रुवन्हृष्टा गच्छामो वयमप्युत ॥ २७१ ॥
ततः सर्वे महाराज सगणाः सहवाहनाः।
विदर्भानभिजग्मुस्ते यत. सर्वे महीक्षित. ॥ २७२ ॥
अथ देवाः पथि नलं ददृशुर्भूतले स्थितम्।
अब्रुवन्नैषधं राजन्नवतीर्य नभस्तलात् ॥ २७३ ॥
भो भो निषधराजेन्द्र नल सत्यव्रतो भवान्।
अस्माकं कुरु साहाय्य दूतो भव नरोत्तम ॥ २७४ ॥
(अ.५५) तेभ्यः प्रतिज्ञाय नल करिष्य इति भारत।
अथैतान्परिपप्रच्छ कृताञ्जलिरुपस्थितः ॥ २७५ ॥
के वै भवन्तः कश्चासौ यस्याहं दूत ईप्सितः।
किं च तद्वो मया कार्यं कथयध्वं यथातथम् ॥ २७६ ॥
एवमुक्ते नैषधेन मघवानभ्यभाषत।
अहमिन्द्रोऽयमग्निश्च तथैवायमपां पतिः ॥ २७७ ॥
शरीरान्तकरो नृणां यमोऽयमपि पार्थिव।
त्वं वै समागतानस्मान्दमयन्त्यै निवेदय ॥ २७८ ॥
प्राप्तुमिच्छन्ति देवास्त्वां शक्रोऽग्निर्वरुणो यम ।
तेषामन्यतमं देवं पतित्वे वरयस्व ह ॥ २७९ ॥
एवमुक्त. स शक्रेण नलः प्राञ्जलिरब्रवीत्।
एकार्थे समुपेतं मां न प्रेषयितुमर्हथ ॥ २८० ॥
देवाः- करिष्य इति संश्रुत्य पूर्वमस्मासु नैषध।
न करिष्यसि कस्मात्त्वं व्रज नैषध मा चिरम् ॥ २८१ ॥
एवमुक्तः स देवैस्तैर्नैषध. पुनरब्रवीत्।
सुरक्षितानि वेश्मानि प्रवेष्टुं कथमुत्सहे ॥ २८२ ॥
प्रवेक्ष्यसीति तं शक्रः पुनरेवाभ्यभाषत।
जगाम स तथेत्युक्त्वा दमयन्त्या निवेशनम् ॥ २८३ ॥

ददर्श तत्र वैदर्भीं सखीगणसमावृताम् ।
तस्य दृष्ट्वैव ववृधे कामस्तां चारुहासिनीम् ॥ २८४ ॥
सत्यं चिकीर्षमाणस्तु धारयामास हृच्छयम् ।
ततस्ता नैषधं दृष्ट्वा सम्भ्रान्ताः परमाङ्गनाः ॥ २८५ ॥
न तास्तं शक्नुवन्ति स्म व्याहर्तुमपि किञ्चन ।
अथैनं स्मयमानं तु स्मितपूर्वाभिभाषिणी ॥ २८६ ॥
दमयन्ती नलं वीरमभ्यभाषत विस्मिता ।
कस्त्वं सर्वानवद्याङ्ग मम हृच्छयवर्धन ॥ २८७ ॥
कथमागमनं चेह कथं चासि न लक्षितः ।
नल– नलं मां विद्धि कल्याणि देवदूतमिहागतम् ॥ २८८ ॥
देवास्त्वां प्राप्तुमिच्छन्ति शक्रोऽग्निर्वरुणो यमः ।
तेषामन्यतमं देवं पतिं वरय शोभने ।
तेषामेव प्रभावेण प्रविष्टोऽहमलक्षितः ॥ २८९ ॥
(अ.५६) सा नमस्कृत्य देवेभ्यः प्रहस्य नलमब्रवीत् ।
प्रणयस्व यथाश्रद्धं राजन्किं करवाणि ते ॥ २९० ॥
यदि त्वं भजमानां मां प्रत्याख्यास्यसि मानद ।
विषमग्निं जलं रज्जुमास्थास्ये तव कारणात् ॥ २९१ ॥
एवमुक्तस्तु वैदर्भ्या नलस्तां प्रत्युवाच ह ।
तिष्ठत्सु लोकपालेषु कथं मानुषमिच्छसि ॥ २९२ ॥
नैषधेनैवमुक्ता सा दमयन्ती वचोऽब्रवीत् ।
देवेभ्योऽहं नमस्कृत्य सर्वेभ्यः पृथिवीपते ॥ २९३ ॥
वृणे त्वामेव भर्तारं सत्यमेतद्ब्रवीमि ते ।
एवमुक्तस्तु वैदर्भ्या नलो राजा विशाम्पते ।
आजगाम पुनस्तत्र यत्र देवाः समागताः ॥ २९४ ॥
नल– भवद्भिरहमादिष्टो दमयन्त्या निवेशनम् ।

प्रविष्टः सुमहाकक्षं दण्डिभिः स्थविरैर्वृतम् ॥ २९५ ॥
वर्ण्यमानेषु च मया भवत्सु रुचिरानना ।
अब्रवीदैव मां बाला आयान्तु सहिता सुराः ॥ २९६ ॥
तेषामहं संनिधौ त्वां वरयिष्यामि नैषध ।
एतावदेव विबुधा यथावृत्तमुपाहृतम् ॥ २९७ ॥
(अ.५७) अथ काले शुभे प्राप्ते तिथौ पुण्ये क्षणे तथा ।
आजुहाव महीपालान्भीमो राजा स्वयंवरे ॥ २९८ ॥
कनकस्तम्भरुचिरं तोरणेन विराजितम् ।
विविशुस्ते नृपा रङ्गं महासिंहा इवाचलम् ॥ २९९ ॥
दमयन्ती ततो रङ्गं प्रविवेश शुभानना ।
मुष्णन्ती प्रभया राज्ञां चक्षूंषि च मनांसि च ॥ ३०० ॥
ततः सङ्कीर्त्यमानेषु राज्ञां नामसु भारत ।
ददर्श भैमी पुरुषान्पञ्च तुल्याकृतीनिह ॥ ३०१ ॥
यं यं हि ददृशे तेषां तं तं मेने नलं नृपम् ।
सा विनिश्चित्य बहुधा विचार्य च पुनः पुनः ॥ ३०२ ॥
शरणं प्रति देवानां प्राप्तकालममन्यत ।
देवेभ्यः प्राञ्जलिर्भूत्वा वेपमानेदमब्रवीत् ॥ ३०३ ॥
हंसानां वचनं श्रुत्वा यथा मे नैषधो वृतः ।
पतित्वे तेन सत्येन देवास्तं प्रदिशन्तु मे ॥ ३०४ ॥

छायाद्वितीयो म्लानस्त्रग्रजःस्वेदसमन्वितः।
भूमिष्ठो नैषधश्चैव निमेषेण च सूचितः॥ ३०८॥
सा समीक्ष्य तु तान्देवान्पुण्यश्लोकं च भारत।
नैषधं वरयामास भैमी धर्मेण पाण्डव॥ ३०९॥
वृते तु नैषधे भैम्या लोकपाला महौजसः।
प्रहृष्टमनसः सर्वे नलायाष्टौ वरान्ददुः॥ ३१०॥
प्रत्यक्षदर्शनं यज्ञे गतिं चानुत्तमां शुभाम्।
नैषधाय ददौ शक्रः प्रीयमाणः शचीपतिः॥ ३११॥
अग्निरात्मभवं प्रादाद्यत्र वाञ्छति नैषधः।
लोकानात्मप्रभांश्चैव ददौ तस्मै हुताशनः॥ ३१२॥
यमस्त्वन्नरसं प्रादाद्धर्मे च परमां स्थितिम्।
अपाम्पतिरपां भावं यत्र वाञ्छति नैषधः॥ ३१३॥
स्रजश्चोत्तमगन्धाढ्याः सर्वे च मिथुनं ददुः।
वरानेवं प्रदायास्य देवास्ते त्रिदिवं गताः॥ ३१४॥
पार्थिवाश्चानुभूयास्य विवाहं विस्मयान्विताः।
दमयन्त्याश्च मुदिताः प्रतिजग्मुर्यथागतम्॥ ३१५॥
गतेषु पार्थिवेन्द्रेषु भीमः प्रीतो महामनाः।
विवाहं कारयामास दमयन्त्या नलस्य च॥ ३१६॥
उष्य तत्र यथाकामं नैषधो द्विपदां वरः।
भीमेन समनुज्ञातो जगाम नगरं स्वकम्॥ ३१७॥
अवाप्य नारीरत्नं तु पुण्यश्लोकोऽपि पार्थिवः।
रेमे सह तया राजञ्छच्येव बलवृत्रहा॥ ३१८॥
जनयामास च ततो दमयन्त्यां महामनाः।
इन्द्रसेनं सुतं चापि इन्द्रसेनां च कन्यकाम्॥ ३१९॥
(अ.५८) वृते तु नैषधे भैम्या लोकपाला महौजसः।
यान्तो ददृशुरायान्तं द्वापरं कलिना सह॥ ३२०॥

अथाब्रवीत्कलिं शक्रः क्व ले ब्रूहि क यास्यसि।
ततोऽब्रवीत्कलिः शक्रं दमयन्त्याः स्वयंवरम् ॥ ३२१ ॥
गत्वा हि वरयिष्ये तां मनो हि मम तां गतम्।
तमब्रवीत्प्रहस्येन्द्रो निर्वृत्तः स स्वयंवरः ॥ ३२२ ॥
वृतस्तया नलो राजा पतिरस्मत्समीपतः।
एवमुक्तस्तु शक्रेण कलिर्द्वापरमब्रवीत् ॥ ३२३ ॥
संहर्तुं नोत्सहे कोप नले वत्स्यामि द्वापर।
भ्रंशयिष्यामि तं राज्यान्न भैम्या सह रंस्यते ॥ ३२४ ॥
त्वमप्यक्षान्समाविश्य साहाय्यं कर्तुमर्हसि।
(अ.५९) एवं स समयं कृत्वा द्वापरेण कलिः सह ॥ ३२५ ॥
आजगाम ततस्तत्र यत्र राजा स नैषधः।
अथास्य द्वादशे वर्षे ददर्श कलिरन्तरम् ॥ ३२६ ॥
कृत्वा मूत्रमुपस्पृश्य सन्ध्यामन्वास्त नैषधः।
अकृत्वा पादयोः शौचं तत्रैनं कलिराविशत् ॥ ३२७ ॥
स समाविश्य च नलं समीपं पुष्करस्य च।
गत्वा पुष्करमाहेदमेहि दीव्य नलेन वै ॥ ३२८ ॥
अक्षद्यूते नलं जेता भवान्हि सहितो मया।
एवमुक्तस्तु कलिना पुष्करो नलमभ्ययात् ॥ ३२९ ॥
कलिश्चैव वृषो भूत्वा गवां पुष्करमभ्ययात्।
आसाद्य तु नलं वीरं पुष्करः परवीरहा ॥ ३३० ॥
दीव्यावेत्यब्रवीद्भ्राता वृषेणेति मुहुर्मुहुः।
न चक्षमे ततो राजा समाह्वानं महामनाः ॥ ३३१ ॥
वैदर्भ्याः प्रेक्षमाणायाः पणकालममन्यत।
तथा तदभवद्द्यूतं पुष्करस्य नलस्य च ॥ ३३२ ॥
युधिष्ठिर बहून्मासान्पुण्यश्लोकस्त्वजीयत।
(अ.६०) भयशोकसमाविष्टा राजन्भीमसुता ततः ॥ ३३३ ॥

नलं च हृतसर्वस्वमुपलभ्येदमब्रवीत्।
बृहत्सेनामतियशां तां धात्रीं परिचारिकाम्॥ ३३४॥
सूतमानय कल्याणि महत्कार्यमुपस्थितम्।
बृहत्सेना तु सा श्रुत्वा दमयन्त्याः प्रभाषितम्॥ ३३५॥
वार्ष्णेयमानयामास पुरुषैराप्तकारिभिः।
वार्ष्णेयं तु ततो भैमी सान्त्वयञ्छ्लक्ष्णया गिरा॥ ३३६॥
उवाच देशकालज्ञा प्राप्तकालमनिन्दिता।
नलस्य दयितानश्वान्योजयित्वा मनोजवान्॥ ३३७॥
इदमारोप्य मिथुनं कुण्डिनं यातुमर्हसि।
मम ज्ञातिषु निक्षिप्य दारकौ स्यन्दनं तथा॥ ३३८॥
अश्वांश्चेमान्यथाकामं वस वान्यत्र गच्छ वा।
दमयन्त्यास्तु तद्वाक्यं वार्ष्णेयो नलसारथिः॥ ३३९॥
न्यवेदयदशेषेण नलामात्येषु मुख्यशः।
तैः समेत्य विनिश्चित्य सोऽनुज्ञातो महीपते॥ ३४०॥
ययौ मिथुनमारोप्य विदर्भांस्तेन वाहिना।
हयांस्तत्र विनिक्षिप्य सूतो रथवरं च तम्॥ ३४१॥
इन्द्रसेनां च तां कन्यामिन्द्रसेनं च बालकम्।
अटमानस्ततोऽयोध्यां जगाम नगरीं तदा॥ ३४२॥
ऋतुपर्णं स राजानमुपतस्थे सुदुःखितः।
भृतिं चोपययौ तस्य सारथ्येन महीपते॥ ३४३॥
(अ.११) ततस्तु याते वार्ष्णेये पुण्यश्लोकस्य दीव्यतः।
पुष्करेण हृतं राज्यं यच्चान्यद्वसु किंचन॥ ३४४॥
एकवासा ह्यसंवीतः सुहृच्छोकविवर्धनः।
निश्चक्राम ततो राजा त्यक्त्वा सुविपुलां श्रियम्॥ ३४५॥
दमयन्त्येकवस्त्राऽथ गच्छन्तं पृष्ठतोऽन्वगात्।
पुष्करस्तु महाराज घोषयामास वै पुरे॥ ३४६॥

नले यः सम्यगातिष्ठेत्स गच्छेद्वध्यतां मम।
क्षुधया पीड्यमानस्तु नलो बहुतिथेऽहनि ॥ ३४७ ॥
अपश्यच्छकुनान्कांश्चिद्धिरण्यसदृशच्छदान्।
ततस्तान्परिधानेन वाससा स समावृणोत् ॥ ३४८ ॥
तस्य तद्वस्त्रमादाय सर्वे जग्मुर्विहायसा।
उत्पतन्तः खगा वाक्यमेतदाहुस्ततो नलम् ॥ ३४९ ॥
वयमक्षाः सुदुर्बुद्धे तव वासो जिहीर्षवः।
आगता न हि नः प्रीतिः सवाससि गते त्वयि ॥ ३५० ॥
पुण्यश्लोकस्तदा राजन्दमयन्तीमथाब्रवीत्।
एष पन्था विदर्भाणामसौ गच्छति कोसलान् ॥ ३५१ ॥
अतःपरं च देशोऽयं दक्षिणे दक्षिणापथः।
ततः सा बाष्पकलया वाचा दुःखेन कर्शिता ॥ ३५२ ॥
उवाच दमयन्ती तं नैषधं करुणं वचः।
न च भार्यासमं किञ्चिद्विद्यते भिषजां मतम् ॥ ३५३ ॥
औषधं सर्वदुःखेषु सत्यमेतद्ब्रवीमि ते।
यदि चायमभिप्रायस्तव ज्ञातीन्व्रजेदिति।
सहितावेव गच्छावो विदर्भान्यदि मन्यसे ॥ ३५४ ॥
नल– यथा राज्यं तव पितुस्तथा मम न संशयः।
(अ.६२) न तु तत्र गमिष्यामि विषमस्थः कथञ्चन ॥ ३५५ ॥
तावेकवस्त्रसंवीतावटमानावितस्ततः।
क्षुत्पिपासापरिश्रान्तौ सभां काञ्चिदुपेयतुः ॥ ३५६ ॥
तां सभामुपसम्प्राप्य तदा स निषधाधिपः।
दमयन्त्या सह श्रान्तः सुष्वाप धरणीतले ॥ ३५७ ॥
स तद्राज्यापहरणं सुहृत्त्यागं च सर्वशः।
वने च तं परिध्वंसं प्रेक्ष्य चिन्तामुपेयिवान् ॥ ३५८ ॥

मयि निःसंशयं दुःखमियं प्राप्स्यत्यनुव्रता।
उत्सर्गे संशयः स्यात्तु विन्देतापि सुखं क्वचित् ॥ ३५९ ॥
एवं तस्य तदा बुद्धिर्दमयन्त्यां न्यवर्तत।
कलिना दुष्टभावेन दमयन्त्या विसर्जने ॥ ३६० ॥
सोऽवस्त्रतामात्मनश्च तस्याश्चाप्येकवस्त्रताम्।
चिन्तयित्वाऽध्यगाद्राजा वस्त्रार्धस्यावकर्तनम् ॥ ३६१ ॥
परिधावन्नथ नल इतश्चेतश्च भारत।
आससाद सभोद्देशे विकोशं खड्गमुत्तमम् ॥ ३६२ ॥
तेनार्धं वाससश्छित्वा निवस्य च परन्तपः।
सुप्तामुत्सृज्य वैदर्भीं प्राद्रवद्गतचेतनाम् ॥ ३६३ ॥
(अ.६३) अपक्रान्ते नले राजन्दमयन्ती गतक्लमा।
अबुध्यत वरारोहा सन्त्रस्ता विजने वने ॥ ३६४ ॥
अपश्यमाना भर्तारं शोकदुःखसमन्विता।
प्राक्रोशदुच्चैः सन्त्रस्ता हा स्वामिन् किं जहासि माम् ॥३६५॥
हा हतास्मि विनष्टास्मि भीतास्मि विजने वने।
ततः सा तीव्रशोकार्ता प्रदीप्तेव च मन्युना ॥ ३६६ ॥
इतश्चेतश्च रुदती पर्यधावत दुःखिता।
मुहुरुत्पतते बाला मुहुः पतति विह्वला ॥ ३६७ ॥
मुहुरालीयते भीता मुहुः क्रोशति रोदिति।
अतीव शोकसन्तप्ता मुहुर्निःश्वस्य विह्वला ॥ ३६८ ॥
उवाच भैमी निःश्वस्य रुदत्यथ पतिव्रता।
यस्याभिशापाद्दुःखार्तो दुःखं विन्दति नैषधः ॥ ३६९ ॥
तस्य भूतस्य नो दुःखाद्दुःखमप्यधिकं भवेत्।
तां क्रन्दमानामत्यर्थं कुररीमिव वाशतीम् ॥ ३७० ॥
जग्राहाजगरो ग्राहो महाकायः क्षुधान्वितः।
ततः कश्चिन्मृगव्याधो विचरन् गहने वने ॥ ३७१ ॥

आक्रन्दमानां संश्रुत्य जवेनाभिससार ह ।
तां तु दृष्ट्वा तथा ग्रस्तामुरगेणायतेक्षणाम् ॥ ३७२ ॥
त्वरमाणो मृगव्याधः समभिक्रम्य वेगतः ।
मुखतः पाटयामास शस्त्रेण निशितेन च ॥ ३७३ ॥
तामर्धवस्त्रसंवीतां पीनश्रोणिपयोधराम् ।
लक्षयित्वा मृगव्याधः कामस्य वशमीयिवान् ॥ ३७४ ॥
दमयन्त्यपि तं दुष्टमुपलभ्य पतिव्रता ।
अतीतवाक्पथे काले शशापैनं रुषान्विता ॥ ३७५ ॥
यद्यहं नैषधादन्यं मनसाऽपि न चिन्तये ।
तथायं पततां क्षुद्रः परासुर्मृगजीवनः ॥ ३७६ ॥
उक्तमात्रे तु वचने तथा स मृगजीवनः ।
व्यसुः पपात मेदिन्यामग्निदग्ध इव द्रुमः ॥ ३७७ ॥
(अ.६४) सा निहत्य मृगव्याधं प्रतस्थे कमलेक्षणा ।
घनं प्रतिभयं शून्यं झिल्लिकागणनादितम् ॥ ३७८ ॥
सा ददर्श नगान्नैकान्नैकाश्च सरितस्तथा ।
नैकांश्च पर्वतान् रम्यान्नैकांश्च मृगपक्षिणः ॥ ३७९ ॥
कन्दरांश्च नितम्बांश्च नदीश्चाद्भुतदर्शनाः ।
ददर्श तान्भीमसुता पतिमन्वेषती तदा ॥ ३८० ॥
(अ.६५) गच्छन्ती सा चिराद्बाला पुरमासादयन्महत् ।
सायाह्ने चेदिराजस्य सुबाहोः सत्यदर्शिनः ॥ ३८१ ॥
अथ वस्त्रार्धसंवीता प्रविवेश पुरोत्तमम् ।
अनुजग्मुस्तत्र बाला ग्रामिपुत्राः कुतूहलात् ॥ ३८२ ॥
तां प्रासादगतापश्यद्राजमाता जनैर्वृताम् ।
सा जनं वारयित्वा तं प्रासादतलमुत्तमम् ॥ ३८३ ॥
आरोप्य विस्मिता राजन्दमयन्तीमपृच्छत ।
एवमप्यसुखाविष्टा बिभर्षि परमं वपुः ॥ ३८४ ॥

भासि विद्युदिवाभ्रेषु शंस मे कासि कस्य वा।
न हि ते मानुषं रूपं भूषणैरपि वर्जितम् ॥ ३८५ ॥
तच्छ्रुत्वा वचनं तस्या भैमी वचनमब्रवीत्।
मानुषीं मां विजानीहि भर्तारं समनुव्रताम् ॥ ३८६ ॥
सैरन्ध्रीं जातिसम्पन्नां भुजिष्यां कामवासिनीम्।
असङ्ख्येयगुणो भर्ता मां च नित्यमनुव्रतः ॥ ३८७ ॥
द्यूते स निर्जितश्चैव वनमेक उपेयिवान्।
तं मार्गमाणा भर्तारं दह्यमाना दिवानिशम् ॥ ३८८ ॥
न विन्दाम्यमरप्रख्यं प्रियं प्राणेश्वरं प्रभुम्।
तामश्रुपरिपूर्णाक्षीं विलपन्तीं तथा बहु ॥ ३८९ ॥
राजमाताऽब्रवीदार्ता भैमीमार्तस्वरां स्वयम्।
वसस्व मयि कल्याणि प्रीतिर्मे परमा त्वयि ॥ ३९० ॥
राजमातुर्वचः श्रुत्वा दमयन्ती वचोऽब्रवीत्।
समयेनोत्सहे वस्तुं त्वयि वीरप्रजायिनि ॥ ३९१ ॥
उच्छिष्टं नैव भुञ्जीयां न कुर्यां पादधावनम्।
न चाहं पुरुषानन्यान्प्रभाषेयं कथञ्चन ॥ ३९२ ॥
भर्तुरन्वेषणार्थं तु पश्येयं ब्राह्मणानहम्।
तां प्रहृष्टेन मनसा राजमातेदमब्रवीत् ॥ ३९३ ॥
सर्वमेतत्करिष्यामि दिष्ट्या ते व्रतमीदृशम्।
एवमुक्त्वा ततो भैमीं राजमाता विशाम्पते ॥ ३९४ ॥
उवाचेदं दुहितरं सुनन्दां नाम भारत।
सैरन्ध्रीमभिजानीष्व सुनन्दे देवरूपिणीम् ॥ ३९५ ॥
वयसा तुल्यतां प्राप्ता सखी तव भवत्वियम्।
एतया सह मोदस्व निरुद्विग्नमनाः सदा ॥ ३९६ ॥
(अ.६६) उत्सृज्य दमयन्तीं तु नलो राजा विशाम्पते।
ददर्श दावं दह्यन्तं महान्तं गहने वने ॥ ३९७ ॥

तत्र शुश्राव शब्दं वै मध्ये भूतस्य कस्यचित्।
अभिधाव नलेत्युच्चैः पुण्यश्लोकेति चासकृत् ॥ ३९८ ॥
मा भैरिति नलश्चोक्त्वा मध्यमग्नेः प्रविश्य तम्।
ददर्श नागराजानं शयानं कुण्डलीकृतम् ॥ ३९९ ॥
स नागः प्राञ्जलिर्भूत्वा वेपमानो नलं तदा।
उवाच मां विद्धि राजन्नागं कर्कोटकं नृप ॥ ४०० ॥
मया प्रलब्धो महर्षिर्नारद· सुमहातपाः।
तेन मन्युपरीतेन शप्तोऽस्मि मनुजाधिप ॥ ४०१ ॥
तिष्ठ त्वं स्थावर इव यावदेव नल· क्वचित्।
इतो नेता हि तत्र त्वं शापान्मोक्ष्यसि मत्कृतात् ॥ ४०२ ॥
तस्य शापान्न शक्तोऽस्मि पदाद्विचलितुं पदम्।
उपदेक्ष्यामि ते श्रेयस्त्रातुमर्हति मां भवान् ॥ ४०३ ॥
एवमुक्त्वा स नागेन्द्रो बभूवाङ्गुष्ठमात्रक ।
तं गृहीत्वा नल· प्रायाद्देशं दावविवर्जितम् ॥ ४०४ ॥
उत्स्रष्टुकामं तं नाग पुनः कर्कोटकोऽब्रवीत्।
पदानि गणयन् गच्छ स्वानि नैषध कानिचित् ॥ ४०५ ॥
तत सङ्ख्यातुमारब्धमदशद्दशमे पदे।
तस्य दष्टस्य तद्रूपं क्षिप्रमन्तरधीयत ॥ ४०६ ॥
तत कर्कोटको नाग सान्त्वयन्नलमब्रवीत्।
मया तेऽन्तर्हितं रूपं न त्वा विद्युर्जना इति ॥ ४०७ ॥
यत्कृते चासि निकृतो दु खेन महता नल।
विषेण स मदीयेन त्वयि दुःखं निवत्स्यति ॥ ४०८ ॥
गच्छ राजन्नित· सूतो बाहुकोऽहमिति ब्रुवन्।
समीपमृतुपर्णस्य स हि वैवाक्षनैपुण· ॥ ४०९ ॥
अयोध्यां नगरीं रम्यामद्य वै निषधेश्वर।
स तेऽक्षहृदयं दाता राजाश्वहृदयेन वै ॥ ४१० ॥

भविष्यसि यदाक्षज्ञः श्रेयसा योक्ष्यसे तदा।
स्वं रूपं च यदा द्रष्टुमिच्छेथास्त्वं नराधिप ॥ ४११ ॥
संस्मर्तव्यस्तदा तेऽहं वासश्चेदं निवासयेः।
इत्युक्त्वा प्रददौ तस्मै दिव्यं वासोयुगं तदा ॥ ४१२ ॥
नागराजस्ततो राजंस्तत्रैवान्तरधीयत।
(अ.६७) तस्मिन्नन्तर्हिते नागे प्रययौ नैषधो नलः ॥ ४१३ ॥
ऋतुपर्णस्य नगरं प्राविशद्दशमेऽहनि।
स राजानमुपातिष्ठद्बाहुकोऽहमिति ब्रुवन् ॥ ४१४ ॥
अश्वानां वाहने युक्तः पृथिव्यां नास्ति मत्समः।
यानि शिल्पानि लोकेऽस्मिन्यच्चैवान्यत्सुदुष्करम्।
सर्वं यतिष्ये तत्कर्तुमृतुपर्ण भरस्व माम् ॥ ४१५ ॥
ऋतुपर्ण– वस बाहुक भद्रं ते सर्वमेतत्करिष्यसि।
शीघ्रयाने सदा बुद्धिर्ध्रियते मे विशेषतः ॥ ४१६ ॥
स त्वमातिष्ठ योगं तं येन शीघ्रा हया मम।
भवेयुरश्वाध्यक्षोऽसि वेतनं ते शतंशताः ॥ ४१७ ॥
त्वामुपस्थास्यतश्चैव नित्यं वार्ष्णेयजीवलौ।
एताभ्यां रंस्यसे सार्धं वस वै मयि बाहुक ॥ ४१८ ॥
एवमुक्तो नलस्तेन न्यवसत्तत्र पूजितः।
ऋतुपर्णस्य नगरे सह वार्ष्णेयजीवलः ॥ ४१९ ॥
(अ.६८) हृतराज्ये नले भीमः सभार्ये प्रेष्यतां गते।
द्विजान्प्रस्थापयामास नलदर्शनकाङ्क्षया ॥ ४२० ॥
सन्दिदेश च तान्भीमो वसु दत्त्वा च पुष्कलम्।
मृगयध्वं नलं चैव दमयन्तीं च मे सुताम् ॥ ४२१ ॥
इत्युक्तास्ते ययुर्हृष्टा ब्राह्मणाः सर्वतो दिशम्।
ततश्चेदिपुरीं रम्यां सुदेवो नाम वै द्विजः ॥ ४२२ ॥

भविष्यसि यदाक्षज्ञः श्रेयसा योक्ष्यसे तदा।
स्वं रूपं च यदा द्रष्टुमिच्छेथास्त्वं नराधिप ॥ ४११ ॥
संस्मर्तव्यस्तदा तेऽहं वासश्चेदं निवासयेः।
इत्युक्त्वा प्रददौ तस्मै दिव्यं वासोयुगं तदा ॥ ४१२ ॥
नागराजस्ततो राजंस्तत्रैवान्तरधीयत।
(अ.६७) तस्मिन्नन्तर्हिते नागे प्रययौ नैषधो नलः ॥ ४१३ ॥
ऋतुपर्णस्य नगरं प्राविशद्दशमेऽहनि।
स राजानमुपातिष्ठद्बाहुकोऽहमिति ब्रुवन् ॥ ४१४ ॥
अश्वानां वाहने युक्तः पृथिव्यां नास्ति मत्समः।
यानि शिल्पानि लोकेऽस्मिन्यच्चैवान्यत्सुदुष्करम्।
सर्वं यतिष्ये तत्कर्तुमृतुपर्ण भरस्व माम् ॥ ४१५ ॥
ऋतुपर्ण– वस बाहुक भद्रं ते सर्वमेतत्करिष्यसि।
शीघ्रयाने सदा बुद्धिर्ध्रियते मे विशेषतः ॥ ४१६ ॥
स त्वमातिष्ठ योगं तं येन शीघ्रा हया मम।
भवेयुरश्वाध्यक्षोऽसि वेतनं ते शतंशता ॥ ४१७ ॥
त्वामुपस्थास्यतश्चैव नित्यं वार्ष्णयजीवलौ।
एताभ्यां रंस्यसे सार्धं वस वै मयि बाहुक ॥ ४१८ ॥
एवमुक्तो नलस्तेन न्यवसत्तत्र पूजितः।
ऋतुपर्णस्य नगरे सह वार्ष्णेयजीवलः ॥ ४१९ ॥
(अ.६८) हृतराज्ये नले भीमः सभार्ये प्रेष्यतां गते।
द्विजान्प्रस्थापयामास नलदर्शनकाङ्क्षया ॥ ४२० ॥
सन्दिदेश च तान्भीमो वसु दत्वा च पुष्कलम्।
मृगयध्वं नलं चैव दमयन्तीं च मे सुताम् ॥ ४२१ ॥
इत्युक्तास्ते ययुर्हृष्टा ब्राह्मणाः सर्वतो दिशम्।
ततश्चेदिपुरीं रम्यां सुदेवो नाम वै द्विजः ॥ ४२२ ॥

विचिन्वानोऽथ वैदर्भीमपश्यद्राजवेश्मनि ।
पुण्याहवाचने राज्ञः सुनन्दासहितां स्थिताम् ॥ ४२३ ॥
उपागम्य ततो भैमीं सुदेवो ब्राह्मणोऽब्रवीत् ।
अहं सुदेवो वैदर्भि भ्रातुस्ते दयितः सखा ॥ ४२४ ॥
भीमस्य वचनाद्राज्ञस्त्वामन्वेष्टुमिहागतः ।
अभिज्ञाय सुदेवं तं दमयन्ती युधिष्ठिर ॥ ४२५ ॥
पर्यपृच्छत तान्सर्वान्क्रमेण सुहृदः स्वकान् ।
रुरोद च भृशं राजन्वैदर्भी शोककर्शिता ॥ ४२६ ॥
ततो रुदन्तीं तां दृष्ट्वा सुनन्दा शोककर्शिता ।
जनित्र्याः कथयामास सैरन्ध्री रुदते भृशम् ॥ ४२७ ॥
ततः सुदेवमानाय्य राजमाता विशाम्पते ।
पप्रच्छ भार्या कस्येयं सुता वा कस्य भाविनी ॥ ४२८ ॥
कथं च नष्टा ज्ञातिभ्यो भर्तुर्वा वामलोचना ।
त्वया च विदिता विप्र कथमेवङ्गता सती ॥ ४२९ ॥

सुदेव- (अ.६९) विदर्भराजो धर्मात्मा भीमो नाम महाद्युतिः ।
सुतेयं तस्य कल्याणी दमयन्तीति विश्रुता ॥ ४३० ॥
राजा तु नैषधो नाम वीरसेनसुतो नलः ।
भार्येयं तस्य कल्याणी पुण्यश्लोकस्य धीमतः ॥ ४३१ ॥
स द्यूतेन जितो भ्रात्रा हृतराज्यो महीपतिः ।
दमयन्त्या गतः सार्धं न प्राज्ञायत कस्यचित् ॥ ४३२ ॥
ते वयं दमयन्त्यर्थे चरामः पृथिवीमिमाम् ।
सेयमासादिता बाला तव पुत्रनिवेशने ॥ ४३३ ॥
अस्या रूपेण सदृशी मानुषी न हि विद्यते ।
अस्या ह्येष भ्रुवोर्मध्ये सहजः पिप्लुरुत्तमः ॥ ४३४ ॥
अनेन वपुषा बाला पिप्लुनानेन सूचिता ।
श्रुत्वा वचनं तस्य सुदेवस्य विशाम्पते ॥ ४३५ ॥

सुनन्दा शोधयामास पिप्लुप्रच्छादन मलम् ।
पिप्लुं दृष्ट्वा सुनन्दा च राजमाता च भारत ॥ ४३६ ॥
रुदत्यौ ता परिष्वज्य मुहूर्तमिव तस्थतु• ।
उत्सृज्य बाष्प शनकै राजमातेदमब्रवीत् ॥ ४३७ ॥
भगिन्या दुहिता मेऽसि पिप्लुनानेन सूचिता ।
तां प्रहृष्टेन मनसा दमयन्ती विशाम्पते ॥ ४३८ ॥
प्रणम्य मातुर्भगिनीमिदं वचनमब्रवीत् ।
यदि चापि प्रिय किञ्चिन्मयिकर्तुमिहेच्छसि ॥ ४३९ ॥
विदर्भान्यातुमिच्छामि शीघ्र मे यानमादिश ।
प्रास्थापयद्राजमाता श्रीमतीं नरवाहिना ॥ ४४० ॥
यानेन भरतश्रेष्ठ स्वन्नपानपरिच्छदाम् ।
तत• सा न चिरादेव विदर्भानगमत्पुन ॥ ४४१ ॥
तां तु बन्धुजन सर्व प्रहृष्ट समपूजयत् ।
सर्वान्कुशलिनो दृष्ट्वा बान्धवान्दारकौ च तौ ॥ ४४२ ॥
देवता• पूजयामास ब्राह्मणाश्च यशस्विनी ।
सा व्युष्टा रजनीं तत्र पितुर्वेश्मनि भाविनी ॥ ४४३ ॥
विश्रान्ता मातरं राजन्निदं वचनमब्रवीत् ।
मां चेदिच्छसि जीवन्तीं मात सत्यं ब्रवीमि ते ॥ ४४४ ॥
नरवीरस्य चैतस्य नलस्यानयने यत ।
ततो भीम महाराजं भार्या वचनमब्रवीत् ॥ ४४५ ॥
दमयन्ती तव सुता भर्तारमनुशोचति ।
प्रयतन्तु तव प्रेष्या• पुण्यश्लोकस्य मार्गणे ॥ ४४६ ॥
तथा प्रदेशितो राजा ब्राह्मणान्वशवर्तिन ।
प्रास्थापयद्दिश• सर्वा यतध्व नलमार्गणे ॥ ४४७ ॥
अथ तानब्रवीद्वैमी सर्वराष्ट्रेष्विद वच ।
ब्रूयास्त जनससत्सु तत्र तत्र पुन• पुन• ॥ ४४८ ॥

क नु त्वं कितवच्छित्वा वस्त्रार्धं प्रस्थितो मम।
उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय ॥ ४४९ ॥
सा वै यथा त्वया दृष्टा तथास्ते त्वत्प्रतीक्षिणी।
प्रसादं कुरु वै वीर प्रतिवाक्यं वदस्व च ॥ ४५० ॥
एवमुक्तास्त्वगच्छंस्ते ब्राह्मणाः सर्वतो दिशम्।
(अ.७०) अथ दीर्घस्य कालस्य पर्णादो नाम वै द्विजः ॥ ४५१ ॥
प्रत्येत्य नगरं भैमीमिदं वचनमब्रवीत्।
नैषधं मृगयाणेन दमयन्ति मया नलम् ॥ ४५२ ॥
अयोध्यां नगरीं गत्वा भाङ्गासुरिरुपस्थितः।
श्रावितश्च मया वाक्यं त्वदीयं स महाजने ॥ ४५३ ॥
ऋतुपर्णस्य पुरुषो बाहुको नाम नामतः।
सूतस्तस्य नरेन्द्रस्य विरूपो ह्रस्वबाहुकः ॥ ४५४ ॥
स विनिःश्वस्य बहुशो रुदित्वा च पुनः पुनः।
कुशलं चैव मां पृष्ट्वा पश्चादिदमभाषत ॥ ४५५ ॥
विषमस्थेन मूढेन परिभ्रष्टसुखेन च।
यत्सा तेन परित्यक्ता तत्र न क्रोद्धुमर्हति ॥ ४५६ ॥
तस्य तद्वचनं श्रुत्वा त्वरितोऽहमिहागतः।
एतच्छ्रुत्वाश्रुपूर्णाक्षी पर्णादस्य विशाम्पते ॥ ४५७ ॥
दमयन्ती रहोऽभ्येत्य मातरं प्रत्यभाषत।
अयमर्थो न संवेद्यो भीमे मातः कदाचन ॥ ४५८ ॥
त्वत्संनिधौ नियोक्ष्येऽहं सुदेवं द्विजसत्तमम्।
ततः सुदेवमाभाष्य दमयन्ती युधिष्ठिर ॥ ४५९ ॥
अब्रवीत्संनिधौ मातुर्दुःखशोकसमन्विता।
गत्वा सुदेव नगरीमयोध्यावासिनं नृपम् ॥ ४६० ॥
ऋतुपर्णं वचो ब्रूहि सम्पतन्निव कामगः।
आस्थास्यति पुनर्भैमी दमयन्ती स्वयंवरम् ॥ ४६१ ॥

तत्र गच्छन्ति राजानो राजपुत्राश्च सर्वशः।
तया च गणितः कालः श्वोभूते स भविष्यति ॥ ४६२ ॥
यदि सम्भावनीयं ते गच्छ शीघ्रमरिन्दम।
एवं तया यथोक्तो वै गत्वा राजानमब्रवीत् ॥ ४६३ ॥
ऋतुपर्णं महाराज सुदेवो ब्राह्मणस्तदा।
(अ.७१) श्रुत्वा वचः सुदेवस्य ऋतुपर्णो नराधिपः ॥ ४६४ ॥
सान्त्वयञ्श्लक्ष्णया वाचा बाहुकं प्रत्यभाषत।
विदर्भान्यातुमिच्छामि दमयन्त्याः स्वयंवरम् ॥ ४६५ ॥
एकाह्ना हयतत्त्वज्ञ मन्यसे यदि बाहुक।
एवमुक्तस्य कौन्तेय तेन राज्ञा नलस्य ह ॥ ४६६ ॥
व्यदीर्यत मनो दुःखात्प्रदध्यौ च महामनाः।
यदि वा सत्यं वाऽसत्यं गत्वा वेत्स्यामि निश्चयम् ॥ ४६७ ॥
ऋतुपर्णस्य वै काममात्मार्थं च करोम्यहम्।
ततः सदश्वांश्चतुरः कुलशीलसमन्वितान् ॥ ४६८ ॥
योजयामास कुशलो जवयुक्तान्रथे नलः।
ततो युक्तं रथं राजा समारोहत्त्वरान्वितः ॥ ४६९ ॥
ततो नरवरः श्रीमान् नलो यातुमियेष सः।
सूतमारोप्य वार्ष्णेयं जवमास्थाय वै परम् ॥ ४७० ॥
(अ.७२) स नदीः पर्वतांश्चैव वनानि च सरांसि च।
अचिरेणातिचक्राम खेचरः खे चरन्निव ॥ ४७१ ॥
तथा प्रयाते तु रथे तदा भाङ्गासुरिर्नृपः।
उत्तरीयमधोऽपश्यद्भ्रष्टं परपुरञ्जयः ॥ ४७२ ॥
ग्रहीष्यामीति तं राजा नलमाह महामनाः।
नलस्तं प्रत्युवाचाथ दूरे भ्रष्टः पटस्तव ॥ ४७३ ॥
योजनं समतिक्रान्तो नाहर्तुं शक्यते पुनः।
एवमुक्ते नलेनाथ तदा भाङ्गासुरिर्नृपः ॥ ४७४ ॥

आससाद वने राजन्फलवन्तं बिभीतकम्।
तं दृष्ट्वा बाहुकं राजा त्वरमाणोऽभ्यभाषत ॥ ४७५ ॥
ममापि सूत पश्य त्वं सङ्ख्याने परमं बलम्।
सर्वः सर्वं न जानाति सर्वज्ञो नास्ति कश्चन ॥ ४७६ ॥
नैकत्र परिनिष्ठाऽस्ति ज्ञानस्य पुरुषे क्वचित्।
वृक्षेऽस्मिन्यानि पर्णानि फलान्यपि च बाहुक ॥ ४७७ ॥
पतितान्यपि यान्यत्र तत्रैकमधिकं शतम्।
ततो रथमवस्थाप्य राजानं बाहुकोऽब्रवीत् ॥ ४७८ ॥
सङ्ख्यास्यामि फलान्यस्य पश्यतस्ते जनाधिप।
अकाम इव तं राजा गणयस्वेत्युवाच ह ॥ ४७९ ॥
एकदेशं च शाखायाः समादिष्टं मयानघ।
सोऽवतीर्य रथात्तूर्णं शातयामास तं द्रुमम् ॥ ४८० ॥
ततः स विस्मयाविष्टो राजानमिदमब्रवीत्।
गणयित्वा यथोक्तानि तावन्त्येव फलानि तु ॥ ४८१ ॥
अत्यद्भुतमिदं राजन्दृष्टवानस्मि ते बलम्।
श्रोतुमिच्छामि तां विद्यां यथैतज्ज्ञायते नृप ॥ ४८२ ॥
मत्तोऽपि चाश्वहृदयं गृहाण पुरुषर्षभ।
ऋतुपर्णस्ततो राजा बाहुकं कार्यगौरवात् ॥ ४८३ ॥
हयज्ञानस्य लोभाच्च तं तथेत्यब्रवीद्वचः।
यथोक्तं त्वं गृहाणेदमक्षाणां हृदयं परम् ॥ ४८४ ॥
निक्षेपो मेऽश्वहृदयं त्वयि तिष्ठतु बाहुक।
एवमुक्त्वा ददौ विद्यामृतुपर्णो नलाय वै ॥ ४८५ ॥
तस्याक्षहृदयज्ञस्य शरीरान्निःसृतः कलिः।
कर्कोटकविषं तीक्ष्णं मुखात्सततमुद्वमन् ॥ ४८६ ॥
स तेन कर्शितो राजा दीर्घकालमनात्मवान्।
तं शप्तुमैच्छत्कुपितो निषधाधिपतिर्नलः ॥ ४८७ ॥

ततो भीतः कलिः क्षिप्रं प्रविवेश बिभीतकम्।
ततो गतज्वरो राजा नैषधः परवीरहा ॥ ४८८ ॥
रथमारुह्य तेजस्वी प्रययौ जवनैर्हयैः।
बिभीतकश्चाप्रशस्तः संवृत्तः कलिसंश्रयात् ॥ ४८९ ॥
(अ.७३) ततो विदर्भान्सम्प्राप्तं सायाह्ने सत्यविक्रमम्।
ऋतुपर्णं जना राज्ञे भीमाय प्रत्यवेदयन् ॥ ४९० ॥
स भीमवचनाद्राजा कुण्डिनं प्राविशत्पुरम्।
नादयन्रथघोषेण सर्वाः स विदिशो दिशः ॥ ४९१ ॥
ततस्तं रथनिर्घोषं नलाश्वास्तत्र शुश्रुवुः।
श्रुत्वा तु समहृष्यन्त पुरेव नलसन्निधौ ॥ ४९२ ॥
सोऽवतीर्य रथोपस्थादृतुपर्णो नराधिपः।
उपतस्थे महाराजं भीमं भीमपराक्रमम् ॥ ४९३ ॥
तं भीमः प्रतिजग्राह पूजया परया ततः।
नाभिजज्ञे स नृपतिर्दुहित्रर्थे समागतम् ॥ ४९४ ॥
ऋतुपर्णोऽपि राजा स धीमान्सत्यपराक्रमः।
राजानं राजपुत्रं वा न स्म पश्यति कञ्चन ॥ ४९५ ॥
नैव स्वयंवरकथां न च विप्रसमागमम्।
दमयन्त्यपि शोकार्ता दृष्ट्वा भाङ्गासुरिं नृपम् ॥ ४९६ ॥
सूतपुत्रं च वार्ष्णेयं बाहुकं च तथाविधम्।
चिन्तयामास वैदर्भी कस्यैष रथनिस्वनः ॥ ४९७ ॥
नलस्येव महानासीन्न च पश्यामि नैषधम्।
वार्ष्णेयेन भवेन्नूनं विद्या सैवोपशिक्षिता ॥ ४९८ ॥
एवं सा तर्कयित्वा तु दमयन्ती विशाम्पते।
दूतीं प्रस्थापयामास नैषधान्वेषणे शुभा ॥ ४९९ ॥

दमयन्ती– गच्छ केशिनि जानीहि क एष रथवाहकः।
(अ.७४) उपविष्टो रथोपस्थे विकृतो ह्रस्वबाहुकः।
अत्र मे महती शङ्का भवेदेष नलो नृपः ॥ ५०० ॥

(व.७५) अब्रुवाणा समीपस्था चरितान्यस्य लक्षय।
न चास्य प्रतिबन्धेन देयोऽग्निरपि केशिनि ॥ ५०१ ॥
याचते न जलं देयं सर्वथा त्वरमाणया।
एतत्सर्वं समीक्ष्य त्वं चरितं मे निवेदय ॥ ५०२ ॥
दमयन्त्यैवमुक्ता सा जगामाथ च केशिनी।
निशाम्याथ हयज्ञस्य लिङ्गानि पुनरागमत्।
सा तत्सर्वं यथावृत्तं दमयन्त्यै न्यवेदयत् ॥ ५०३ ॥

केशिनी– दृढं शुच्युपचारोऽसौ न मया मानुषः क्वचित्।
दृष्टपूर्वः श्रुतो वापि दमयन्ति तथाविधः ॥ ५०४ ॥
ह्रस्वमासाद्य सञ्चारं नासौ विनमते क्वचित्।
सङ्कटेऽप्यस्य सुमहान्विवरो जायतेऽधिक. ॥ ५०५ ॥
ऋतुपर्णस्य चार्थाय भोजनीयमनेकशः।
प्रेषितं तत्र राज्ञा तु मांसं च बहु पाशवम् ॥ ५०६ ॥
तस्य प्रक्षालनार्थाय कुम्भास्तत्रोपकल्पिताः।
ते तेनावेक्षिताः कुम्भाः पूर्णा एवाभवंस्ततः ॥ ५०७ ॥
ततः प्रक्षालनं कृत्वा समधिश्रित्य बाहुकः।
तृणमुष्टिं समादाय सवितुस्तं समादधत् ॥ ५०८ ॥
अथ प्रज्वलितस्तत्र सहसा हव्यवाहन.।
दमयन्ती तु तच्छ्रुत्वा पुण्यश्लोकस्य चेष्टितम् ॥ ५०९ ॥
मिथुनं प्रेषयामास केशिन्या सह भारत।
बाहुकस्तु समासाद्य सुतौ सुरसुतोपमौ ॥ ५१० ॥
भृशं दु खपरीतात्मा सुस्वरं प्ररुरोद ह।
उत्सृज्य सहसा पुत्रौ केशिनीमिदमब्रवीत् ॥ ५११ ॥
इदं च सदृशं भद्रे मिथुनं मम पुत्रयो.।
अतो दृष्ट्वैव सहसा बाष्पमुत्सृष्टवानहम् ॥ ५१२ ॥

बहुश. सम्पतन्तीं त्वां जनः शङ्केत दोषतः।
वयं च देशातिथयो गच्छ भद्रे यथासुखम् ॥ ५१३ ॥
(अ.७१) सर्वं विकारं दृष्ट्वा तु पुण्यश्लोकस्य धीमत.।
आगत्य केशिनी सर्वं दमयन्त्यै न्यवेदयत् ॥ ५१४ ॥
दमयन्ती ततो भूयः प्रेषयामास केशिनीम्।
मातुः सकाशं तु सार्ता नलदर्शनकाङ्क्षया ॥ ५१५ ॥
दुहितुस्तमभिप्रायमन्वजानात्स पार्थिवः।
सा वै पित्राभ्यनुज्ञाता मात्रा च भरतर्षभ ॥ ५१६ ॥
नलं प्रवेशयामास यत्र तस्या. प्रतिश्रयः।
ततः काषायवसना जटिला मलपङ्किनी ॥ ५१७ ॥
दमयन्ती महाराज बाहुकं वाक्यमब्रवीत्।
पूर्वं दृष्टस्त्वया कश्चिद्धर्मज्ञो नाम बाहुक ॥ ५१८ ॥

दमयन्ती– न मामर्हसि कल्याण दोषेण परिशङ्कितुम्।
मया हि देवानुत्सृज्य वृतस्त्वं निषधाधिप ॥ ५२६ ॥
उपायोऽयं मया दृष्टो नैषधानयने तव।
अयं चरति लोकेऽस्मिन्भूतसाक्षी सदागतिः ॥ ५२७ ॥
एष मे मुञ्चतु प्राणान्यदि पापं चराम्यहम्।
एवमुक्तस्तया वायुरन्तरिक्षादभाषत ॥ ५२८ ॥
नैषा कृतवती पापं नल सत्यं ब्रवीमि ते।
उपायो विहितश्चायं त्वदर्थमतुलोऽनया ॥ ५२९ ॥
न ह्येकाह्ना शतं गन्ता त्वामृतेऽन्यः पुमानिह।
उपपन्ना त्वया भैमी त्वं च भैम्या महीपते ॥ ५३० ॥
नात्र शङ्का त्वया कार्या सङ्गच्छ सह भार्यया।
ततस्तद्वस्त्रमजरं प्रावृणोद्वसुधाधिपः ॥ ५३१ ॥
संस्मृत्य नागराजं तं ततो लेभे स्वकं वपुः।
स चतुर्थे ततो वर्षे सङ्गम्य सह भार्यया ॥ ५३२ ॥
सर्वकामैः सुसिद्धार्थो लब्धवान्परमां मुदम्।
दमयन्त्यपि भर्तारमासाद्याप्यायिता भृशम्।
अर्धसञ्जातसस्येव तोयं प्राप्य वसुन्धरा ॥ ५३३ ॥
(अ.७७) ऋतुपर्णोऽपि शुश्राव बाहुकच्छद्मिनं नलम्।
दमयन्त्या समायुक्तं जहृषे च नराधिपः ॥ ५३४ ॥
तमानाय्य नलं राजा क्षमयामास पार्थिवम्।
यदि वाऽबुद्धिपूर्वाणि यदि बुद्ध्यापि कानिचित्।
मया कृतान्यकार्याणि तानि त्वं क्षन्तुमर्हसि ॥ ५३५ ॥
नल– न मेऽपराधं कृतवांस्त्वं स्वल्पमपि पार्थिव।
कृतेऽपि च न मे कोपः क्षन्तव्यं हि मया तव ॥ ५३६ ॥
इदं चैव हयज्ञानं त्वदीयं मयि तिष्ठति।
तदुपाकर्तुमिच्छामि मन्यसे यदि पार्थिव ॥ ५३७ ॥

एवमुक्त्वा ददौ विद्यामृतुपर्णाय नैषधः।
गृहीत्वा चाश्वहृदयं राजन्भाङ्गासुरिर्नृपः।
सूतमन्यमुपादाय ययौ स्वपुरमेव ह ॥ ५३८ ॥
(अ.७८) स मासमुष्य कौन्तेय भीममामन्त्र्य नैषधः।
पुरादल्पपरीवारो जगाम निषधान्प्रति ॥ ५३९ ॥
ततः पुष्करमासाद्य वीरसेनसुतो नलः।
उवाच दीव्याव पुनर्बहुवित्तं मयार्जितम् ॥ ५४० ॥
ततः प्रावर्तत द्यूतं पुष्करस्य नलस्य च।
जित्वा च पुष्करं राजा प्रहसन्निदमब्रवीत् ॥ ५४१ ॥
न त्वया तत्कृतं कर्म येनाहं विजितः पुरा।
कलिना तत्कृतं कर्म त्वं च मूढ न बुध्यसे ॥ ५४२ ॥
नाहं परकृतं दोषं त्वय्याधास्ये कथञ्चन।
पुष्कर त्वं हि मे भ्राता सञ्जीव शरदः शतम् ॥ ५४३ ॥
प्रस्थाप्य पुष्करं राजा वित्तवन्तमनामयम्।
प्रविवेश पुरं श्रीमानत्यर्थमुपशोभिताम्।
प्रविश्य सान्त्वयामास पौरांश्च निषधाधिपः ॥ ५४४ ॥
(अ.७९) प्रशान्ते तु पुरे हृष्टे सम्प्रवृत्ते महोत्सवे।
महत्या सेनया राजा दमयन्तीमुपानयत् ॥ ५४५ ॥
आगतायां तु वैदर्भ्यां सपुत्रायां नलो नृपः।
वर्तयामास मुदितो देवराडिव नन्दने ॥ ५४६ ॥
एकाकिनैव सुमहन्नलेन पृथिवीपते।
दुःखमासादितं घोरं प्राप्तश्चाभ्युदयः पुनः ॥ ५४७ ॥
त्वं पुनर्भ्रातृसहितः कृष्णया चैव पाण्डव।
रमसेऽस्मिन्महारण्ये धर्ममेवानुचिन्तयन् ॥ ५४८ ॥
ब्राह्मणैश्च महाभागैर्वेदवेदाङ्गपारगैः।
नित्यमन्वास्यसे राजंस्तत्र का परिदेवना ॥ ५४९ ॥

भयात्त्रास्यसि यच्च त्वमाह्वयिष्यति मां पुनः।
अक्षज्ञ इति तत्तेऽहं नाशयिष्यामि पार्थिव ॥ ५५० ॥

वेदाक्षहृदयं कृत्स्नमहं सत्यपराक्रम।
उपपद्यस्व कौन्तेय प्रसन्नोऽहं ब्रवीमि ते ॥ ५५१ ॥

ततोऽक्षहृदयं प्रादात्पाण्डवाय महात्मने।
दत्वा चाश्वशिरोऽगच्छदुपस्प्रष्टुं महातपाः ॥ ५५२ ॥

## पाण्डवानां तीर्थयात्रा

(अ.८०) गते तु पाण्डवे तात काम्यकात्सत्यविक्रमे।
(अ.९१) लोमशः समहातेजा ऋषिस्तत्राजगाम ह।
तं पाण्डवाग्रजो राजा सगणो ब्राह्मणाश्च ते ॥ ५५३ ॥

उपातिष्ठन्महाभागं दिवि शक्रमिवामराः।
समभ्यर्च्य यथान्यायं धर्मपुत्रो युधिष्ठिरः ॥ ५५४ ॥

पप्रच्छागमने हेतुमटने च प्रयोजनम्।
स पृष्टः पाण्डुपुत्रेण प्रीयमाणो महामनाः ॥ ५५५ ॥

उवाच श्लक्ष्णया वाचा हर्षयन्निव पाण्डवान्।
सञ्चरन्नस्मि कौन्तेय सर्वाल्लोकान्यदृच्छया ॥ ५५६ ॥

गतः शक्रस्य भवनं तत्रापश्यं सुरेश्वरम्।
तव च भ्रातरं वीरमपश्यं सव्यसाचिनम् ॥ ५५७ ॥

शक्रस्यार्धासनगतं तत्र मे विस्मयो महान्।
आसीत्पुरुषशार्दूल दृष्ट्वा पार्थं तथागतम् ॥ ५५८ ॥

आह मां तत्र देवेशो गच्छ पाण्डुसुतान्प्रति।
सोहमभ्यागतः क्षिप्रं दिदृक्षुस्त्वां सहानुजम् ॥ ५५९ ॥

वचनात्पुरुहूतस्य पार्थस्य च महात्मनः।
यत्त्वयोक्तो महाबाहुस्त्वार्थं भरतर्षभ ॥ ५६० ॥

तदस्त्रमाप्तं पार्थेन रुद्रादप्रतिमं विभो।
यमात्कुबेराद्वरुणादिन्द्राच्च कुरुनन्दन ॥ ५६१ ॥
अस्त्राण्यधीतवान्पार्थो दिव्यान्यमितविक्रमः।
विश्वावसोस्तु तनयाद्गीतं नृत्यं च साम च ॥ ५६२ ॥
वादित्रं च यथान्यायं प्रत्यविन्दद्यथाविधि।
यदर्थं मां सुरश्रेष्ठ इदं वचनमब्रवीत् ॥ ५६३ ॥
तच्च ते कथयिष्यामि युधिष्ठिर निबोध मे।
आगमिष्यति ते भ्राता कृतास्त्रः क्षिप्रमर्जुनः ॥ ५६४ ॥
सुरकार्यं महत्कृत्वा यदशक्यं दिवौकसैः।
यच्चापि ते भयं कर्णान्मनसिस्थमरिन्दम।
तच्चाप्यपहरिष्यामि सव्यसाचिन्युपागते ॥ ५६५ ॥
(अ.९२) धनञ्जयेन चाप्युक्तं यत्तच्छृणु युधिष्ठिर।
युधिष्ठिरं भ्रातरं मे योजयेर्धर्म्यया श्रिया ॥ ५६६ ॥
यथा तीर्थानि गच्छेत गाश्च दद्यात्स पार्थिवः।
तथा सर्वात्मना कार्यमिति मामर्जुनोऽब्रवीत् ॥ ५६७ ॥
भवता चानुगुप्तोसौ चरेत्तीर्थानि सर्वशः।
रक्षोभ्यो रक्षितव्यश्च दुर्गेषु विषमेषु च ॥ ४६८ ॥
सोहमिन्द्रस्य वचनान्नियोगादर्जुनस्य च।
रक्षमाणो भयेभ्यस्त्वां चरिष्यामि त्वया सह ॥ ५६९ ॥
द्विस्तीर्थानि मया पूर्वं दृष्टानि कुरुनन्दन।
इदं तृतीयं द्रक्ष्यामि तान्येव भवता सह ॥ ५७० ॥
गमने कृतबुद्धिं तु पाण्डवं लोमशोऽब्रवीत्।
लघुर्भव महाराज लघुः स्वैरं गमिष्यसि ॥ ५७१ ॥
युधि- भिक्षाभुजो निवर्तन्तां ब्राह्मणा यतयश्च ये।
क्षुत्तृडध्वश्रमायासशीतार्तिमसहिष्णवः ॥ ५७२ ॥

ते सर्वे विनिवर्तन्ता ये च मिष्टभुजो द्विजा ।
पक्वान्नलेह्यपानाना मासाना च विकल्पका ॥ ५७३ ॥
ये चाप्यनुरक्ता पौरा राजभक्तिपुर सरा ।
धृतराष्ट्र महाराजमभिगच्छन्तु ते च वे ॥ ५७४ ॥
ततो भूयिष्ठश पौरा गुरुभारप्रपीडिता ।
विप्राश्च यतयो मुख्या जग्मुर्नागपुर प्रति ॥ ५७५ ॥
(अ ९१) तत प्रयान्त कौन्तेय ब्राह्मणा वनवासिन ।
अभिगम्य तदा राजन्निद वचनमब्रुवन् ॥ ५७६ ॥
अस्मानपि महाराज नेतुमर्हसि पाण्डव ।
भवत्प्रसादाद्धि वय प्राप्नुयाम सुख फलम् ॥ ५७७ ॥
तीर्थाना पृथिवीपाल वनाना च विशाम्पते ।
बाढमित्यब्रवीत्सर्वास्तानृषीन्पाण्डवर्षभ ॥ ५७८ ॥
कृतस्वस्त्ययना सर्वे मुनिभिर्दिव्यमानुषै ।
प्राङ्मुखा प्रययुर्वीरा पाण्डवा जनमेजय ॥ ५७९ ॥
युधि- न वै निर्गुणमात्मान मन्ये देवर्षिसत्तम ।
(अ ९४) तथास्मि दु खसन्तप्तो यथा नान्यो महीपति ॥ ५८० ॥
पराश्च निर्गुणान्मन्ये न च धर्मगतानपि ।
ते च लोमश लोकेऽस्मिन्नृध्यन्ते केन हेतुना ॥ ५८१ ॥
लोमश- वर्धत्यधर्मेण नरस्ततो भद्राणि पश्यति ।
तत सपत्नाञ्जयति समूलस्तु विनश्यति ॥ ५८२ ॥
मया हि दृष्टा दैतेया दानवाश्च महीपते ।
वर्धमाना ह्यधर्मेण क्षयं चोपगता पुन ॥ ५८३ ॥
देवास्तु सागराश्चैव सरितश्च सरांसि च ।
अभ्यगच्छन्धर्मशीला पुण्यान्यायतनानि च ॥ ५८४ ॥
प्रनष्ट सर्वपापानि श्रेयश्च प्रतिपद्रिरे ।
तथा त्वमपि राजेन्द्र स्नात्वा तीर्थेषु सानुज ॥ ५८५ ॥

पुनर्वेत्स्यसि तां लक्ष्मीमेष पन्थाः सनातनः।
धार्तराष्ट्रास्त्वधर्मेण मोहेन च वशीरताः।
न चिराद्वै विनङ्क्ष्यन्ति दैत्या इव न संशयः ॥ ५८६ ॥

(अ.९५) ते तथा सहिता वीरा वसन्तस्तत्र तत्र ह।
कथां प्रचक्रिरे पुण्यां सदसिस्था महात्मनाम् ॥ ५८७ ॥

(अ.११८) गच्छन्स तीर्थानि महानुभावः
पुण्यानि रम्याणि ददर्श राजा।
सर्वाणि विप्रैरुपशोभितानि।
क्वचित्क्वचिद्भारत सागरस्य ॥ ५८८ ॥

ततः सहस्राणि गवां प्रदाय
क्रमेण गच्छन्परिपूर्णकामः।
द्विजैः पृथिव्यां प्रथितं महद्भि-
स्तीर्थं प्रभासं समुपाजगाम ॥ ५८९ ॥

स द्वादशाहं जलवायुभक्षः
कुर्वन्क्षपाहःसु तदाभिषेकम्।
समन्ततोऽग्नीनुपदीपयित्वा
तेपे तपो धर्मभृतां वरिष्ठः ॥ ५९० ॥

तमुग्रमास्थाय तपश्चरन्तं
शुश्राव रामश्च जनार्दनश्च।
तौ सर्ववृष्णिप्रवरौ ससैन्यौ
युधिष्ठिरं जग्मतुराजमीढम् ॥ ५९१ ॥

ततः स रामं च जनार्दनं च
कार्ष्णिं च साम्बं च शिनेश्चपौत्रम्।
अन्यांश्च वृष्णीनुपगम्य पूजां
चक्रे यथाधर्ममहीनसत्त्वः ॥ ५९२ ॥

ते चापि सर्वान्प्रतिपूज्य पार्था-
स्तैः सत्कृताः पाण्डुसुतैस्तथैव ।
युधिष्ठिरं सम्परिवार्य राज-
न्नुपाविशन्देवगणा यथेन्द्रम् ॥ ५९३ ॥
तेषां स सर्वं चरितं परेषां
वने च वासं परमप्रतीतः ।
अस्त्रार्थमिन्द्रस्य गतं च पार्थं
निवेशनं हृष्टमनाः शशंस ॥ ५९४ ॥
(अ.१२०) तेऽन्योऽन्यमामन्त्र्य तथाभिवाद्य
वृद्धान्परिष्वज्य शिशूंश्च सर्वान् ।
यदुप्रवीराः स्वगृहाणि जग्मु
स्ते चापि तीर्थान्यनुसंविचेरुः ॥ ५९५ ॥
विसृज्य कृष्णं त्वथ धर्मराजो ।
जगाम पुण्यां सरितं पयोष्णीम् ॥ ५९६ ॥
(अ.१२१) तीर्थानि रमणीयानि पुण्यान्यायतनानि च ।
यथायोगं यथाप्रीति प्रययौ भ्रातृभिः सह ।
तत्र तत्राददद्वित्तं ब्राह्मणेभ्यः सहस्रशः ॥ ५९७ ॥
लोमश– अतिक्रान्तोऽसि कौन्तेय कालशैलं च पर्वतम् ।
(अ.१३९) श्वेतं गिरिं प्रवेक्ष्यामो मन्दरं चैव पर्वतम् ॥ ५९८ ॥
यत्र माणिवरो यक्षः कुवेरश्चैव यक्षराट् ।
असङ्ख्येयास्तु कौन्तेय यक्षराक्षसकिन्नराः ॥ ५९९ ॥
नागाः सुपर्णा गन्धर्वाः कुवेरसदनं प्रति ।
तान्विगाहस्व पार्थाद्य तपसा च दमेन च ।
रक्ष्यमाणो मया राजन्भीमसेनबलेन च ॥ ६०० ॥
(अ.१४०) एवं सम्भाषमाणास्ते सुबाहुविषयं महत् ।
ददृशुर्मुदिता राजन्प्रभूतगजवाजिमत् ॥ ६०१ ॥

किराततङ्गणाकीर्णं पुलिन्दशतसङ्कुलम् ।
हिमवत्यमरैर्जुष्टं बह्वाश्चर्यसमाकुलम् ॥ ६०२ ॥
सुबाहुश्चापि तान्दृष्ट्वा पूजया प्रत्यगृह्णत ।
विषयान्ते कुलिन्दानामीश्वरः प्रीतिपूर्वकम् ॥ ६०३ ॥
ततस्ते पूजितास्तेन सर्व एव सुखोषिताः ।
प्रतस्थुर्विमले सूर्ये हिमवन्तं गिरिं प्रति ॥ ६०४ ॥
इन्द्रसेनमुखांश्चापि भृत्यान्पौरोगवांस्तथा ।
सूदांश्च पारिबर्हांश्च द्रौपद्याः सर्वशो नृप ॥ ६०५ ॥
राज्ञः कुलिन्दाधिपतेः परिदाय महारथाः ।
पद्भिरेव महावीर्या ययुः कौरवनन्दनाः ।
तस्माद्देशात्सुसंहृष्टा द्रष्टुकामा धनञ्जयम् ॥ ६०६ ॥
(अ.१४४) क्रोशमात्रं प्रयातेषु पाण्डवेषु महात्मसु ।
पद्भ्यामनुचिता गन्तुं द्रौपदी समुपाविशत् ॥ ६०७ ॥
सा श्रान्ता दुःखिता चैव वातवर्षेण तेन वै ।
आलम्बमाना सहितावूरू गजकरोपमौ ॥ ६०८ ॥
पपात सहसा भूमौ वेपन्ती कदली यथा ।
स्पृश्यमाना करैः शीतैः पाण्डवैश्च मुहुर्मुहुः ॥ ६०९ ॥
सेव्यमाना च शीतेन जलमिश्रेण वायुना ।
पाञ्चाली सुखमासाद्य लेभे चेतः शनैः शनैः ॥ ६१० ॥
उवाच च कुरुश्रेष्ठो भीमसेनमिदं वचः ।
बहवः पर्वता भीम विषमा हिमदुर्गमाः ।
तेषु कृष्णा महाबाहो कथं नु विचरिष्यति ॥ ६११ ॥
भीम- त्वां राजन्राजपुत्रीं च यमौ च पुरुषर्षभ ।
स्वयं नेष्यामि राजेन्द्र मा विषादे मनः कृथाः ॥ ६१२ ॥
हैडिम्बश्च महावीर्यो विहगो मद्बलोपमः ।
वहेदनघ सर्वान्नो वचनात्ते घटोत्कचः ॥ ६१३ ॥

अनुज्ञातो धर्मराज्ञा पुत्रं सस्मार राक्षसम्।
घटोत्कचस्तु धर्मात्मा स्मृतमात्रः पितुस्तदा ॥ ६१४ ॥
कृताञ्जलिरुपातिष्ठदभिवाद्याथ पाण्डवान्।
उवाच भीमसेनं स पितरं भीमविक्रमम्।
आज्ञापय महाबाहो सर्वं कर्तास्म्यसंशयम् ॥ ६१५ ॥

भीम– हैडिम्बेय परिश्रान्ता तव मातापराजिता।
(अ.१४५) त्वं च कामगमस्तात बलवान्वह तां खग ॥ ६१६ ॥
स्कन्धमारोप्य भद्रं ते मध्येऽस्माकं विहायसा।
गच्छ नीचिकया गत्या यथा चैनां न पीडयेः ॥ ६१७ ॥

घटो– धर्मराजं च धौम्यं च कृष्णां च यमजौ तथा।
एकोऽप्यहमलं वोढुं किमुताद्य सहायवान् ॥ ६१८ ॥
अन्ये च शतशः शूरा विहङ्गाः कामरूपिणः।
सर्वान्वो ब्राह्मणैः सार्धं वक्ष्यन्ति सहितानघ ॥ ६१९ ॥
एवमुक्त्वा ततः कृष्णामुवाह स घटोत्कचः।
पाण्डूनां मध्यगो वीरः पाण्डवानपि चापरे ॥ ६२० ॥
लोमशः सिद्धमार्गेण जगामानुपमद्युतिः।
स्वेनैव स प्रभावेण द्वितीय इव भास्करः ॥ ६२१ ॥
ब्राह्मणाश्चापि तान्सर्वान्समुपादाय राक्षसाः।
नियोगाद्राक्षसेन्द्रस्य जग्मुर्भीमपराक्रमाः ॥ ६२२ ॥
एवं सुरमणीयानि वनान्युपवनानि च।
आलोकयन्तस्ते जग्मुर्विशालां बदरीं प्रति ॥ ६२३ ॥
तामुपेत्य महात्मानः सह तैर्ब्राह्मणर्षभैः।
अवतेरुस्ततः सर्वे राक्षसस्कन्धतः शनैः ॥ ६२४ ॥
तत्रापश्यत धर्मात्मा देवदेवर्षिपूजितम्।
नरनारायणस्थानं भागीरथ्योपशोभितम् ॥ ६२५ ॥

## हनुमद्भीमसंवादः

(अ.१४६) तत्र ते पुरुषव्याघ्राः परमं शौचमास्थिताः।
षड्रात्रमवसन्वीरा धनंजयदिदृक्षवः ॥ ६२६ ॥
ततः पूर्वोत्तरे वायुः प्लवमानो यदृच्छया।
सहस्रपत्रमर्काभं दिव्यं पद्ममुपाहरत् ॥ ६२७ ॥
तदवैक्षत पाञ्चाली दिव्यगन्धं मनोरमम्।
अतीव मुदिता राजन्भीमसेनमथाब्रवीत् ॥ ६२८ ॥
यदि तेऽहं प्रिया पार्थ बहूनीमान्युपाहर।
तान्यहं नेतुमिच्छामि काम्यकं पुनराश्रमम् ॥ ६२९ ॥
अभिप्रायं तु विज्ञाय महिष्याः पुरुषर्षभः।
प्रियायाः प्रियकामः स प्रायाद्भीमो महाबलः ॥ ६३० ॥
वातं तमेवाभिमुखो यतस्तत्पुष्पमागतम्।
आजिहीर्षुर्जगामाशु स पुष्पाण्यपराण्यपि ॥ ६३१ ॥
चालयानः स्ववेगेन लताजालान्यनेकशः।
आक्रीडमानो हृष्टात्मा श्रीमान्वायुसुतो ययौ ॥ ६३२ ॥
अथापश्यन्महाबाहुर्गन्धमादनसानुषु।
सुरम्यं कदलीषण्डं बहुयोजनविस्तृतम् ॥ ६३३ ॥
उत्पाट्य कदलीस्तम्भान्बहुतालसमुच्छ्रयान्।
चिक्षेप तरसा भीमः समन्ताद्बलिनां वरः ॥ ६३४ ॥
कदलीवनमध्यस्थमथ पीने शिलातले।
ददर्श सुमहाबाहुर्वानराधिपतिं तदा ॥ ६३५ ॥
दृष्ट्वा चैनं महाबाहुरेकं तस्मिन्महावने।
सिंहनादं चकारोग्रं वज्राशनिसमं बली ॥ ६३६ ॥
हनूमांश्च महासत्त्व ईषदुन्मील्य लोचने।
दृष्ट्वा तमथ सावज्ञं लोचनैर्मधुपिङ्गलैः ॥ ६३७ ॥

स्मितेन चैनमासाद्य हनूमानिदमब्रवीत्।
ब्रूहि कस्त्वं किमर्थं वा किमिदं वनमागतः ॥ ६३८ ॥
क्व च त्वयाद्य गन्तव्यं प्रब्रूहि पुरुषर्षभ।
देवलोकस्य मार्गोऽयमगम्यो मानुषैः सदा ॥ ६३९ ॥
इमान्यमृतकल्पानि मूलानि च फलानि च।
भक्षयित्वा निवर्तस्व मा वृथा प्राप्स्यसे वधम् ॥ ६४० ॥

भीम- को भवान्किंनिमित्तं वा वानरं वपुरास्थितः।
(अ.१४७) ब्राह्मणानन्तरो वर्णः क्षत्रियस्त्वां तु पृच्छति ॥ ६४१ ॥
कौरवः सोमवंशीयः कुन्त्या गर्भेण धारितः।
पाण्डवो वायुतनयो भीमसेन इति श्रुतः ॥ ६४२ ॥

हनू- वानरोऽहं न ते मार्गं प्रदास्यामि यथेप्सितम्।
साधु गच्छ निवर्तस्व मा त्वं प्राप्स्यसि वैशसम् ॥ ६४३ ॥

भीम- वैशसं वास्तु यद्वान्यन्न त्वां पृच्छामि वानर।
प्रयच्छ मार्गमुत्तिष्ठ मा मत्तः प्राप्स्यसे व्यथाम् ॥ ६४४ ॥

हनू- नास्ति शक्तिर्ममोत्थातुं व्याधिना क्लेशितो ह्यहम्।
यद्यवश्यं प्रयातव्यं लङ्घयित्वा प्रयाहि माम् ॥ ६४५ ॥

भीम- निर्गुणः परमात्मा तु देहं व्याप्यावतिष्ठते।
तमहं ज्ञानविज्ञेयं नावमन्ये न लङ्घये ॥ ६४६ ॥

हनू- प्रसीद नास्ति मे शक्तिरुत्थातुं जरयानघ।
ममानुकम्पया त्वेतत्पुच्छमुत्सार्य गम्यताम् ॥ ६४७ ॥
एवमुक्ते हनुमता हीनवीर्यपराक्रमम्।
मनसाऽचिन्तयद्भीमः स्वबाहुबलदर्पितः ॥ ६४८ ॥
सावज्ञमथ वामेन स्मयञ्जग्राह पाणिना।
न चाशकच्चालयितुं भीमः पुच्छं महाकपेः ॥ ६४९ ॥
उच्चिक्षेप पुनर्दोर्भ्यामिन्द्रायुधमिवोच्छ्रितम्।
नोद्धर्तुमशकद्भीमो दोर्भ्यामपि महाबलः ॥ ६५० ॥

प्रणिपत्य च कौन्तेयः प्राञ्जलिर्विनयमब्रवीत् ।
प्रसीद कपिलशार्दूल दुरुक्तं क्षम्यतां मम ।
पृष्टः सन्कामया ब्रूहि कस्त्वं वानररूपधृक् ॥ ६५१ ॥

हनू- अहं केसरिणः क्षेत्रे वायुना जगदायुना ।
जातः कमलपत्राक्ष हनूमान्नाम वानरः ॥ ६५२ ॥

(अ.१४८) अहं स्वग्रीवादुत्तीर्य सागरं मकरालयम् ।
सुतां जनकराजस्य सीतां सुरसुतोपमाम् ॥ ६५३ ॥
दृष्टवान्भरतश्रेष्ठ रावणस्य निवेशने ।
अयं च मार्गो मर्त्यानामगम्यः कुरुनन्दन ॥ ६५४ ॥
ततोऽहं रुद्धवान्मार्गं तवेमं देवसेवितम् ।
धर्षयेद्वा शपेद्वापि मा कश्चिदिति भारत ॥ ६५५ ॥

(अ.१४९) एवमुक्तो महाबाहुर्भीमसेनः प्रतापवान् ।
उवाच श्लक्ष्णया वाचा हनूमन्तं कपीश्वरम् ॥ ६५६ ॥
यत्त्वेतदासील्लङ्घतः सागरं मकरालयम् ।
रूपमप्रतिमं वीर तदिच्छामि निरीक्षितुम् ॥ ६५७ ॥
एवं तुष्टो भविष्यामि श्रद्धास्यामि च ते वचः ।
एवमुक्तः स तेजस्वी प्रहस्य हरिरब्रवीत् ॥ ६५८ ॥
अन्यः कृतयुगे कालस्त्रेतायां द्वापरे परः ।
अयं प्रध्वंसनः कालो नाद्य तद्रूपमस्ति मे ॥ ६५९ ॥
बलवर्ष्मप्रभावा हि प्रहीयन्त्युद्भवन्ति च ।
तदलं बत तद्रूपं द्रष्टुं कुरुकुलोद्वह ।
युगं समनुवर्तामि कालो हि दुरतिक्रमः ॥ ६६० ॥

भीम- पूर्वरूपमदृष्ट्वा ते न यास्यामि कथञ्चन ।

(अ.१५०) एवमुक्तस्तु भीमेन स्मितं कृत्वा प्लवङ्गमः ॥ ६६१ ॥
तद्रूपं दर्शयामास यद्वै सागरलङ्घने ।
तदद्भुतं महारौद्रं विन्ध्यपर्वतसन्निभम् ॥ ६६२ ॥

दृष्ट्वा हनूमतो वर्ष्म सम्भ्रान्तः पवनात्मजः।
प्रत्युवाच ततो भीमः संप्रहृष्टतनूरुहः ॥ ६६३ ॥
संहरस्व महावीर्य स्वयमात्मानमात्मना।
न हि शक्नोमि त्वां द्रष्टुं दिवाकरमिवोदितम् ॥ ६६४ ॥
विस्मयश्चैव मे वीर सुमहान्मनसोऽद्य वै।
यद्रामस्त्वयि पार्श्वस्थे स्वयं रावणमभ्यगात् ॥ ६६५ ॥
हनू- एवमेतन्महाबाहो यथा वदसि भारत।
भीमसेन न पर्याप्तो ममासौ राक्षसाधमः ॥ ६६६ ॥
मया तु निहते तस्मिन्रावणे लोककण्टके।
कीर्तिर्नश्येद्राघवस्य तत एतदुपेक्षितम् ॥ ६६७ ॥
तेन वीरेण तं हत्वा सगणं राक्षसाधमम्।
आनीता स्वपुरं सीता कीर्तिश्चाख्यापिता नृषु ॥ ६६८ ॥
एष पन्थाः कुरुश्रेष्ठ सौगन्धिकवनाय ते।
द्रक्ष्यसे धनदोद्यानं रक्षितं यक्षराक्षसैः ॥ ६६९ ॥
(अ.१५१) ततः संहृत्य विपुलं तद्वपुः कामतः कृतम्।
भीमसेनं पुनर्दोर्भ्यां पर्यष्वजत वानरः ॥ ६७० ॥
ततः पुनरथोवाच पर्यश्रुनयनो हरिः।
गच्छ वीर स्वमावासं स्मर्तव्योऽस्मि कथान्तरे ॥ ६७१ ॥
इहस्थश्च कुरुश्रेष्ठ न निवेद्योऽस्मि कर्हिचित्।
चमूं विगाह्य शत्रूणां परशक्तिसमाकुलाम् ॥ ६७२ ॥
यदा सिंहरवं वीर करिष्यसि महाबल।
तदाहं बृंहयिष्यामि स्वरवेण रवं तव ॥ ६७३ ॥
विजयस्य ध्वजस्थश्च नादान्मोक्ष्यामि दारुणान्।
शत्रूणां ये प्राणहराः सुखं येन हनिष्यथ ॥ ६७४ ॥
एवमाभाष्य हनुमांस्तदा पाण्डवनन्दनम्।
मार्गमाख्याय भीमाय तत्रैवान्तरधीयत ॥ ६७५ ॥

## सौगन्धिकाहरणम्

(अ.१५१) गते तस्मिन्हरिवरे भीमोऽपि बलिनां वरः।
तेन मार्गेण विपुलं व्यचरद्गन्धमादनम् ॥ ६७६ ॥
परिवृत्तेऽहनि ततः प्रकीर्णहरिणे वने।
काञ्चनैर्विमलैः पद्मैर्ददर्श विपुलां नदीम् ॥ ६७७ ॥
तस्यां नद्यां महासत्त्वः सौगन्धिकवनं महत्।
अपश्यत् प्रीतिजननं बालार्कसदृशद्युति ॥ ६७८ ॥
(अ.१५३) तत्रामृतरसं शीतं लघु कुन्तीसुतः शुभम्।
ददर्श विमलं तोयं पिबंश्च बहु पाण्डव. ॥ ६७९ ॥
तच्च क्रोधवशा नाम राक्षसा राजशासनात्।
रक्षन्ति शतसाहस्राश्चित्रायुधपरिच्छदाः ॥ ६८० ॥
ते तु दृष्ट्वैव कौन्तेयमजिनै· प्रतिवासितम्।
तेजोयुक्तमपृच्छन्त कस्त्वमाख्यातुमर्हसि ॥ ६८१ ॥
मुनिवेषधरश्चैव सायुधश्चैव लक्ष्यसे।
यदर्थमभिसम्प्राप्तस्तद्राचक्ष्व महामते ॥ ६८२ ॥
भीम– पाण्डवो भीमसेनोऽहं धर्मराजादनन्तरः।
(अ.१५४) विशालां बदरीं प्राप्तो भ्रातृभि· सह राक्षसाः ॥ ६८३ ॥
अपश्यत्तत्र पाञ्चाली सौगन्धिकमनुत्तमम्।
अनिलोढमितो नूनं सा बहूनि परीप्सति ॥ ६८४ ॥
तस्या मामनवद्याङ्ग्या धर्मपत्न्याः प्रिये स्थितम्।
पुष्पाहारमिह प्राप्तं निबोधत निशाचराः ॥ ६८५ ॥
राक्षसाः– आक्रीडोऽयं कुबेरस्य दयितः पुरुषर्षभ।
नेह शक्यं मनुष्येण विहर्तुं मर्त्यधर्मणा ॥ ६८६ ॥
अन्यायेनेह य· कश्चिदवमन्य धनेश्वरम्।
विहर्तुमिच्छेद्दुर्वृत्तः स विनश्येन्न संशयः।
आमन्त्र्य यक्षराजं वै ततः पिब हरस्व च ॥ ६८७ ॥

भीमसेन– राक्षसास्तं न पश्यामि धनेश्वरमिहान्तिके।
दृष्ट्वापि च महाराजं नाहं याचितुमुत्सहे ॥ ६८८ ॥
न हि याचन्ति राजान एष धर्मः सनातनः।
इयं च नलिनी रम्या जाता पर्वतनिर्झरे ॥ ६८९ ॥
नेयं भवनमासाद्य कुबेरस्य महात्मनः।
तुल्या हि सर्वभूतानामियं वैश्रवणस्य च ॥ ६९० ॥
एवं गतेषु द्रव्येषु कः कं याचितुमर्हति।
इत्युक्त्वा राक्षसान्सर्वान्भीमसेनो ह्यमर्षणः।
व्यगाहत महातेजास्ते तं सर्वे न्यवारयन् ॥ ६९१ ॥

गृह्णीत बध्नीत विकर्ततेमं
पचाम खादाम च भीमसेनम्।
क्रुद्धा ब्रुवन्तोऽभिययुर्द्रुतं ते
शस्त्राणि चोद्यम्य विवृत्तनेत्राः ॥ ६९२ ॥
तेषां स मार्गान् विविधान्महात्मा
विहन्य शस्त्राणि च शात्रवाणाम्।
यथा प्रवीरान्निजघान भीमः
परं शतं पुष्करिणीसमीपे ॥ ६९३ ॥
ततः स पीत्वाऽमृतकल्पमम्भो
भूयो बभूवोत्तमवीर्यतेजाः।
उत्पाट्य जग्राह च सोऽम्बुजानि
सौगन्धिकान्युत्तमगन्धवन्ति ॥ ६९४ ॥

(अ.१५५) ततो वायुर्महान् शीघ्रो नीचैः शर्करकर्षणः।
प्रादुरासीत्खरस्पर्शः सङ्ग्राममभिचोदयन् ॥ ६९५
अन्ये च बहवो भीमा उत्पातास्तत्र जज्ञिरे।
तदद्भुतमभिप्रेक्ष्य धर्मपुत्रो युधिष्ठिरः ॥ ६९६ ॥

पप्रच्छ भ्रातरं भीमं भीमकर्माणमाहवे।
कच्चित्क भीमः पाञ्चालि किञ्चित्कृत्यं चिकीर्षति ॥ ६९७ ॥
कृतवानपि वा वीरः साहसं साहसप्रियः।
इमे ह्यकस्मादुत्पाता महासमरदर्शनाः।
दर्शयन्तो भयं तीव्रं प्रादुर्भूताः समन्ततः ॥ ६९८ ॥

द्रौपदी- यत्तत् सौगन्धिकं राजन्नाहृतं मातरिश्वना।
तन्मया भीमसेनस्य प्रीतयाद्योपपादितम् ॥ ६९९ ॥
अपि चोक्तो मया वीरो यदि पश्येर्बहून्यपि।
तानि सर्वाण्युपादाय शीघ्रमागम्यतामिति ॥ ७०० ॥
स तु नूनं महाबाहुः प्रियार्थं मम पाण्डवः।
प्रागुदीचीं दिशं राजंस्तान्याहर्तुमितो गतः ॥ ७०१ ॥
उक्तस्त्वेवं तया राजा यमाविदमथाब्रवीत्।
गच्छाम सहितास्तूर्णं येन यातो वृकोदरः ॥ ७०२ ॥
वहन्तु राक्षसा विप्रान् यथाश्रान्तान् यथाकृशान्।
त्वमप्यमरसङ्काश वह कृष्णां घटोत्कच ॥ ७०३ ॥
ते सर्वे त्वरिता गत्वा ददृशुः शुभकाननाम्।
पद्मसौगन्धिकवतीं नलिनीं सुमनोरमाम् ॥ ७०४ ॥
ददृशुर्निहतांश्चैव यक्षांश्च विपुलेक्षणान्।
तं च भीमं महात्मानं तस्यास्तीरे व्यवस्थितम् ॥ ७०५ ॥
तं दृष्ट्वा धर्मराजस्तु परिष्वज्य पुनः पुनः।
उवाच श्लक्ष्णया वाचा कौन्तेय किमिदं कृतम् ॥ ७०६ ॥
साहसं बत भद्रं ते देवानामथ चाप्रियम्।
पुनरेवं न कर्तव्यं मम चेदिच्छसि प्रियम्।
अनुशिष्य तु कौन्तेयं पद्मानि परिगृह्य च ॥ ७०७ ॥
तस्यामेव नलिन्यां तु विजह्रुरमरोपमाः।
विदिताश्च कुबेरस्य तत्र ते कुरुपुङ्गवाः ॥ ७०८ ॥

ऊषुर्नातिचिरं कालं रममाणाः कुरूद्वहाः।
प्रतीक्षमाणा बीभत्सुं गन्धमादनसानुषु ॥ ७०९ ॥
(अ.१५१) तस्मिन्निवसमानोऽथ धर्मराजो युधिष्ठिरः।
कृष्णया सहितान् भ्रातॄनित्युवाच सहद्विजान् ॥ ७१० ॥
इमं वैश्रवणावासं पुण्यं सिद्धनिषेवितम्।
कथं भीम गमिष्यामो गतिरन्तरधीयताम् ॥ ७११ ॥
एवं ब्रुवति राजेन्द्रे वागुवाचाशरीरिणी।
न शक्यो दुर्गमो गन्तुमितो वैश्रवणाश्रमात् ॥ ७१२ ॥
अनेनैव पथा राजन् प्रतिगच्छ यथागतम्
नरनारायणस्थानं बदरीत्यभिविश्रुतम् ॥ ७१३ ॥
तस्माद्यास्यसि कौन्तेय सिद्धचारणसेवितम्।
बहुपुष्पफलं रम्यमाश्रमं वृषपर्वणः ॥ ७१४ ॥
अतिक्रम्य च तं पार्थ त्वार्ष्टिषेणाश्रमे वसेः।
ततो द्रक्ष्यसि कौन्तेय निवेशं धनदस्य च ॥ ॥ ७१५ ॥
ततो युधिष्ठिरो राजा प्रतिजग्राह तद्वचः।
प्रत्यागम्य पुनस्तं तु नरनारायणाश्रमम् ॥ ७१६ ॥
भीमसेनादिभिः सर्वैर्भ्रातृभिः परिवारितः।
पाञ्चाल्या ब्राह्मणैश्चैव न्यवसन्त सुखं तदा ॥ ७१७ ॥

## जटासुरवधः, अर्जुनागमनं च

(अ.१५७) ततस्तान् परिविश्वस्तान् वसतस्तत्र पाण्डवान्।
पर्वतेन्द्रे द्विजैः सार्धं पार्थागमनकाङ्क्षया ॥ ७१८ ॥
जहार धर्मराजानं यमौ कृष्णां च राक्षसः।
ब्राह्मणो मन्त्रकुशलः सर्वशास्त्रविदुत्तमः ॥ ७१९ ॥
इति ब्रुवन्पाण्डवेयान् पर्युपास्ते स्म नित्यदा।
परीप्समानः पार्थानां कलापानि धनूंषि च ॥ ७२० ॥

अन्तरं सम्परिप्रेप्सुर्द्रौपद्या हरणं प्रति।
दुष्टात्मा पापबुद्धिः स नाम्ना ख्यातो जटासुरः॥ ७२१॥
पोषणं तस्य राजेन्द्र चक्रे पाण्डवनन्दनः।
बुबुधे न च तं पापं भस्मच्छन्नमिवानलम्॥ ७२२॥
स भीमसेने निष्क्रान्ते मृगयार्थमरिन्दम।
घटोत्कचं सानुचरं दृष्ट्वा विप्रद्रुतं दिशः॥ ७२३॥
लोमशप्रभृतींस्तांस्तु महर्षींश्च समाहितान्।
स्नातुं विनिर्गतान् दृष्ट्वा पुष्पार्थं च तपोधनान्॥ ७२४॥
रूपमन्यत्समास्थाय विकृतं भैरवं महत्।
गृहीत्वा सर्वशस्त्राणि द्रौपदीं परिगृह्य च॥ ७२५॥
प्रातिष्ठत स दुष्टात्मा त्रीन् गृहीत्वा च पाण्डवान्।
सहदेवस्तु यत्नेन ततोऽपक्रम्य पाण्डवः॥ ७२६॥
विक्रम्य कौशिकं खड्गं मोक्षयित्वा ग्रहं रिपोः।
आक्रन्दद्भीमसेनं वै येन यातो महाबलः॥ ७२७॥
भ्रातॄंस्तान् ह्रियतो दृष्ट्वा द्रौपदीं च महाबलः।
क्रोधमाहारयद्भीमो राक्षसं चेदमब्रवीत्॥ ७२८॥
विज्ञातोऽसि मया पूर्वं पापः शस्त्रनिरीक्षणे।
प्रियेषु रममाणं त्वां न चैवाप्रियकारिणम्॥ ७२९॥
अतिथिं ब्रह्मरूपं च कथं हन्यामनागसम्।
अपक्वस्य च कालेन वधस्तव न विद्यते॥ ७३०॥
नूनमद्यासि सम्पक्वो यथा ते मतिरीदृशी।
यं चासि प्रस्थितो देशं मनः पूर्वं गतं च ते॥ ७३१॥
न तं गन्तासि गन्तासि मार्गं बकहिडिम्बयोः।
एवमुक्तस्तु भीमेन राक्षसः कालचोदितः॥ ७३२॥
भीत उत्सृज्य तान्सर्वान् युद्धाय समुपस्थितः।
तयोरासीत्सम्प्रहारः क्रुद्धयोर्भीमरक्षसोः॥ ७३३॥

अमृष्यमाणयोः सङ्ख्ये देवदानवयोरिव।
ततः संहृत्य मुष्टिं तु पञ्चशीर्षमिवोरगम् ॥ ७३४ ॥
वेगेनाभ्यहनद्भीमो राक्षसस्य शिरोधराम्।
तस्य गात्राणि सर्वाणि चूर्णयामास पाण्डवः।
अरत्निना चाभिहन्य शिरः कायादपाहरत् ॥ ७३५ ॥
(अ.१५८) निहते राक्षसे तस्मिन् पुनर्नारायणाश्रमम्।
अभ्येत्य राजा कौन्तेयो निवासमकरोत्प्रभुः ॥ ७३६ ॥
ततो युधिष्ठिरो राजा बहून् क्लेशान्विचिन्तयन्।
सिंहव्याघ्रगजाकीर्णामुदीचीं प्रययौ दिशम् ॥ ७३७ ॥
अवेक्षमाणः कैलासं मैनाकं चैव पर्वतम्।
गन्धमादनपादांश्च श्वेतं चापि शिलोच्चयम् ॥ ७३८ ॥
उपर्युपरि शैलस्य बह्वीश्च सरितः शिवाः।
पृष्ठं हिमवतः पुण्यं ययौ सप्तदशेऽहनि ॥ ७३९ ॥
ददृशुः पाण्डवा राजन् गन्धमादनमन्तिकात्।
पृष्ठे हिमवतः पुण्ये नानाद्रुमलतावृते ॥ ७४० ॥
सलिलावर्तसञ्जातैः पुष्पितैश्च महीरुहैः।
समावृतं पुण्यतममाश्रमं वृषपर्वणः ॥ ७४१ ॥
तमुपागम्य राजर्षिं धर्मात्मानमरिन्दमाः।
पाण्डवा वृषपर्वाणमवन्दन्त गतक्लमाः ॥ ७४२ ॥
पूजिताश्चावसंस्तत्र सप्तरात्रमरिन्दमाः।
अष्टमेऽहनि सम्प्राप्ते तमृषिं लोकविश्रुतम् ॥ ७४३ ॥
आमन्त्र्य वृषपर्वाणं प्रस्थानं प्रत्यरोचयन्।
एकैकशश्च तान्विप्रान्निवेद्य वृषपर्वणि ॥ ७४४ ॥
पारिबर्हं च तं शेषं परिदाय महात्मने।
ततस्ते यज्ञपात्राणि रत्नान्याभरणानि च ॥ ७४५ ॥

न्यदधुः पाण्डवा राजन्नाश्रमे वृषपर्वणः।
अन्वशासत् स धर्मज्ञः पुत्रवद्भरतर्षभान्॥ ७४६ ॥
तेऽनुज्ञाता महात्मानः प्रययुर्दिशमुत्तराम्।
ते समासाद्य पन्थानं यथोक्तं वृषपर्वणा ॥ ७४७ ॥
अनुसस्रुर्यथोद्देशं पश्यन्तो विविधान्नगान्।
तत. किं पुरुषावासं सिद्धचारणसेवितम्॥ ७४८ ॥
ददृशुर्हृष्टरोमाण. पर्वतं गन्धमादनम्।
उपेतमथ माल्यैश्च फलवद्भिश्च पादपैः॥ ७४९ ॥
आर्ष्टिषेणस्य राजर्षेराश्रमं ददृशुस्तदा।
ततस्ते तिग्मतपसं कृशं धमनिसन्ततम्।
पारगं सर्वधर्माणामार्ष्टिषेणमुपागमन्॥ ७५० ॥
(अ.१६०) आर्ष्टिषेणाश्रमे तेषां वसतां वै महात्मनाम्।
अगच्छन् बहवो मासा. पश्यतां महदद्भुतम्॥ ७५१ ॥
(अ.१६१) तत. सम्प्राप्य शैलाग्रं वीक्ष्यमाणा महारथाः।
कुबेरं च महात्मानं यक्षरक्षोगणावृतम्॥ ७५२ ॥
ददृशुर्हृष्टरोमाण. पाण्डवाः प्रियदर्शनम्।
दृष्ट्वा भीमं धर्मसुतमब्रवीन्नरवाहनः।
निर्भयश्चापि शैलाग्रे वस त्वं भ्रातृभिः सह॥ ७५३ ॥
(अ.१६२) स्वेषु वेश्मसु रम्येषु वसतामित्रतापनाः।
कामाश्च परिहास्यन्ति यक्षा वो भरतर्षभाः॥ ७५४ ॥
शीघ्रमेव गुडाकेश. कृतास्त्रः पुनरेष्यति।
एवमुत्तमकर्माणमनुशिष्य युधिष्ठिरम्॥ ७५५ ॥
अस्तं गिरिवरश्रेष्ठं प्रययौ गुह्यकाधिपः।
पाण्डवाश्च महात्मानस्तेषु वेश्मसु ताः क्षपाः।
सुखमूषुर्गतोद्वेगाः पूजिताः सर्वराक्षसैः॥ ७५६ ॥

(अ १६४) तस्मिन्नगेन्द्रे वसता तु तेषाम्
महात्मना सद्व्रतमास्थितानाम्।
तथैव त चिन्तयता सिताश्व
मस्त्रार्थिनं वासवमभ्युपेतम् ॥ ७५७ ॥
मासोऽथ कृच्छ्रेण तदा व्यतीत
स्तस्मिन्नगे भारत भारतानाम् ॥ ७५८ ॥
उषित्वा पञ्चवर्षाणि सहस्राक्षनिवेशने।
अवाप्य दिव्यान्यस्त्राणि सर्वाणि विबुधेश्वरात् ॥ ७५९ ॥
अनुज्ञातस्तदा तेन कृत्वा चापि प्रदक्षिणम्।
आगच्छदर्जुन प्रीत प्रहृष्टो गन्धमादनम् ॥ ७६० ॥

## अर्जुनस्य स्वर्गवासवृत्तान्तः

(अ १६७) अभिवादयमान त मूर्ध्न्युपाघ्राय पाण्डव।
हर्षगद्गदया वाचा प्रहृष्टोऽर्जुनमब्रवीत् ॥ ७६१ ॥
कथमर्जुन कालोऽय स्वर्गे व्यतिगतस्तव।
यथा तुष्टो महादेवो देवराजस्तथाऽनघ ॥ ७६२ ॥
यच्चापि वज्रपाणेस्तु प्रिय कृतमरिन्दम।
एतदाख्याहि मे सर्वमखिलेन धनञ्जय ॥ ७६३ ॥
अर्जुन– विद्यामधीत्य ता राजस्त्वयोक्तामरिमर्दन।
भवता च समादिष्टस्तपसे प्रस्थितो वनम् ॥ ७६४ ॥
भृगुतुङ्गमथो गत्वा गिरिमारुह्य शैशिरम्।
तपोऽतप्य महाराज मास मूलफलाशन ॥ ७६५ ॥
द्वितीयश्चापि मे मासो जलं भक्षयतो गत ।
निराहारस्तृतीयेऽथ मासे पाण्डवनन्दन ॥ ७६६ ॥
ऊर्ध्वबाहुश्चतुर्थं तु मासमस्मि स्थितस्तदा।
पञ्चमे त्वथ सम्प्राप्ते प्रथमे दिवसे गते ॥ ७६७ ॥

वराहसंस्थितं भूतं मत्समीपं समागमत्।
अनु तस्यापरं भूतं महत्कैरातसंस्थितम् ॥ ७६८ ॥
धनुर्बाणासिमत् प्राप्तं स्त्रीगणानुगतं तदा।
ततोऽहं धनुरादाय तथाऽक्षय्ये महेषुधी ॥ ७६९ ॥
अताडयं शरेणाथ तद्भूतं लोमहर्षणम्।
युगपत्तं किरातस्तु विकृष्य बलवद्धनुः ॥ ७७० ॥
अभ्याजघ्ने दृढतरं कम्पयन्निव मे मनः।
स तु मामब्रवीद्राजन् मम पूर्वपरिग्रहः ॥ ७७१ ॥
मृगयाधर्ममुत्सृज्य किमर्थं ताडितस्त्वया।
एष ते निशितैर्बाणैर्दर्पं हन्मि स्थिरो भव ॥ ७७२ ॥
ततो गिरिमिवात्यर्थमावृणोन्मां महाशरैः।
तं चाहं शरवर्षेण महता समवाकिरम् ॥ ७७३ ॥
यदाभिभवितुं बाणैर्न च शक्नोमि तं रणे।
अस्त्रपूगेन महता रणे भूतमवाकिरम् ॥ ७७४ ॥
जग्रास प्रसभं तानि सर्वाण्यस्त्राणि मे नृप।
हतेष्वस्त्रेषु सर्वेषु भक्षितेष्वायुधेषु च ॥ ७७५ ॥
मम तस्य च भूतस्य बाहुयुद्धमवर्तत।
व्यायामं मुष्टिभिः कृत्वा तलैरपि समागतैः ॥ ७७६ ॥
अपारयंश्च तद्भूतं निश्चेष्टमगमं महीम्।
ततः प्रहस्य तद्भूतं तत्रैवान्तरधीयत ॥ ७७७ ॥
अदृश्यत ततः साक्षाद्भगवान् गोवृषध्वजः।
उमासहायो व्यालधृग्बहुरूपः पिनाकधृक् ॥ ७७८ ॥
स मामभ्येत्य समरे तथैवाभिमुखं स्थितम्।
शूलपाणिरथोवाच तुष्टोऽस्मीति परन्तप ॥ ७७९ ॥
ततस्तद्धनुरादाय तूणी चाक्षय्यसायकौ।
प्रादान्ममैव भगवान्वरयस्वेति चाब्रवीत् ॥ ७८० ॥

ततः प्राञ्जलिरेवाहमत्रेषु गतमानसः।
प्रणम्य मनसा शर्वं ततो वचनमाददे ॥ ७८१ ॥
भगवान्मे प्रसन्नश्चेदीप्सितोऽयं वरो मम।
अस्त्राणीच्छाम्यहं ज्ञातुं यानि देवेषु कानिचित् ॥ ७८२ ॥
ददानीत्येव भगवानब्रवीत् त्र्यंबकश्च माम्।
प्रददौ च मम प्रीतः सोऽस्त्रं पाशुपतं महत् ॥ ७८३ ॥
मूर्तिमन्मे स्थितं पार्श्वे प्रसन्ने गोवृषध्वजे।
अनुज्ञातस्त्वहं तेन तत्रैव समुपाविशम्।
प्रेक्षतश्चैव मे देवस्तत्रैवान्तरधीयत ॥ ७८४ ॥

(अ.१६८) ततस्तामवसं प्रीतो रजनीं तत्र भारत।
अथापराह्णे तस्याह्नः प्रावात्पुण्यः समीरणः ॥ ७८५ ॥
पुनर्नवमिमं लोकं कुर्वन्निव सपत्नहन्।
ततो मरुत्वान् हरिभिर्युक्तैर्वाहैः स्वलङ्कृतैः ॥ ७८६ ॥
शचीसहायस्तत्राऽयात् सह सर्वैस्तदाऽमरैः।
एतस्मिन्नेव काले तु कुबेरो नरवाहनः ॥ ७८७ ॥
दर्शयामास मां राजँल्लक्ष्म्या परमया युतः।
दक्षिणस्यां दिशि यमं प्रत्यपश्यं व्यवस्थितम् ॥ ७८८ ॥
वरुणं देवराजं च यथास्थानमवस्थितम्।
ते मामूचुर्महाराज सान्त्वयित्वा नरर्षभ ॥ ७८९ ॥
सुरकार्यार्थसिद्ध्यर्थं दृष्टवानसि शङ्करम्।
अस्मत्तोऽपि गृहाण त्वमस्त्राणीति समन्ततः ॥ ७९० ॥
ततोऽहं प्रयतो भूत्वा प्रणिपत्य सुरर्षभान्।
प्रत्यगृह्णं तदाऽस्त्राणि महान्ति विधिवद्विभो ॥ ७९१ ॥
अथ देवा ययुः सर्वे यथागतमरिन्दम।
मघवानपि देवेशो रथमारुह्य सुप्रभम् ॥ ७९२ ॥

उवाच भगवान्स्वर्गं गन्तव्यं फाल्गुन त्वया।
शिक्ष मे भवनं गत्वा सर्वाण्यस्त्राणि भारत ॥ ७९३ ॥
एवमुक्त्वा तु मां शक्रस्तत्रैवान्तरधीयत।
अथापश्यं हरियुजं रथमैन्द्रमुपस्थितम् ॥ ७९४ ॥
प्रदक्षिणमुपावृत्य समारोहं रथोत्तमम्।
स रथो हरिभिर्युक्तो ह्यूर्ध्वमाचक्रमे ततः ॥ ७९५ ॥
ततः शक्रस्य भवनमपश्यममरावतीम्।
प्रविश्य तां पुरीं दिव्यां देवगन्धर्वपूजिताम् ॥ ७९६ ॥
देवराजं सहस्राक्षमुपातिष्ठं कृताञ्जलिः।
ददावर्धासनं प्रीतः शक्रो मे ददतां वरः ॥ ७९७ ॥
तत्राहं देवगन्धर्वैः सहितो भूरिदक्षिणैः।
अस्त्रार्थमवसं स्वर्गे शिक्षाणोऽस्त्राणि भारत ॥ ७९८ ॥
विश्वावसोश्च वै पुत्रश्चित्रसेनोऽभवन्सखा।
स च गान्धर्वमखिलं ग्राहयामास मां नृप ॥ ७९९ ॥
तत्सर्वमनवशाय तथ्यं विज्ञाय भारत।
अत्यर्थं प्रतिगृह्याहमस्त्रेष्वेव व्यवस्थितः ॥ ८०० ॥
ततोऽतुष्यत्सहस्राक्षस्तेन कामेन मे विभुः।
एवं मे वसतो राजन्नेष कालोऽत्यगाद्दिवि ॥ ८०१ ॥
कृतास्त्रमतिविश्वस्तमथ मां हरिवाहनः।
संस्पृश्य मूर्ध्नि पाणिभ्यामिदं वचनमब्रवीत् ॥ ८०२ ॥
प्रयोगमुपसंहारमावृत्तिं च धनञ्जय।
प्रायश्चित्तं च वेत्थ त्वं प्रतीघातं च सर्वशः ॥ ८०३ ॥

तांस्तत्र जहि कौन्तेय गुर्वर्थस्ते भविष्यति।
ततो मातलिसंयुक्तं मयूरसमरोमभिः ॥ ८०६ ॥
हयैरुपेतं प्रादान्मे रथं दिव्यं महाप्रभम्।
बबन्ध चैव मे मूर्ध्नि किरीटमिदमुत्तमम् ॥ ८०७ ॥
स्वरूपसदृशं चैव प्रादादङ्गविभूषणम्।
अभेद्यं कवचं चेदं स्पर्शरूपवदुत्तमम् ॥ ८०८ ॥
अजरां ज्यामिमां चापि गाण्डीवे समयोजयत्।
ततः प्रायामहं तेन स्यन्दनेन विराजता ॥ ८०९ ॥
(अ.१६९) ततोऽहं स्तूयमानस्तु तत्र तत्र महर्षिभिः।
अपश्यमुदधिं भीममपां पतिमथाव्ययम् ॥ ८१० ॥
ततः शङ्खमुपादाय देवदत्तं महास्वनम्।
परमां मुदमाश्रित्य प्राधमं तं शनैरहम् ॥ ८११ ॥
(अ.१७०) ततो निवातकवचाः सर्वे वेगेन भारत।
अभ्यद्रवन्मां सहिताः प्रगृहीतायुधा रणे ॥ ८१२ ॥
आच्छाद्य रथपन्थानमुत्क्रोशन्तो महारथाः।
आवृत्य सर्वतस्ते मां शरवर्षैरवाकिरन् ॥ ८१३ ॥
तानहं विविधैर्बाणैर्वेगवद्भिरजिह्मगैः।
गाण्डीवमुक्तैरभ्यघ्नमेकैकं दशभिर्मृधे ॥ ८१४ ॥
महार्णवैर्वध्यमानास्ते समुद्विग्नाः स्म दानवाः।
ततो निवातकवचा मामयुध्यन्त मायया ॥ ८१५ ॥
(अ.१७२) अदृश्या ह्यत्यवर्तन्त विसृजन्तः शिलोच्चयान्।
पर्वतैरुपचीयद्भिः पतमानैस्तथापरैः ॥ ८१६ ॥
स देशो यत्र वर्ताम गुहेव समपद्यत।
पर्वतैश्छाद्यमानोऽहं निगृहीतैश्च वाजिभिः ॥ ८१७ ॥
अगच्छं परमामार्तिं मातलिस्तदलक्षयत्।
लक्षयित्वा च मां भीतमिदं वचनमब्रवीत् ॥ ८१८ ॥

अर्जुनार्जुन मा भैस्त्वं वज्रमस्त्रमुदीरय ।
ततोऽहं तस्य तद्वाक्यं श्रुत्वा वज्रमुदीरयम् ॥ ८१९ ॥
ते वज्रवेगनिहता दानवाः पर्वतोपमाः ।
इतरेतरमाश्लिष्य न्यपतन् पृथिवीतले ॥ ८२० ॥
ततो मातलिना सार्धमहं तत्पुरमभ्ययाम् ।
तदद्भुताकारमहं दृष्ट्वा नगरमुत्तमम् ॥ ८२१ ॥
विशिष्टं देवनगरादपृच्छं मातलिं ततः ।
इदमेवंविधं कस्माद्देवा नावासयन्त्युत ।
पुरन्दरपुराद्धीदं विशिष्टमिति लक्षये ॥ ८२२ ॥
मातलिः– आसीदिदं पुरा पार्थ देवराजस्य नः पुरम् ।
ततो निवातकवचैरितः प्रच्याविताः सुराः ॥ ८२३ ॥
तपस्तप्त्वा महत्तीव्रं प्रसाद्य च पितामहम् ।
इदं वृतं निवासाय देवेभ्यश्चाभयं युधि ॥ ८२४ ॥
तत एषां वधार्थाय शक्रोऽस्त्राणि ददौ तव ।
न हि शक्या सुरैर्हन्तु य एते निहतास्त्वया ॥ ८२५ ॥
ततः प्रशाम्य नगरं दानवांश्च निहत्य तान् ।
पुनर्मातलिना सार्धमगच्छं देवसद्म तत् ॥ ८२६ ॥
(अ १७३) निवर्तमानेन मया महद्दृष्टं ततोऽपरम् ।
पुरं कामचरं दिव्यं पावकार्कसमप्रभम् ॥ ८२७ ॥
तदहं प्रेक्ष्य दैत्यानां पुरमद्भुतदर्शनम् ।
अपृच्छं मातलिं राजन्किमिदं वर्ततेऽद्भुतम् ॥ ८२८ ॥
मातलिः– पुलोमा नाम दैतेयी कालका च महासुरी ।
दिव्यं वर्षसहस्रं ते चेरतुः परमं तपः ॥ ८२९ ॥
तपसोऽन्ते ततस्ताभ्यां स्वयम्भूरददद्वरम् ।
अगृह्णीतां वरं ते तु सुतानामल्पदुःखताम् ॥ ८३० ॥

अवध्यता च राजेन्द्र सुरराक्षसपन्नगैः ।
पुरं सुरमणीयं च खचरं सुमहाप्रभम् ॥ ८३१ ॥
तदेतत् खपुरं दिव्यं चरत्यमरवर्जितम् ।
हिरण्यपुरमित्येव ख्यायते नगरं महत् ॥ ८३२ ॥
रक्षितं कालकेयैश्च पौलोमैश्च महासुरैः ।
मानुषान्मृत्युरेतेषां निर्दिष्टो ब्रह्मणा पुरा ॥ ८३३ ॥
एतानपि रणे पार्थ कालकञ्जान्दुरासदान् ।
वज्रास्त्रेण नयस्वाशु विनाशं सुमहाबलान् ॥ ८३४ ॥
उवाह मां ततः शीघ्रं हिरण्यपुरमन्तिकात् ।
रथेन तेन दिव्येन हरियुक्तेन मातलिः ॥ ८३५ ॥
ततो नालीकनाराचैर्भल्लैः शक्त्यृष्टितोमरैः ।
प्रत्यघ्नन् दानवेन्द्रा मां क्रुद्धास्तीव्रपराक्रमाः ॥ ८३६ ॥
तदहं शरवर्षेण महता प्रत्यवारयम् ।
शस्त्रवर्षं महद्राजन् विद्याबलमुपाश्रितः ॥ ८३७ ॥
ते वध्यमाना दैतेयाः पुरमास्थाय तत्पुनः ।
खमुत्पेतुः सनगरा मायामास्थाय दानवीम् ॥ ८३८ ॥
ततोऽहं शरजालेन दिव्यास्त्रनुदितेन च ।
व्यगृह्णं सह दैतेयैस्तत्पुरं पुरुषर्षभ ॥ ८३९ ॥
विक्षतं चायसैर्बाणैर्मत्प्रयुक्तैरजिह्मगैः ।
महीमभ्यपतद्राजन् प्रभग्नं पुरमासुरम् ॥ ८४० ॥
ततोऽहमानुपूर्व्येण दिव्यान्यस्त्राण्ययोजयम् ।
अद्रिसारमयैश्चान्यैर्नागैरपि निरर्हणैः ॥ ८४१ ॥
न्यहनं दानवान्सर्वान् मुहूर्तेनैव भारत ।
विध्वस्ते खपुरे तस्मिन्दानवेषु हतेषु च ॥ ८४२ ॥
मां तु संहृष्टमनसं क्षिप्रं मातलिरानयत् ।
देवराजस्य भवनं कृतकर्माणमाद्रवात् ॥ ८४३ ॥

मम कर्म च देवेन्द्रं मातलिर्विस्तरेण तत्।
सर्वं विश्रावयामास यथाभूतं महाद्युते ॥ ८४४ ॥
ततो मां देवराजो वै समाश्वास्य पुनः पुनः।
अब्रवीद्विबुधैः सार्धमिदं स मधुरं वचः ॥ ८४५ ॥
अतिदेवासुरं कर्म कृतमेव त्वया रणे ।
गुर्वर्थश्च कृतः पार्थ महाशत्रून् घ्नता मम ॥ ८४६ ॥
(अ.१७४) ततो मामतिविश्वस्तं संरूढशरविक्षतम्।
देवराजो विगृह्येदं काले वचनमब्रवीत् ॥ ८४७ ॥
समयोऽर्जुन गन्तुं ते भ्रातरो हि स्मरन्ति ते।
एवमिन्द्रस्य भवने पञ्च वर्षाणि भारत ॥ ८४८ ॥
उषितानि मया राजन् स्मरता द्यूतजं कलिम्।
ततो भवन्तमद्राक्षं भ्रातृभिः परिवारितम् ॥ ८४९ ॥
गन्धमादनपादस्य पर्वतस्यास्य मूर्धनि ।
एवमागमनं तत्र कथयित्वा धनञ्जयः।
भ्रातृभिः सहितः सर्वं रजनीं तामुवास ह ॥ ८५० ॥
(अ.१७५) तस्यां रात्र्यां व्यतीतायां धर्मराजो युधिष्ठिरः।
उत्थायावश्यकर्माणि कृतवान् भ्रातृभिः सह ॥ ८५१ ॥
ततः सञ्चोदयामास सोऽर्जुनं मातृनन्दनम्।
दर्शयास्त्राणि कौन्तेय यैर्जिता दानवास्त्वया ॥ ८५२ ॥
ततो धनञ्जयो राजन् देवैर्दत्तानि पाण्डवः।
अस्त्राणि तानि दिव्यानि दर्शयामास भारत ॥ ८५३ ॥

## पाण्डवानां द्वैतवनागमनम्, अजगरपाशाद्भीममोचनम्

(अ.१७६) समेत्य पार्थेन यथैकरात्र-
मूषुः समास्तत्र तदा चतस्रः।
पूर्वाश्च षट् ता दश पाण्डवानां
शिवा बभूवुर्वसतां वनेषु ॥ ८५४ ॥

ततो महात्मा स विशुद्धबुद्धिः
सम्प्रार्थयामास नगेन्द्रवर्यम्।
शैलेन्द्र भूयस्तपसे जितात्मा
द्रष्टा तवास्मीति मतिं चकार ॥ ८५५ ॥
वृतश्च सर्वैरनुजैर्द्विजैश्च
तेनैव मार्गेण पतिः कुरूणाम्।
उवाह चैतान् गणशस्तथैव
घटोत्कचः पर्वतनिर्झरेषु ॥ ८५६ ॥
तान् प्रस्थितान् प्रीतमना महर्षिः
पितेव पुत्राननुशिष्य सर्वान्।
स लोमशः प्रीतमना जगाम
दिवौकसां पुण्यतमं निवासम् ॥ ८५७ ॥
तेनार्ष्टिषेणेन तथानुशिष्टा-
स्तीर्थानि रम्याणि तपोवनानि।
महान्ति चान्यानि सरांसि पार्थाः
सम्पश्यमानाः प्रययुर्नराग्र्याः ॥ ८५८ ॥
(अ.१७७) समेत्य राज्ञा वृषपर्वणा ते
प्रत्यर्चितास्तेन च वीतमोहाः।
शशंसिरे विस्तरशः प्रवासं
गिरौ यथावद्वृषपर्वणस्ते ॥ ८५९ ॥
सुखोषितास्तस्य त एकरात्रं
पुण्याश्रमे देवमहर्षिजुष्टे।
अभ्याययुस्ते बदरीं विशालां
सुखेन वीराः पुनरेव वासम् ॥ ८६० ॥
ततः क्रमेणोपययुर्नृवीरा
यथागतेनैव पथा समग्राः।

विहृत्य मासं सुखिनो बदर्यां
किरातराज्ञो विषयं सुबाहोः ॥ ८६१ ॥
सुखोषितास्तत्र त एकरात्रं
सूतान् समादाय रथांश्च सर्वान्।
घटोत्कचं सानुचरं विसृज्य
ततोऽभ्ययुर्यामुनमद्रिराजम् ॥ ८६२ ॥
तस्मिन् गिरौ प्रस्रवणोपपन्न-
हिमोत्तरीयारुणपाण्डुसानौ।
विशाखयूपं समुपेत्य चक्रु-
स्तदा निवासं पुरुषप्रवीराः ॥ ८६३ ॥
वराहनानामृगपक्षिजुष्टं
महावनं चैत्ररथप्रकाशम्।
शिवेन पार्था मृगयाप्रधानाः
संवत्सरं तत्र वने विजह्रुः ॥ ८६४ ॥
तत्राससादातिबलं भुजङ्गं
क्षुधार्दितं मृत्युमिवोग्ररूपम्।
वृकोदरः पर्वतकन्दरायां
विषादमोहव्यथितान्तरात्मा ॥ ८६५ ॥

जनमेजय– कथं नागायुतप्राणो भीमो भीमपराक्रमः।
(अ.१७८) भयमाहारयत्तीव्रं तस्मादजगरान्मुने ॥ ८६८ ॥
वैशम्पायन– वहाश्चर्ये वने तेषां वसतामुग्रधन्विनाम्।
प्राप्तानामाश्रमाद्राजन् राजर्षेवृषपर्वणः ॥ ८६९ ॥
यदृच्छया धनुष्पाणिर्बद्धखड्गो वृकोदरः।
ददर्श तद्वनं रम्यं देवगन्धर्वसेवितम् ॥ ८७० ॥
मृगयां परिधावन्स समेषु मरुधन्वसु।
विध्यन् मृगान् शरैः शुद्धैश्चचार स महाबलः ॥ ८७१ ॥
स ददर्श महाकाय भुजङ्ग लोमहर्षणम्।
गिरिदुर्गे समापन्नं कायेनावृत्य कन्दरम् ॥ ८७२ ॥
स भीमं सहसाऽभ्येत्य पृदाकुः कुपितो भृशम्।
जग्राहाजगरो ग्राहो भुजयोरुभयोर्बलात् ॥ ८७३ ॥
नागायुतसमप्राणः सिंहस्कन्धो महाभुजः।
न चैनमशकद्वीरः कथञ्चित् प्रतिबाधितुम् ॥ ८७४ ॥
(अ.१७९) युधिष्ठिरस्तु कौन्तेयो बभूवास्वस्थचेतनः।
अनिष्टदर्शनान् घोरानुत्पातान् परिचिन्तयन् ॥ ८७५ ॥
द्रौपदीं परिपप्रच्छ क्व भीम इति भारत।
शशंस तस्मै पाञ्चाली चिरयातं वृकोदरम् ॥ ८७६ ॥
स प्रतस्थे महाबाहुर्धौम्येन सहितो नृपः।
स प्राचीं दिशमास्थाय मृगेन्द्राणां शतानि च ॥ ८७७ ॥
पतितानि वने दृष्ट्वा मार्गं तस्याविशन्नृपः।
स गत्वा तैस्तदा चिह्नैर्ददर्श गिरिगह्वरे।
गृहीतं भुजगेन्द्रेण निश्चेष्टमनुजं तदा ॥ ८७८ ॥
युधि– मुच्यतामयमायुष्मन् भ्राता मेऽमितविक्रमः।
(अ.१८०) वयमाहारमन्यं ते दास्यामः क्षुन्निवारणम् ॥ ८७९ ॥

सर्प– नहुषो नाम राजाऽहमास पूर्वस्तवाऽनघ।
प्रथित पञ्चम सोमादायो• पुत्रो नराधिप ॥ ८८० ॥
क्रतुभिस्तपसा चैव स्वाध्यायेन दमेन च।
त्रैलोक्यैश्वर्यमव्यग्र प्राप्तोऽहं विक्रमेण च ॥ ८८१ ॥
ऐश्वर्यमदमत्तोऽहमवमन्य ततो द्विजान्।
इमामगस्त्येन दशामानीत पृथिवीपते ॥ ८८२ ॥
प्रश्नानुच्चारितानद्य व्याहरिष्यसि चेन्मम।
अथ पश्चाद्विमोक्ष्यामि भ्रातरं ते वृकोदरम् ॥ ८८३ ॥

युधि– ब्रूहि सर्प यथाकाम प्रतिवक्ष्यामि ते वच•।
अपि चेच्छक्नुया प्रीतिमाहर्तुं ते भुजङ्गम ॥ ८८४ ॥

सर्प– ब्राह्मण को भवेद्राजन् वेद्यं किं च युधिष्ठिर।
ब्रवीह्यतिमतिं त्वा हि वाक्यैरनुमिमीमहे ॥ ८८५ ॥

युधि– सत्य दान क्षमा शीलमानृशंस्यं तपो घृणा।
दृश्यन्ते यत्र नागेन्द्र स ब्राह्मण इति स्मृत ।
वेद्यं सर्प पर ब्रह्म निर्दु खमसुखं च यत् ॥ ८८६ ॥

सर्प– चातुर्वर्ण्यं प्रमाण च सत्यं च ब्रह्म चैव हि।
शूद्रेष्वपि च सत्य च दानमक्रोध एव च ॥ ८८७ ॥

युधि– यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मण स्मृत ।
यत्रैतन्न भवेत्सर्प त शूद्रमिति निर्दिशेत् ॥ ८८८ ॥

सर्प– श्रुतं विदितवेद्यस्य तव वाक्य युधिष्ठिर।
भक्षयेयमहं कस्माद्भ्रातरं ते वृकोदरम् ॥ ८८९ ॥

युधि– सर्वज्ञं त्वा कथ मोह आविशत् स्वर्गवासिनम्।
एवमद्भुतकर्माणमिति मे संशयो महान् ॥ ८९० ॥

सर्प– अहं हि दिवि दिव्येन विमानेन चरन् पुरा।
अभिमानेन मत्त सन् कञ्चिन्नान्यमचिन्तयम् ॥ ८९१ ॥

चक्षुषा यं प्रपश्यामि प्राणिनं पृथिवीपते ।
तस्य तेजो हराम्याशु तद्धि दृष्टेर्बलं मम ॥ ८९२ ॥
ब्रह्मर्षीणां सहस्रं हि उवाह शिबिकां मम ।
स मामपनयो राजन् भ्रंशयामास वै श्रियः ॥ ८९३ ॥
तत्र ह्यगस्त्यः पादेन वहन् स्पृष्टो मया मुनिः ।
अगस्त्येन ततोऽस्म्युक्तो ध्वंस सर्पेति वै रुषा ॥ ८९४ ॥
ततस्तस्माद्विमानाग्र्यात् प्रच्युतश्च्युतलक्षणः ।
प्रपतन् बुबुधेऽऽत्मानं व्यालीभूतमधोमुखम् ॥ ८९५ ॥
आयाचन्तमहं विप्रं शापस्यान्तो भवेदिति ।
ततः स मामुवाचेदं प्रपतन्तं कृपान्वितः ॥ ८९६ ॥
युधिष्ठिरो धर्मराजः शापात्त्वां मोक्षयिष्यति ।
अरिष्ट एव ते भ्राता भीमसेनो महाबलः ॥ ८९७ ॥
स्वस्ति तेऽस्तु महाराज गमिष्यामि दिवं पुनः ।
इत्युक्त्वाजगरं देहं मुक्त्वा स नहुषो नृपः ॥ ८९८ ॥
दिव्यं वपुः समास्थाय गतस्त्रिदिवमेव ह ।
युधिष्ठिरोऽपि धर्मात्मा भ्रात्रा भीमेन सङ्गतः ।
धौम्येन सहितः श्रीमानाश्रमं पुनरागमत् ॥ ८९९ ॥

## घोषयात्रा, दुर्योधनस्य प्रायोपवेशनम्

(अ.२३६) ततः कदाचित् कुशलः कथासु
विप्रोऽभ्यगच्छद्भुवि कौरवेयान् ।
अथोपविष्टः प्रतिसत्कृतश्च
वृद्धेन राज्ञा कुरुसत्तमेन ॥ ९०० ॥
प्रचोदितः सङ्कथयाम्बभूव
धर्मानिलेन्द्रप्रभवान् यमौ च ।

कृशांश्च वातातपकर्शिताङ्गान्
दुःखस्य चोग्रस्य मुखे प्रपन्नान्॥ ९०१ ॥
तां चाप्यनाथामिव वीरनाथां
कृष्णां परिक्लेशगुणेन युक्ताम्।
ततः कथास्तस्य निशम्य राजा
प्रोवाच दैन्याभिहतान्तरात्मा ॥ ९०२ ॥
अजातशत्रौ तु जिते निकृत्या
दुःशासनो यत्परुषाण्यवोचत्।
तानि प्रविष्टानि वृकोदराङ्ग
दहन्ति कक्षाग्निरिवेन्धनानि ॥ ९०३ ॥
गाण्डीवधन्वा च वृकोदरश्च
संरम्भिणावन्तककालकल्पौ।
न शेपयेतां युधि शत्रुसेनां
शरान् किरन्तावशनिप्रकाशान् ॥ ९०४ ॥
दुर्योधनः शकुनिः सूतपुत्रो
दुःशासनश्चापि सुमन्दचेताः।
मधु प्रपश्यन्ति न तु प्रपातं
यद्द्यूतमालम्ब्य हरन्ति राज्यम् ॥ ९०५ ॥
धनुर्ग्राहश्चार्जुनः सव्यसाची
धनुश्च तद्गाण्डिवं भीमवेगम्।
अस्त्राणि दिव्यानि च तानि तस्य
त्रयस्य तेजः प्रसहेत कोऽत्र ॥ ९०६ ॥
(अ.२३७) धृतराष्ट्रस्य तद्वाक्यं निशम्य शकुनिस्तदा।
दुर्योधनमिदं काले कर्णेन सहितोऽब्रवीत् ॥ ९०७ ॥
श्रूयते हि महाराज सरो द्वैतवनं प्रति।
वसन्तः पाण्डवाः सार्धं ब्राह्मणैर्वनवासिभिः ॥ ९०८ ॥

स प्रयाहि महाराज श्रिया परमया युतः।
तापयन् पाण्डुपुत्रांस्त्वं रश्मिवानिव तेजसा ॥ १०९ ॥
समस्थो विषमस्थान् हि दुर्हृदो योऽभिवीक्षते।
जगतीस्थानिवाद्रिस्थः किमतः परमं सुखम् ॥ ११० ॥
न पुत्रधनलाभेन न राज्येनापि विन्दति।
प्रीतिं नृपतिशार्दूल याममित्राघदर्शनात् ॥ १११ ॥
सुवाससो हि ते भार्या वल्कलाजिनसंवृताम्।
पश्यन्तु दुःखितां कृष्णां सा च निर्विद्यतां पुनः ॥ ११२ ॥
(अ.२३८) कर्णस्य वचनं श्रुत्वा राजा दुर्योधनस्ततः।
हृष्टो भूत्वा पुनर्दीन इदं वचनमब्रवीत् ॥ ११३ ॥
ममापि हि महान् हर्षो यदहं भीमफाल्गुनौ।
क्लिष्टावरण्ये पश्येयं कृष्णया सहिताविति ॥ ११४ ॥
न तथा प्राप्नुयां प्रीतिमवाप्य वसुधामिमाम्।
दृष्ट्वा यथा पाण्डुसुतान् वल्कलाजिनवाससः ॥ ११५ ॥
किं नु स्यादधिकं तस्माद्यदहं द्रुपदात्मजाम्।
द्रौपदीं कर्ण पश्येयं काषायवसनां वने ॥ ११६ ॥
उपायं न तु पश्यामि येन गच्छेम तद्वनम्।
यथा चाभ्यनुजानीयाद्गच्छन्तं मां महीपतिः ॥ ११७ ॥
ततो दुर्योधनं कर्णः प्रहसन्निदमब्रवीत्।
घोषा द्वैतवने सर्वे त्वत्प्रतीक्षा नराधिप ॥ ११८ ॥
घोषयात्रापदेशेन गमिष्यामो न संशयः।
एवं च त्वां पिता राजन् समनुज्ञातुमर्हति ॥ ११९ ॥
ततः प्रहसिताः सर्वे तेऽन्योन्यस्य तलान् ददुः।
तदेव च विनिश्चित्य ददृशुः कुरुसत्तमम् ॥ १२० ॥
(अ.२३९) ततस्तैर्विहितः पूर्वं समङ्गो नाम वल्लवः।
समीपस्थास्तदा गावो धृतराष्ट्रे न्यवेदयत् ॥ १२१ ॥

अनन्तरं च राधेय• शकुनिश्च विशाम्पते।
आहतुः पार्थिवश्रेष्ठं धृतराष्ट्रं जनाधिपम् ॥ ९२२ ॥
रमणीयेषु देशेषु घोषा सम्प्रति कौरव।
स्मारणे समयः प्राप्तो वत्सानामपि चाङ्कनम् ॥ ९२३ ॥
मृगया चोचिता राजन्नस्मिन्काले सुतस्य ते।
दुर्योधनस्य गमनं समनुज्ञातुमर्हसि ॥ ९२४ ॥
धृतराष्ट्र– मृगया शोभना तात गवा हि समवेक्षणम्।
विश्रम्भस्तु न गन्तव्यो वल्लवानामिति स्मरे ॥ ९२५ ॥
ते तु तत्र नरव्याघ्रा• समीप इति न• श्रुतम्।
अतो नाभ्यनुजानामि गमनं तत्र व• स्वयम् ॥ ९२६ ॥
धर्मराजो न सङ्कुध्येद्भीमसेनस्त्वमर्षण•।
यज्ञसेनस्य दुहिता तेज एव तु केवलम् ॥ ९२७ ॥
यूयं चाप्यपराध्येयुर्दर्पमोहसमन्विता•।
अथवा सैनिका• केचिदपकुर्युर्युधिष्ठिरम् ॥ ९२८ ॥
शकुनि– मृगया चैव नो गन्तुमिच्छा सवर्तते भृशम्।
स्मारणं तु चिकीर्षामो न तु पाण्डवदर्शनम् ॥ ९२९ ॥
न च तत्र गमिष्यामो यत्र तेषा प्रतिश्रय•।
एवमुक्त शकुनिना धृतराष्ट्रो जनेश्वर• ॥ ९३० ॥
दुर्योधन सहामात्यमनुजज्ञे न कामत ।
अनुज्ञातस्तु गान्धारि• कर्णेन सहितस्तदा ॥ ९३१ ॥
निर्ययौ भरतश्रेष्ठो बलेन महता वृत ।
दु शासनेन च तथा सौबलेन च धीमता।
संवृतो भ्रातृभिश्चान्यै• स्त्रीभिश्चापि सहस्रशः ॥ ९३२ ॥
(अ.२४०) अथ दुर्योधनो राजा तत्र तत्र वने वसन्।
जगाम घोषानभितस्तत्र चक्रे निवेशनम् ॥ ९३३ ॥

दर्दश स तदा गावः शतशोऽथ सहस्रशः।
अङ्कैर्लक्षैश्च ताः सर्वा लक्षयामास पार्थिवः ॥ ९३४ ॥
अङ्कयामास वत्सांश्च जज्ञे सोपसृतांस्त्वपि।
बालवत्साश्च या गावः कालयामास ता अपि ॥ ९३५ ॥
अथ स स्मारणं कृत्वा लक्षयित्वा त्रिहायनान्।
वृतो गोपालकैः प्रीतो व्याहरत् कुरुनन्दनः ॥ ९३६ ॥
ततस्ते सहिताः सर्वे तरक्षून् महिषान् मृगान्।
गवयर्क्षवराहांश्च समन्तात् पर्यकालयन् ॥ ९३७ ॥
स ताञ्छरैर्विनिर्भिद्य गजांश्च सुबहून् वने।
रमणीयेषु देशेषु ग्राहयामास वै मृगान् ॥ ९३८ ॥
ततो दुर्योधनः प्रेष्यानादिदेश सहस्रशः।
आक्रीडावसथाः क्षिप्रं क्रियन्तामिति भारत ॥ ९३९ ॥
ते तथेत्येव कौरव्यमुक्त्वा वचनकारिणः।
चिकीर्षन्तस्तदाऽऽक्रीडान् जग्मुर्द्वैतवनं सरः ॥ ९४० ॥
तत्र गन्धर्वराजो वै पूर्वमेव विशाम्पते।
कुबेरभवनाद्राजन्नाजगाम गणावृतः ॥ ९४१ ॥
तेन तत्संवृतं दृष्ट्वा ते राजपरिचारकाः।
प्रतिजग्मुस्ततो राजन् यत्र दुर्योधनो नृपः ॥ ९४२ ॥
स तु तेषां वचः श्रुत्वा सैनिकान् युद्धदुर्मदान्।
प्रेषयामास कौरव्य उत्सारयत तानिति ॥ ९४३ ॥
तस्य तद्वचनं श्रुत्वा राज्ञः सेनाग्रयायिनः।
सरो द्वैतवनं गत्वा गन्धर्वानिदमब्रुवन् ॥ ९४४ ॥
राजा दुर्योधनो नाम धृतराष्ट्रसुतो बली।
विजिहीर्षुरिहायाति तदर्थमुपसर्पत ॥ ९४५ ॥
(अ.२४१) ततस्ते खेचराः सर्वे चित्रसेने न्यवेदयन्।
गन्धर्वराजस्तान्सर्वानब्रवीत् कौरवान् प्रति ॥ ९४६ ॥

पूर्वं प्रभग्ना सहिताः पाण्डवानभ्ययुस्तदा ।
सैनिकाः- प्रियदर्शी महाबाहो धार्तराष्ट्रो महाबलः ॥ ९६० ॥
गन्धर्वैर्ह्रियते राजा पार्थास्तमनुधावत ।
दुःशासनो दुर्विषहो दुर्मुखो दुर्जयस्तथा ॥ ९६१ ॥
बद्ध्वा ह्रियन्ते गन्धर्वै राजदाराश्च सर्वशः ।
इति दुर्योधनामात्याः क्रोशन्तो राजगृद्धिनः ॥ ९६२ ॥
आर्ता दीनास्ततः सर्वे युधिष्ठिरमुपागमन् ।
तांस्तथा व्यथितान्दीनान्भिक्षमाणान्युधिष्ठिरम् ॥ ९६३ ॥
वृद्धान्दुर्योधनामात्यान् भीमसेनोऽभ्यभाषत ।
महता हि प्रयत्नेन सन्नह्य गजवाजिभिः ॥ ९६४ ॥
अस्माभिर्यदनुष्ठेयं गन्धर्वैस्तदनुष्ठितम् ।
अन्यथा वर्तमानानामर्थो जातोऽयमन्यथा ॥ ९६५ ॥
दुर्मन्त्रितमिदं तावद्राज्ञो दुर्द्यूतदेविनः ।
शीतवातातपसहांस्तपसा चैव कर्शितान् ॥ ९६६ ॥
समस्थो विषमस्थान् हि द्रष्टुमिच्छति दुर्मतिः ।
एवं ब्रुवाणं कौन्तेय भीमसेनमपस्वरम् ॥ ९६७ ॥
न कालः परुषस्यायमिति राजाऽभ्यभाषत ।
युधि- अस्मानभिगतास्तात भयार्ताञ्छरणैषिणः ॥ ९६८ ॥
(अ.२४३) कौरवान् विषमप्राप्तान् कथं ब्रूयास्त्वमीदृशम् ।
भवन्ति भेदा ज्ञातीनां कलहाश्च वृकोदर ॥ ९६९ ॥
प्रसक्तानि च वैराणि कुलधर्मो न नश्यति ।
यदा तु कश्चिज्ज्ञातीनां बाह्यः प्रार्थयते कुलम् ॥ ९७० ॥
न मर्षयन्ति तत्सन्तो बाह्येनाभिप्रधर्षणम् ।
दुर्योधनस्य ग्रहणाद्गन्धर्वेण बलात् प्रभो ॥ ९७१ ॥
स्त्रीणां बाह्याभिमर्शाच्च हतं भवति नः कुलम् ।
शरणं च प्रपन्नानां त्राणार्थं च कुलस्य च ॥ ९७२ ॥

उत्तिष्ठध्वं नरव्याघ्राः सज्जीभवत मा चिरम्।
वरप्रदानं राज्यं च पुनर्जन्म च पाण्डवाः ॥ ९७३ ॥
शत्रोश्च मोक्षणं क्लेशात् त्रीणि चैकं च तत्समम्।
(अ.२४४) युधिष्ठिरवचः श्रुत्वा भीमसेनपुरोगमाः ॥ ९७४ ॥
प्रहृष्टवदनाः सर्वे समुत्तस्थुर्नरर्षभाः।
ते दंशिता रथैः सर्वे ध्वजिनः सशरासनाः ॥ ९७५ ॥
पाण्डवाः प्रत्यदृश्यन्त ज्वलिता इव पावकाः ।
दृष्ट्वा रथगतान् वीरान् पाण्डवांश्चतुरो रणे ॥ ९७६ ॥
व्यूढानीका व्यतिष्ठन्त गन्धमादनवासिनः।
ततस्तान् युधि दुर्धर्षान् सव्यसाची परन्तपः ॥ ९७७ ॥
सान्त्वपूर्वमिदं वाक्यमुवाच खचरान् रणे।
विसर्जयत राजानं भ्रातरं मे सुयोधनम् ॥ ९७८ ॥
त एवमुक्ता गन्धर्वाः पाण्डवेन यशस्विना।
उत्स्मयन्तस्तदा पार्थमिदं वचनमब्रुवन् ॥ ९७९ ॥
एकस्यैव वयं तात कुर्याम वचनं भुवि।
न शास्ता विद्यतेऽस्माकमन्यस्तस्मात्सुरेश्वरात् ॥ ९८० ॥
एवमुक्तः स गन्धर्वैः कुन्तीपुत्रो धनञ्जयः।
गन्धर्वान् पुनरेवेदं वचनं प्रत्यभाषत ॥ ९८१ ॥
उत्सृजध्वं महावीर्यान् धृतराष्ट्रसुतानिमान्।
दारांश्चैषां विमुञ्चध्वं धर्मराजस्य शासनात् ॥ ९८२ ॥
यदा साम्ना न मुञ्चध्वं गन्धर्वा धृतराष्ट्रजान्।
मोक्षयिष्यामि विक्रम्य स्वयमेव सुयोधनम् ॥ ९८३ ॥
एवमुक्त्वा ततः पार्थः सव्यसाची धनञ्जयः।
ससर्ज निशितान् बाणान् खचरान् खचरान्प्रति ॥ ९८४ ॥
ततः सुतुमुलं युद्धं गन्धर्वाणां तरस्विनाम्।
बभूव भीमवेगानां पाण्डवानां च भारत ॥ ९८५ ॥

(अ.२४५) ते दह्यमाना गन्धर्वाः कुन्तीपुत्रस्य सायकैः ।
दैतेया इव शक्रेण विषादमगमन् परम् ॥ ९८६ ॥
गन्धर्वांस्त्रासितान् दृष्ट्वा कुन्तीपुत्रेण भारत ।
गन्धर्वराजो बलवान् माययाऽन्तर्हितस्तदा ॥ ९८७ ॥
अन्तर्हितं तमालक्ष्य प्रहरन्तमथार्जुनः ।
ताडयामास खचरैर्दिव्यास्त्रप्रतिमन्त्रितैः ॥ ९८८ ॥
स वध्यमानस्तैरस्त्रैरर्जुनेन महात्मना ।
ततोऽस्य दर्शयामास तदाऽऽत्मानं प्रियः सखा ॥ ९८९ ॥
चित्रसेनमथालक्ष्य सखायं युधि दुर्बलम् ।
सञ्जहारास्त्रमथ तत् प्रसृष्टं पाण्डवर्षभः ॥ ९९० ॥

(अ.२४६) ततोऽर्जुनश्चित्रसेनं प्रहसन्निदमब्रवीत् ।
किमर्थं च सदारोऽयं निगृहीतः सुयोधनः ॥ ९९१ ॥

चित्रसेन– विदितोऽयमभिप्रायस्तत्रस्थेन दुरात्मनः ।
दुर्योधनस्य पापस्य कर्णस्य च धनञ्जय ॥ ९९२ ॥
वनस्थान् भवतो ज्ञात्वा क्लिश्यमानाननाथवत् ।
समस्थो विषमस्थांस्तान् द्रक्ष्यामीत्यनवस्थितान् ॥ ९९३ ॥
इमेऽवहसितुं प्राप्ता द्रौपदीं च यशस्विनीम् ।
ज्ञात्वा चिकीर्षितं चैषां मामुवाच सुरेश्वरः ॥ ९९४ ॥
गच्छ दुर्योधनं बद्ध्वा सहामात्यमिहानय ।
वचनाद्देवराजस्य ततोऽस्मीहागतो द्रुतम् ॥ ९९५ ॥

अर्जुन– उत्सृज्यतां चित्रसेन भ्राताऽस्माकं सुयोधनः ।
धर्मराजस्य सन्देशान्मम चेदिच्छसि प्रियम् ॥ ९९६ ॥
ते सर्व एव राजानमभिजग्मुर्युधिष्ठिरम् ।
अभिगम्य च तत् सर्वं शशंसुस्तस्य चेष्टितम् ॥ ९९७ ॥
अजातशत्रुस्तच्छ्रुत्वा गन्धर्वस्य वचस्तदा ।
मोक्षयामास तान् सर्वान् गन्धर्वान् प्रशशंस च ॥ ९९८ ॥

ततो दुर्योधनं मुक्तं भ्रातृभिः सहितस्तदा।
युधिष्ठिरस्तु प्रणयादिदं वचनमब्रवीत्॥ ९९९॥
मा स्म तात पुनः कार्षीरीदृशं साहसं क्वचित्।
न हि साहसकर्तारः सुखमेधन्ति भारत॥ १०००॥
स्वस्तिमान् सहितः सर्वैर्भ्रातृभिः कुरुनन्दन।
गृहान् व्रज यथाकामं वैमनस्यं च मा कृथाः॥ १००१॥
पाण्डवेनाऽभ्यनुज्ञातो राजा दुर्योधनस्तदा।
अभिवाद्य धर्मपुत्रं गतेन्द्रिय इवातुरः॥ १००२॥
(अ.२४७) स्वपुरं प्रययौ राजा चतुरङ्गबलानुगः।
शोकोपहतया बुद्ध्या चिन्तयानः पराभवम्॥ १००३॥
विमुच्य पथि यानानि देशे सुयवसोदके।
सन्निविष्टः शुभे रम्ये भूमिभागे यथेप्सितम्॥ १००४॥
अथोपविष्टं राजानं पर्यङ्के ज्वलनप्रभे।
उपागम्याब्रवीत्कर्णो दुर्योधनमिदं तदा॥ १००५॥
दिष्ट्या जीवसि गान्धारे दिष्ट्या नः सङ्गमः पुनः।
दिष्ट्या त्वया जिताश्चैव गन्धर्वाः कामरूपिणः॥ १००६॥
अहं त्वभिद्रुतः सर्वैर्गन्धर्वैः पश्यतस्तव।
नाशक्नुवं स्थापयितुं दीर्यमाणां च वाहिनीम्॥ १००७॥
नैतस्य कर्ता लोकेऽस्मिन् पुमान् विद्यति भारत।
यत् कृतं ते महाराज सह भ्रातृभिराहवे॥ १००८॥
दुर्यो– अजानतस्ते राधेय नाभ्यसूयाम्यहं वचः।
(अ २४८) जानासि त्वं जितान् शत्रून् गन्धर्वांस्तेजसा मया॥१००९॥
आयोधितास्तु गन्धर्वाः सुचिरं सोदरैर्मम।
पराजयं च प्राप्ताः स्मो रणे बन्धनमेव च॥ १०१०॥
सभृत्यामात्यपुत्राश्च सदारबलवाहनाः।
ततोऽर्जुनश्च भीमश्च यमजौ च बलोत्कटौ॥ १०११॥

मुमुचुः शरवर्षाणि गन्धर्वान्प्रत्यनेकशः।
समावृता दिशो दृष्ट्वा पाण्डवेन शितैः शरैः ॥ १०१२ ॥
धनञ्जयसखात्मानं दर्शयामास वै तदा।
एकीभूतास्तदा वीरा गन्धर्वाः सह पाण्डवैः ॥ १०१३ ॥
अपूजयेतामन्योन्यं चित्रसेनधनञ्जयौ।
(अ.२४९) युधिष्ठिरमथागम्य गन्धर्वाः सह पाण्डवैः ॥ १०१४ ॥
अस्मद्दुर्मन्त्रितं तस्मै बद्धांश्चास्मान्न्यवेदयन्।
स्त्रीसमक्षमहं दीनो बद्धः शत्रुवशं गतः ॥ १०१५ ॥
युधिष्ठिरस्योपहृतः किं नु दुःखमतः परम्।
ये मे निराकृता नित्यं रिपुर्येषामहं सदा ॥ १०१६ ॥
तैर्मोक्षितोऽहं दुर्बुद्धिर्दत्तं तैरेव जीवितम्।
प्राप्तः स्यां यद्यहं वीर वधं तस्मिन् महारणे ॥ १०१७ ॥
श्रेयस्तद्भविता मह्यं नैवंभूतस्य जीवितम्।
यत्त्वद्य मे व्यवसितं तच्छृणुध्वं नरर्षभाः ॥ १०१८ ॥
इह प्रायमुपासिष्ये यूयं व्रजत वै गृहान्।
कर्ण- किमत्र चित्रं यद्वीर मोक्षितः पाण्डवैरसि ॥ १०१९ ॥
(अ.२५०) अवश्यमेव नृपते राज्ञो विषयवासिभिः।
प्रियाण्याचरितव्यानि तत्र का परिदेवना ॥ १०२० ॥
नोत्सहे जीवितुमहं त्वद्विहीनो नरर्षभ।
प्रायोपविष्टस्तु नृप राज्ञां हास्यो भविष्यसि ॥ १०२१ ॥
शकुनि- सम्यगुक्तं हि कर्णेन तच्छ्रुतं कौरव त्वया।
(अ.२५१) मया हृतां श्रियं स्फीतां तां मोहादपहासि किम् ॥१०२२॥
यः समुत्पतितं हर्षं दैन्यं वा न नियच्छति।
स नश्यति श्रियं प्राप्य पात्रमाममिवाम्भसि ॥ १०२३ ॥
सत्कृतस्य हि ते शोको विपरीते कथं भवेत्।
मा कृतं शोभनं पार्थैः शोकमालम्ब्य नाशय ॥ १०२४ ॥

स सुहृद्भिरमात्यैश्च भ्रातृभिः स्वजनेन च।
बहुप्रकारमप्युक्तो निश्चयान्न विचाल्यते ॥ १०२५ ॥
दर्भास्तरणमास्तीर्य निश्चयात् धृतराष्ट्रज ।
संस्पृश्यापः शुचिर्भूत्वा भूतले समुपस्थितः ॥ १०२६ ॥
अथ तं निश्चयं तस्य बुद्ध्वा दैतेयदानवा ।
पातालवासिनो रौद्राः पूर्वं देवैर्विनिर्जिताः ॥ १०२७ ॥
ते स्वपक्षक्षयं तं तु ज्ञात्वा दुर्योधनस्य वै।
आह्वानाय तदा चक्रुः कर्म वैतानसम्भवम् ॥ १०२८ ॥
कर्मसिद्धौ तदा तत्र जृम्भमाणा महाद्भुता।
कृत्या समुत्थिता राजन् किं करोमीति चाब्रवीत् ॥ १०२९ ॥
आहुर्दैत्याश्च तां तत्र सुप्रीतेनान्तरात्मना।
प्रायोपविष्टं राजानं धार्तराष्ट्रमिहानय ॥ १०३० ॥
तथेति च प्रतिश्रुत्य सा कृत्या प्रययौ तदा।
समादाय च राजानं प्रविवेश रसातलम् ॥ १०३१ ॥
तमानीतं नृपं दृष्ट्वा रात्रौ सङ्गत्य दानवा ।
साभिमानमिदं वाक्यं दुर्योधनमथाब्रुवन् ॥ १०३२ ॥
(अ.२५१) अकार्षीः साहसमिदं कस्मात् प्रायोपवेशनम्।
आत्मत्यागी ह्यधो याति वाच्यतां चायशस्करीम् ॥ १०३३ ॥
न हि कार्यविरुद्धेषु बहुपापेषु कर्मसु।
मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ १०३४ ॥
नियच्छैनां मतिं राजन् धर्मार्थसुखनाशिनीम्।
यशःप्रतापवीर्यघ्नीं शत्रूणां हर्षवर्धिनीम् ॥ १०३५ ॥
क्षत्रियाश्च महावीर्या भगदत्तपुरोगमाः ।
दिव्यास्त्रविदुषः शूराः क्षपयिष्यन्ति ते रिपून् ॥ १०३६ ॥
तदलं ते विषादेन भयं तव न विद्यते।
सहायार्थं च ते वीराः सम्भूता भुवि दानवाः ॥ १०३७ ॥

यच्च तेऽन्तर्गतं वीर भयमर्जुनसम्भवम्।
तत्रापि विहितोऽस्माभिर्वधोपायोऽर्जुनस्य वै ॥ १०३८ ॥
हतस्य नरकस्यात्मा कर्णमूर्तिमुपाश्रितः।
तद्वैरं संस्मरन् वीर योत्स्यते केशवार्जुनौ ॥ १०३९ ॥
स ते विक्रमशौटीरो रणे पार्थं विजेष्यति।
मा विषादं गमस्तस्माद्नैतत्त्वय्युपपद्यते ॥ १०४० ॥
विनष्टे त्वयि चास्माकं पक्षो हीयेत कौरव।
गच्छ वीर न ते बुद्धिरन्या कार्या कथञ्चन ॥ १०४१ ॥
त्वमस्माकं गतिर्नित्यं देवतानां च पाण्डवाः।
एवमुक्त्वा परिष्वज्य दैत्यास्त राजकुञ्जरम् ॥ १०४२ ॥
समाश्वास्य च दुर्धर्षं पुत्रवद्दानवर्षभाः।
स्थिरां कृत्वा बुद्धिमस्य प्रियाण्युक्त्वा च भारत ॥ १०४३ ॥
गम्यतामित्यनुज्ञाय जयमाप्नुहि चेत्यथ।
तैर्विसृष्टं महाबाहुं कृत्या सैवानयत् पुन. ॥ १०४४ ॥
तमेव देशं यत्रासौ तदा प्रायमुपाविशत्।
प्रतिनिक्षिप्य तं वीरं कृत्या समभिपूज्य च ॥ १०४५ ॥
अनुज्ञाता च राज्ञा सा तत्रैवान्तरधीयत।
गतायामथ तस्यां तु राजा दुर्योधनस्तदा ॥ १०४६ ॥
स्वप्नभूतमिदं सर्वमचिन्तयत भारत।
विजेष्यामि रणे पाण्डूनिति चास्याभवन्मति. ॥ १०४७ ॥
एवमाशा दृढा तस्य धार्तराष्ट्रस्य दुर्मते.।
विनिर्जये पाण्डवानामभवद्भरतर्षभ ॥ १०४८ ॥
न चाचचक्षे कस्मैचिदेतद्राजा सुयोधनः।
दुर्योधनं निशान्ते च कर्णो वैकर्तनोऽब्रवीत् ॥ १०४९ ॥
स्मयन्निवाञ्जलिं कृत्वा पार्थिवं हेतुमद्वचः।
न मृतो जयते शत्रून् जीवन् भद्राणि पश्यति ॥ १०५० ॥

मृतस्य भद्राणि कुतः कौरवेय कुतो जयः।
उत्तिष्ठ राजन्किं शेषे कस्माच्छोचसि शत्रुहन् ॥ १०५१ ॥
शत्रून् प्रताप्य वीर्येण स कथं मृत्युमिच्छसि।
एवमुक्तस्तु कर्णेन दैत्यानां वचनात् तथा ॥ १०५२ ॥
प्रणिपातेन चाप्येषामुदतिष्ठत्सुयोधनः।
दैत्यानां तद्वचः श्रुत्वा हृदि कृत्वा स्थिरां मतिम् ॥ १०५३ ॥
ततो मनुजशार्दूलो योजयामास वाहिनीम्।
सुयोधनो ययावग्रे श्रिया परमया ज्वलन् ॥ १०५४ ॥
कर्णेन सार्धं राजेन्द्र सौबलेन च देविना।
प्रयान्तं नृपसिंहं तमनुजग्मुः कुरूद्वहाः ॥ १०५५ ॥
कालेनाल्पेन राजेन्द्र स्वपुरं विविशुस्तदा।
कर्ण– दुर्योधन निबोधेदं यत् त्वां वक्ष्यामि कौरव ॥ १०५६ ॥
(अ.२५३) अनुजानीहि मां राजन् सभृत्यबलवाहनम्।
जेष्यामि पृथिवीं राजन् सशैलवनकाननाम् ॥ १०५७ ॥
तच्छ्रुत्वा तु वचो राजन् कर्णस्य भरतर्षभ।
प्रीत्या परमया युक्तः कर्णमाह नराधिप ॥ १०५८ ॥
यदा च मन्यसे वीर सर्वशत्रुनिबर्हणम्।
तदा निर्गच्छ भद्रं ते ह्यनुशाधि च मामिति ॥ १०५९ ॥
(अ.२५४) ततः कर्णो महेष्वासो बलेन महता वृतः।
प्रययौ च दिशः सर्वान्नृपतीन्वशमानयत् ॥ १०६० ॥
एवं स पृथिवीं सर्वां वशे कृत्वा महारथः।
विजित्य पुरुषव्याघ्रो नागसाह्वयमागमत् ॥ १०६१ ॥
कर्ण– तवाद्य पृथिवी वीर निःसपत्ना नृपोत्तम।
(अ.२५५) तां पालय यथा शक्रो हतशत्रुर्महामनाः ॥ १०६२ ॥
बह्वन्नपानसंयुक्तः सुसमृद्धगुणान्वितः।
प्रवर्ततां महायज्ञस्तवापि भरतर्षभ ॥ १०६३ ॥

एवमुक्तस्तु कर्णेन धार्तराष्ट्रो विशाम्पते ।
पुरोहितं समानाय्य वचनं चेदमब्रवीत् ॥ १०६४ ॥
राजसूयं क्रतुश्रेष्ठं समाप्तवरदक्षिणम् ।
आहर त्वं मम कृते यथान्यायं यथाक्रमम् ॥ १०६५ ॥
स एवमुक्तो नृपतिमुवाच द्विजसत्तम ।
न स शक्यः क्रतुश्रेष्ठो जीवमाने युधिष्ठिरे ॥ १०६६ ॥
आहर्तुं कौरवश्रेष्ठ कुले तव नृपोत्तम ।
दीर्घायुर्जीवति च ते धृतराष्ट्रः पिता नृप ॥ १०६७ ॥
प्रवर्ततां यथान्यायं सर्वतो ह्यनिवारितः ।
एष ते वैष्णवो नाम यज्ञः सत्पुरुषोचितः ॥ १०६८ ॥
(अ २५६) ततः प्रववृते यज्ञः प्रभूतार्थः सुसंस्कृतः ।
दीक्षितश्चापि गान्धारिर्यथाशास्त्रं यथाक्रमम् ॥ १०६९ ॥
निमन्त्रणार्थं दूतांश्च प्रेषयामास शीघ्रगान् ।
पार्थिवानां च राजेन्द्र ब्राह्मणानां तथैव च ॥ १०७० ॥
अथाजग्मुर्नरश्रेष्ठा नानाजनपदेश्वराः ।
ब्राह्मणाश्च महाभाग धार्तराष्ट्रपुरं प्रति ॥ १०७१ ॥
कृत्वा ह्यावसथान् वीरो यथाशास्त्रं यथाक्रमम् ।
सान्त्वयित्वा च राजेन्द्रो दत्त्वा च विविधं वसु ॥ १०७२ ॥
विसर्जयामास नृपान् ब्राह्मणांश्च सहस्रशः ।
विसृज्य च नृपान् सर्वान् भ्रातृभिः परिवारितः ॥ १०७३ ॥
विवेश हास्तिनपुरं सहितः कर्णसौबलैः ।
(अ २५७) अभिवाद्य ततः पादौ मातापित्रोर्विशाम्पते ॥ १०७४ ॥
भीष्मद्रोणकृपादीनां विदुरस्य च धीमतः ।
अभिवादितः कनीयोभिर्भ्रातृभिर्भ्रातृनन्दन ॥ १०७५ ॥
निषसादासने मुख्ये भ्रातृभिः परिवारितः ।
तमुत्थाय महाप्राज्ञं सूतपुत्रोऽब्रवीद्वचः ॥ १०७६ ॥

दिष्ट्या ते भरतश्रेष्ठ समाप्तोऽयं महाक्रतुः।
हतेषु युधि पार्थेषु राजसूये तथा त्वया ॥ १०७७ ॥
आहर्तेऽहं नरश्रेष्ठ त्वां सभाजयिता पुनः।
पादौ न धावये तावद्यावन्न निहतोऽर्जुनः ॥ १०७८ ॥
कीलालजं न खादेयं करिष्ये चासुरव्रतम्।
नास्तीति नैव वक्ष्यामि याचितो येन केनचित् ॥ १०७९ ॥

## पाण्डवानां काम्यकवनागमनम्, पाण्डवसत्त्वहरणे दुर्वाससो वृथा प्रयत्नः

(अ.२५८) ततः शयानं कौन्तेयं रात्रौ द्वैतवने मृगाः।
स्वप्नान्ते दर्शयामासुर्बाष्पकण्ठा युधिष्ठिरम् ॥ १०८० ॥
इत्येवं प्रतिबुद्धः स रात्र्यन्ते राजसत्तमः।
अब्रवीत् सहितान् भ्रातॄन् दयापन्नो मृगान् प्रति ॥ १०८१ ॥
उक्तो रात्रौ मृगैरस्मि स्वप्नान्ते हतशेषितैः।
तन्तुभूताः स्म भद्रं ते दया नः क्रियतामिति ॥ १०८२ ॥
ते सत्यमाहुः कर्तव्या दयाऽस्माभिर्वनौकसाम्।
साष्टमासं हि नो वर्षं यदेनानुपयुङ्क्ष्महे ॥ १०८३ ॥
पुनर्बहुमृगं रम्यं काम्यकं काननोत्तमम्।
मरुभूमेः शिरःस्थानं तृणबिन्दुसरः प्रति ॥ १०८४ ॥
तत्रेमां वसतिं शिष्टां विहरन्तो रमेमहि।
ततस्ते पाण्डवाः शीघ्रं प्रययुर्धर्मकोविदाः ॥ १०८५ ॥
ददृशुः काम्यकं पुण्यमाश्रमं तपसा युतम्।
विविशुस्ते स्म कौरव्या वृता विप्रर्षभैस्तदा ॥ १०८६ ॥
तद्वनं भरतश्रेष्ठाः स्वर्गं सुकृतिनो यथा।
(अ.२६२) श्रुत्वा तेषां तथा वृत्तिं नगरे वसतामिव ॥ १०८७ ॥

दुर्योधनो महाराज तेषु पापमरोचयत् ।
तथा तैर्निकृतिप्रज्ञैः कर्णदुःशासनादिभिः ॥ १०८८ ॥
नानोपायैरघ तेषु चिन्तयत्सु दुरात्मसु ।
अभ्यागच्छत्स धर्मात्मा तपस्वी सुमहायशाः ॥ १०८९ ॥
शिष्यायुतसमोपेतो दुर्वासा नाम कामतः ।
तमागतमभिप्रेक्ष्य मुनिं परमकोपनम् ॥ १०९० ॥
दुर्योधनो विनीतात्मा प्रश्रयेण दमेन च ।
सहितो भ्रातृभिः श्रीमानातिथ्येन न्यमन्त्रयत् ॥ १०९१ ॥
अहानि कतिचित् तत्र तस्थौ स मुनिसत्तमः ।
तं च पर्यचरत् राजा दिवारात्रमतन्द्रितः ॥ १०९२ ॥
क्षुधितोऽस्मि ददस्वान्नं शीघ्रं मम नराधिप ।
इत्युक्त्वा गच्छति स्नातुं प्रत्यागच्छति वै चिरात् ॥ १०९३ ॥
न भोक्ष्याम्यद्य मे नास्ति क्षुधेत्युक्त्वैत्यदर्शनम् ।
अकस्मादेत्य च ब्रूते भोजयास्मांस्त्वरान्वितः ॥ १०९४ ॥
कदाचिच्च निशीथे स उत्थाय निकृतौ स्थितः ।
पूर्ववत् कारयित्वाऽन्नं न भुङ्क्ते गर्हयन् स्म सः ॥ १०९५ ॥
वर्तमाने तथा तस्मिन् यदा दुर्योधनो नृपः ।
विकृतिं नैति न क्रोधं तदा तुष्टोऽभवन्मुनिः ॥ १०९६ ॥
आह चैनं दुराधर्षो वरदोऽस्मीति भारत ।
एतच्छ्रुत्वा वचस्तस्य महर्षेर्भावितात्मनः ॥ १०९७ ॥
अतिहर्षान्वितो राजन् वरमेनमयाचत ।
शिष्यैः सह मम ब्रह्मन् यथा जातोऽतिथिर्भवान् ॥ १०९८ ॥
अस्मत्कुले महाराजो ज्येष्ठः श्रेष्ठो युधिष्ठिरः ।
गुणवान् शीलसम्पन्नस्तस्य त्वमतिथिर्भव ॥ १०९९ ॥
यदा च राजपुत्री सा सुकुमारी यशस्विनी ।
भोजयित्वा द्विजान् सर्वान् पतींश्च वरवर्णिनी ॥ ११०० ॥

विश्रान्ता च स्वयं भुक्त्वा सुखासीना भवेद्यदा।
तदा त्वं तत्र गच्छेथा यद्यनुग्राह्यता मयि ॥ ११०१ ॥
तथा करिष्ये त्वत्प्रीत्येत्येवमुक्त्वा सुयोधनम्।
दुर्वासा अपि विप्रेन्द्रो यथागतमगात्ततः ॥ ११०२ ॥
(अ.२६३) ततः कदाचिद्दुर्वासाः सुखासीनांस्तु पाण्डवान्।
भुक्त्वा चावस्थितां कृष्णां ज्ञात्वा तस्मिन् वने मुनिः ॥११०३॥
अभ्यागच्छत् परिवृतः शिष्यैरयुतसम्मितैः।
दृष्ट्वाऽऽयान्तं तमतिथिं स च राजा युधिष्ठिरः ॥ ११०४ ॥
जगामाभिमुखः श्रीमान् सह भ्रातृभिरच्युतः।
विधिवत् पूजयित्वा तमातिथ्येन न्यमन्त्रयत् ॥ ११०५ ॥
आह्निकं भगवन् कृत्वा शीघ्रमेहीति चाब्रवीत्।
जगाम च मुनिः सोऽपि स्नातुं शिष्यैः सहानघः ॥ ११०६ ॥
एतस्मिन्नन्तरे राजन् द्रौपदी योषितां वरा।
चिन्तामवाप परमामन्नहेतोः पतिव्रता ॥ ११०७ ॥
सा चिन्तयन्ती च यदा नान्नहेतुमविन्दत।
मनसा चिन्तयामास कृष्णं कंसनिषूदनम् ॥ ११०८ ॥
कृष्ण कृष्ण महाबाहो देवकीनंदनाव्यय।
वासुदेव जगन्नाथ प्रणतार्तिविनाशन ॥ ११०९ ॥
विश्वात्मन् विश्वजनक विश्वहर्तः प्रभोऽव्यय।
प्रपन्नपाल गोपाल प्रजापाल परात्पर ॥ १११० ॥
सर्वाध्यक्ष पराध्यक्ष त्वामहं शरणं गता।
पाहि मां कृपया देव शरणागतवत्सल ॥ ११११ ॥
दुःशासनादहं पूर्वं सभायां मोचिता यथा।
तथैव संकटादस्मान्मामुद्धर्तुमिहार्हसि ॥ १११२ ॥
एवं स्तुतस्तदा देवः कृष्णाया भक्तवत्सलः।
पार्श्वस्थां शयने त्यक्त्वा रुक्मिणीं केशवः प्रभुः ॥ १११३ ॥

तत्राजगाम त्वरितो ह्यचिन्त्यगतिरीश्वरः।
ततस्तं द्रौपदी दृष्ट्वा प्रणम्य परया मुदा ॥ १११४ ॥
अब्रवीद्वासुदेवाय मुनेरागमनादिकम्।
ततस्तामब्रवीत् कृष्णः क्षुधितोऽस्मि भृशातुर. ॥ १११५ ॥
शीघ्रं भोजय मा कृष्णे पश्चात् सर्वं करिष्यसि।
निशम्य तद्वच. कृष्णा लज्जिता वाक्यमब्रवीत् ॥ १११६ ॥
स्थाल्यां भास्करदत्तायामन्नं मद्भोजनावधि।
भुक्तवत्यस्म्यहं देव तस्मादन्नं न विद्यते ॥ १११७ ॥
ततः प्रोवाच भगवान् कृष्णां कमललोचन.।
कृष्णे न नर्मकालोऽयं क्षुच्छ्रमेणातुरे मयि ॥ १११८ ॥
शीघ्रं गच्छ मम स्थालीमानयित्वा प्रदर्शय।
इति निर्बन्धत स्थालीमानाय्य स यदूद्वहः ॥ १११९ ॥
स्थाल्या. कण्ठेऽथ संलग्नं शाकान्नं वीक्ष्य केशव.।
उपयुज्याब्रवीदेनामनेन हरिरीश्वरः ॥ ११२० ॥
विश्वात्मा प्रीयतां देवस्तुष्टश्चास्त्विति यज्ञभुक्।
आकारय मुनीन शीघ्रं भोजनायेति चाब्रवीत् ॥ ११२१ ॥
सहदेवं महाबाहु. कृष्ण. क्लेशविनाशन ।
ततो जगाम त्वरित. सहदेवो महायशा. ॥ ११२२ ॥
आकारितुं तु तान सर्वान् भोजनार्थं नृपोत्तम।
ते चावतीर्णा. सलिले कृतवन्तोऽघमर्षणम् ॥ ११२३ ॥
दृष्ट्वोद्गारान साम्ररसांस्तृप्त्या परमया युता.।
उत्तीर्य सलिलात् तस्माद्दृष्टवन्त. परस्परम् ॥ ११२४ ॥
दुर्वाससमभिप्रेक्ष्य ते सर्वे मुनयोऽब्रुवन्।
आकण्ठतृप्ता विप्रर्षे किंस्विद्भुञ्जामहे वयम् ॥ ११२५ ॥
वृथा पाकः कृतोऽस्माभिस्तत्र किं करवामहे।
दुर्वासा– वृथा पाकेन राजर्षेरपराध. कृतो महान् ॥ ११२६ ॥

माऽस्मानधाक्षुर्दृष्ट्वैव पाण्डवाः क्रूरचक्षुषा।
स्मृत्वाऽनुभावं राजर्षेरम्बरीषस्य धीमतः॥ ११२७॥
बिभेमि सुतरां विप्रा हरिपादाश्रयाज्जनात्।
तत एतानपृष्ट्वैव शिष्याः शीघ्रं पलायत॥ ११२८॥
इत्युक्तास्ते द्विजाः सर्वे मुनिना गुरुणा तदा।
पाण्डवेभ्यो भृशं भीता दुद्रुवुस्ते दिशो दश॥ ११२९॥
एवं विधान्यलीकानि धार्तराष्ट्रैर्दुरात्मभिः।
पाण्डवेषु वनस्थेषु प्रयुक्तानि वृथाऽभवन्॥ ११३०॥

## जयद्रथकृतं द्रौपदीहरणम्

(अ.२६४) तस्मिन् बहुमृगेऽरण्ये अटमाना महारथाः।
काम्यके भरतश्रेष्ठा विजहुस्ते यथाऽमराः॥ ११३१॥
ततस्ते यौगपद्येन ययुः सर्वे चतुर्दिशम्।
मृगयां पुरुषव्याघ्रा ब्राह्मणार्थे परन्तपाः॥ ११३२॥
द्रौपदीमाश्रमे न्यस्य तृणबिन्दोरनुज्ञया।
महर्षेर्दीप्ततपसो धौम्यस्य च पुरोधसः॥ ११३३॥
ततस्तु राजा सिन्धूनां वार्धक्षत्रिर्महायशाः।
विवाहकामः शाल्वेयान् प्रयातः सोऽभवत्तदा॥ ११३४॥
राजभिर्बहुभिः सार्धमुपायात् काम्यकं च सः।
तत्रापश्यत् प्रियां भार्यां पाण्डवानां यशस्विनीम्॥ ११३५॥
तिष्ठन्तीमाश्रमद्वारि द्रौपदीं निर्जने वने।
स कोटिकास्यं राजानमब्रवीत् काममोहितः॥ ११३६॥
गच्छ जानीहि सौम्येमां कस्य वाऽत्र कुतोऽपि वा।
स कोटिकास्यस्तच्छ्रुत्वा रथात् प्रस्कन्द्य कुण्डली।
उपेत्य पप्रच्छ तदा क्रोष्टा व्याघ्रवधूमिव॥ ११३७॥

(अ २६५) का त्व कदम्बस्य विनम्य शाखा
मेकाऽऽश्रमे तिष्ठसि शोभमाना।
आचक्ष्व बन्धूंश्च पतिं कुलं च
तत्त्वेन यच्चेह करोषि कार्यम् ॥ ११३८ ॥

(अ २६६) अथाब्रवीद्द्रौपदी राजपुत्री
पृष्टा शिबीना प्रवरेण तेन।
अपत्यमस्मि द्रुपदस्य राज्ञ
कृष्णेति मा शैब्य विदुर्मनुष्या ॥ ११३९ ॥

साहं वृणे पञ्च जनान् पतित्वे
ये खाण्डवप्रस्थगता श्रुतास्ते।
युधिष्ठिरो भीमसेनार्जुनौ च
माद्र्याश्च पुत्रौ पुरुषप्रवीरौ ॥ ११४० ॥

(अ २६७) तथासीनेषु सर्वेषु तेषु राजसु भारत।
यदुक्तं कृष्णया सार्धं तत् सर्वं प्रत्यवेदयत् ॥ ११४१ ॥

कोटिक– एषा वै द्रौपदी कृष्णा राजपुत्री यशस्विनी।
पञ्चाना पाण्डुपुत्राणा महिषी सम्मता भृशम् ॥ ११४२ ॥
तया समेत्य सौवीर सौवीराभिमुखो व्रज।
एवमुक्त प्रत्युवाच पश्यामि द्रौपदीमिति ॥ ११४३ ॥
पति सौवीरसिन्धूना दुष्टभावो जयद्रथ ।
स प्रविश्याश्रमं पुण्यं सिंहगोष्ठं वृको यथा ॥ ११४४ ॥
आत्मना सप्तम कृष्णामिदं वचनमब्रवीत्।
गतश्रीकान् हृतराज्यान् कृपणान् गतचेतस ॥ ११४५ ॥
अरण्यवासिन पार्थाननुरोद्धुं त्वमर्हसि ।
अलं ते पाण्डुपुत्राणा भक्त्या क्लेशमुपासितुम् ॥ ११४६ ॥
भार्या मे भव सुश्रोणि त्यक्त्वैनान्सुखमाप्नुहि।
अखिलान् सिन्धुसौवीरानाप्नुहि त्वं मया सह ॥ ११४७ ॥

(अ.२६८) सा तानवेक्ष्य विशालनेत्रा
जिघृक्षमाणानवभर्त्सयन्ती।
प्रोवाच मा मा स्पृशतेति भीता
धौम्यं प्रचुक्रोश पुरोहितं सा ॥ ११४८ ॥
जग्राह तामुत्तरवस्त्रदेशे
जयद्रथस्तं समवाक्षिपत् सा।
तया समाक्षिप्ततनुः स पापः
पपात शाखीव निकृत्तमूलः ॥ ११४९ ॥
प्रगृह्यमाणा तु महाजवेन
मुहुर्विनिःश्वस्य च राजपुत्री।
सा कृष्यमाणा रथमारुरोह
धौम्यस्य पादावभिवाद्य कृष्णा ॥ ११५० ॥

धौम्य– नेयं शक्या त्वया नेतुमविजित्य महारथान्।
धर्मं क्षत्रस्य पौराणमवेक्षस्व जयद्रथ ॥ ११५१ ॥
इत्युक्त्वा ह्रियमाणां तां राजपुत्रीं यशस्विनीम्।
अन्वगच्छत् तदा धौम्यः पदातिगणमध्यगः ॥ ११५२ ॥

(अ.२६९) ततो दिशः सम्प्रविहृत्य पार्था
मृगान् वराहान् महिषांश्च हत्वा।
धनुर्धराः श्रेष्ठतमाः पृथिव्यां
पृथक् चरन्तः सहिता बभूवुः ॥
युक्तैर्बृहद्भिः सुरथैर्नृवीरा-
स्तदाऽऽश्रमायाभिमुखा बभूवुः ॥ ११५३ ॥
बालामपश्यन्त तदा रुदन्तीं
धात्रेयिकां प्रेष्यवधूं प्रियायाः।
तामिन्द्रसेनस्त्वरितोऽभिसृत्य
प्रोवाच चैना वचनं नरेन्द्र ॥ ११५४ ॥
किं रोदिषि त्वं पतिता धरण्यां
किं ते मुखं शुष्यति दीनवर्णम्।

अथाब्रवीचारुमुखं विमृद्य
धात्रेयिका सारथिमिन्द्रसेनम् ॥ ११५५ ॥
जयद्रथेनापहृता प्रमथ्य
पञ्चेन्द्रकल्पान् परिभूय कृष्णा।
तिष्ठन्ति वर्त्मानि नवान्यमूनि
वृक्षाश्च न म्लान्ति तथैव भग्ना ॥ ११५६ ॥
गृह्णीत चापानि महाधनानि
शराश्च शीघ्रं पदवीं चरध्वम्।
पुरा हि निर्भर्त्सनदण्डमोहिता
प्रमोहचित्ता वदनेन शुष्यता ॥ ११५७ ॥
ददाति कस्मैचिदनर्हते तनुं
वराज्यपूर्णामिव भस्मनि स्रुचम्।

युधि- भद्रे प्रतिक्राम नियच्छ वाचं
माऽस्मत्सकाशे परुषाण्यवोचः ॥ ११५८ ॥
एतावदुक्त्वा प्रययुर्हि शीघ्रं
तान्येव वर्त्मान्यनुवर्तमानाः।
श्येना यथैवामिषसंप्रयुक्ता
जवेन तत्सैन्यमथाभ्यधावन् ॥ ११५९ ॥

(अ २७०) ततो घोरतरः शब्दो वने समभवत्तदा।
(अ २७१) भीमार्जुनयमान् दृष्ट्वा सैन्यानां सयुधिष्ठिरान् ॥ ११६० ॥
हेमचित्रसमुत्सेधां सर्वशैक्यायसीं गदाम्।
प्रगृह्याभ्यद्रवद्भीमं सैन्धवः कालचोदितम् ॥ ११६१ ॥
तदन्तरमथावृत्य कोटिकास्योऽभ्यहारयत्।
महता रथवंशेन परिवार्य वृकोदरम् ॥ ११६२ ॥
भीमस्त्वापततो राज्ञः कोटिकास्यस्य सङ्गरे।
सूतस्य नुदतो वाहान् क्षुरेणापाहरच्छिरः ॥ ११६३ ॥

विमुखं हतसूतं तं भीमः प्रहरतां वरः।
जघान तलयुक्तेन प्रासेनाभ्येत्य पाण्डवः ॥ ११६४ ॥
द्वादशानां तु सर्वेषां सौवीराणां धनञ्जयः।
चकर्त निशितैर्भल्लैर्धनूंषि च शिरांसि च ॥ ११६५ ॥
हतेषु तेषु वीरेषु सिन्धुराजो जयद्रथः।
विमुच्य कृष्णां सन्त्रस्तः पलायनमनाऽभवत् ॥ ११६६ ॥
स तस्मिन् सङ्कुले सैन्ये द्रौपदीमवतार्य ताम्।
प्राणप्रेप्सुरुपाधावद्वनं येन नराधमः ॥ ११६७ ॥
द्रौपदीं धर्मराजस्तु दृष्ट्वा धौम्यपुरस्कृताम्।
माद्रीपुत्रेण वीरेण रथमारोपयत्तदा ॥ ११६८ ॥
ततस्तद्विद्रुतं सैन्यमपयाते जयद्रथे।
आदिश्यादिश्य नाराचैराजघान वृकोदरः ॥ ११६९ ॥

अर्जुन– यस्यापचारात् प्राप्तोऽयमस्मान् क्लेशो दुरासदः।
तमस्मिन् समरोद्देशे न पश्यामि जयद्रथम् ॥ ११७० ॥
तमेवान्विष भद्रं ते किं ते योधैर्निपातितैः।
इत्युक्तो भीमसेनस्तु गुडाकेशेन धीमता ॥ ११७१ ॥
युधिष्ठिरमभिप्रेक्ष्य वाग्मी वचनमब्रवीत्।
यमाभ्यां सह राजेन्द्र धौम्येन च महात्मना ॥ ११७२ ॥
प्राप्याश्रमपदं राजन् द्रौपदीं परिसान्त्वय।
न हि मे मोक्ष्यते जीवन् मूढः सैन्धवको नृपः ॥ ११७३ ॥
पातालतलसंस्थोऽपि यदि शक्रोऽस्य सारथिः।

युधि– न हन्तव्यो महाबाहो दुरात्माऽपि स सैन्धवः ॥ ११७४ ॥
दुःशलामभिसंस्मृत्य गान्धारीं च यशस्विनीम्।
तच्छ्रुत्वा द्रौपदी भीममुवाच व्याकुलेन्द्रिया ॥ ११७५ ॥
कुपिता ह्रीमती प्राज्ञा पती भीमार्जुनावुभौ।
कर्तव्यं चेत् प्रियं मह्यं वध्यः स पुरुषाधमः ॥ ११७६ ॥

इत्युक्तौ तौ नरव्याघ्रौ ययतुर्यत्र सैन्धवः।
राजा निववृते कृष्णामादाय सपुरोहितः॥ ११७७॥
स प्रविश्याश्रमपदमपविद्धबृसीमठम्।
मार्कण्डेयादिभिर्विप्रैरनुकीर्णं ददर्श ह॥ ११७८॥
भीमसेनार्जुनौ चापि श्रुत्वा क्रोशगतं रिपुम्।
स्वयमश्वांस्तुदन्तौ तौ जवेनैवाभ्यधावताम्॥ ११७९॥
इदमत्यद्भुतं चात्र चकार पुरुषोऽर्जुनः।
क्रोशमात्रगतानश्वान् सैन्धवस्य जघान यत्॥ ११८०॥
ततोऽभ्यधावतां वीरावुभौ भीमधनञ्जयौ।
हताश्वं सैन्धवं भीतमेकं व्याकुलचेतसम्॥ ११८१॥
(अ.२७२) जयद्रथस्तु संप्रेक्ष्य भ्रातरावुद्यतावुभौ।
प्राधावत् तूर्णमव्यग्रो जीवितेप्सुः सुदुःखितः॥ ११८२॥
तं भीमसेनो धावन्तमवतीर्य रथाद्बली।
अभिद्रुत्य निजग्राह केशपक्षे ह्यमर्षणः॥ ११८३॥
समुद्यम्य च तं भीमो निष्पिपेष महीतले।
शिरो गृहीत्वा राजानं ताडयामास चैव ह॥ ११८४॥
सरोषं भीमसेनं तु वारयामास फाल्गुनः।
दुःशलायाः कृते राजा यत् तदाहेति कौरव॥ ११८५॥
भीम- नायं पापसमाचारो मत्तो जीवितुमर्हति।
कृष्णायास्तदनर्हाया· परिक्लेष्टा नराधमः॥ ११८६॥
किं नु शक्यं मया कर्तुं यद्राजा सततं घृणी।
त्वं च बालिशया बुद्ध्या सदैवास्मान् प्रबाधसे॥ ११८७॥
एवमुक्त्वा सटास्तस्य पञ्च चक्रे वृकोदर·।
अर्धचन्द्रेण बाणेन किंचिदब्रुवतस्तदा॥ ११८८॥
विकत्थयित्वा राजानं ततः प्राह वृकोदरः।
जीवितुं चेच्छसे मूढ हेतुं मे गदतः शृणु॥ ११८९॥

दासोऽस्मीति तथा वाच्यं संसत्सु च सभासु च।
एवं ते जीवितं दद्यामेष युद्धजितो विधिः॥ ११९० ॥
एवमस्त्विति तं राजा कृष्यमाणो जयद्रथः।
प्रोवाच पुरुषव्याघ्रं भीममाहवशोभिनम्॥ ११९१ ॥
तत एनं विचेष्टन्तं बद्ध्वा पार्थो वृकोदरः।
अभ्येत्याश्रममध्यस्थमभ्यगच्छत् युधिष्ठिरम्॥ ११९२ ॥
दर्शयामास भीमस्तु तदवस्थं जयद्रथम्।
तं राजा प्राहसद्दृष्ट्वा मुच्यतामिति चाब्रवीत्॥ ११९३ ॥
द्रौपदी चाब्रवीद्भीममभिप्रेक्ष्य युधिष्ठिरम्।
दासोऽयं मुच्यतां राज्ञस्त्वया पञ्चसटः कृतः॥ ११९४ ॥
स मुक्तोऽभ्येत्य राजानमभिवाद्य युधिष्ठिरम्।
ववन्दे विह्वलो राजंस्तांश्च दृष्ट्वा मुनींस्तदा॥ ११९५ ॥
तमुवाच घृणी राजा धर्मपुत्रो युधिष्ठिरः।
अदासो गच्छ मुक्तोऽसि मैवं कार्षीः पुनः क्वचित्॥११९६॥
स्त्रीकामं वा धिगस्तु त्वां क्षुद्रः क्षुद्रसहायवान्।
एवंविधं हि कः कुर्यात् त्वदन्यः पुरुषाधमः॥ ११९७ ॥
धर्मे ते वर्धतां बुद्धिर्मा चाधर्मे मनः कृथाः।
साश्वः सरथपादातः स्वस्ति गच्छ जयद्रथ॥ ११९८ ॥
एवमुक्तस्तु सव्रीडं तूष्णीं किञ्चिदवाङ्मुखः।
जगाम राजन् दुःखार्तो गङ्गाद्वाराय भारत॥ ११९९ ॥
स देवं शरणं गत्वा विरूपाक्षमुमापतिम्।
तपश्चचार विपुलं तस्य प्रीतो वृषध्वजः॥ १२०० ॥
वरं चास्मै ददौ देवः स जग्राह च तच्छृणु।
समस्तान् सरथान् पञ्च जयेयं युधि पाण्डवान्॥ १२०१ ॥
इति राजाऽब्रवीद्देवं नेति देवस्तमब्रवीत्।
अजय्यांश्चाप्यवध्यांश्च वारयिष्यसि तान्युधि॥ १२०२ ॥

ऋतेऽर्जुन महाबाहुं नरं नाम सुरेश्वरम्।
तमेकं वर्जयित्वा तु सर्वं यौधिष्ठिरं बलम् ॥ १२०३ ॥
चतुरः पाण्डवान् राजन् दिनैकं जेष्यसे रिपून्।
इत्येवमुक्त्वा नृपतिं सर्वपापहरो हरः ॥ १२०४ ॥
उमासहायो भगवांस्तत्रैवान्तरधीयत।
जयद्रथोऽपि मन्दात्मा स्वमेव भवनं ययौ ॥ १२०५ ॥
पाण्डवाश्च वने तस्मिन्न्यवसन् काम्यके तथा।

## सावित्र्युपाख्यानम्

(अ.२७३) एवं कृष्णां मोक्षयित्वा विनिर्जित्य जयद्रथम् ॥ १२०६ ॥
आसाञ्चक्रे मुनिगणैर्धर्मराजो युधिष्ठिरः।
तेषां मध्ये महर्षीणां शृण्वतामनुशोचताम् ॥ १२०७ ॥
मार्कण्डेयमिदं वाक्यमब्रवीत् पाण्डुनन्दनः।
अस्ति नूनं मया कश्चिदल्पभाग्यतरो नरः ॥ १२०८ ॥
भवता दृष्टपूर्वो वा श्रुतपूर्वोऽपि वा भवेत्।
मार्कण्डेय-प्राप्तमप्रतिमं दुःखं रामेण भरतर्षभ ॥ १२०९ ॥
(अ.२७४) रक्षसा जानकी तस्य हृता भार्या बलीयसा।
आश्रमाद्राक्षसेन्द्रेण रावणेन दुरात्मना ॥ १२१० ॥
मायामास्थाय तरसा हत्वा गृध्रं जटायुषम्।
प्रत्याजहार तां रामः सुग्रीवबलमाश्रितः ॥ १२११ ॥
बध्वा सेतुं समुद्रस्य दग्ध्वा लंकां शितैः शरैः।
(अ.२९२) मा शुचः पुरुषव्याघ्र क्षत्रियोऽसि परन्तप ॥ १२१२ ॥
सहायवति सर्वार्थाः सन्तिष्ठन्तीह सर्वशः।
असहायेन रामेण वैदेही पुनराहृता ॥ १२१३ ॥
हत्वा सङ्ख्ये दशग्रीवं राक्षसं भीमविक्रमम्।
यस्य शाखामृगा मित्राण्यृक्षाः कालमुखास्तथा ॥ १२१४ ॥

जात्यन्तरगता राजन्नेतद्बुद्ध्याऽनुचिन्तय।
तस्मात् स त्वं कुरुश्रेष्ठ मा शुचो भरतर्षभ ॥ १२१५ ॥
त्वद्विधा हि महात्मानो न शोचन्ति परन्तप।

युधि- नात्मानमनुशोचामि नेमान् भ्रातॄन् महामुने ॥ १२१६ ॥
(अ.२९३) हरणं चापि राज्यस्य यथेमां द्रुपदात्मजाम्।
अस्ति सीमन्तिनी काचिद्दृष्टपूर्वाऽपि वा श्रुता ॥ १२१७ ॥
पतिव्रता महाभागा यथेयं द्रुपदात्मजा।

मार्कण्डेय- आसीन्मद्रेषु धर्मात्मा राजा परमधार्मिकः ॥ १२१८ ॥
पार्थिवोऽश्वपतिर्नाम सर्वभूतहिते रतः।
क्षमावाननपत्यश्च सत्यवाग्विजितेन्द्रियः ॥ १२१९ ॥
अपत्योत्पादनार्थं च तीव्रं नियममास्थितः।
हुत्वा शतसहस्रं स सावित्र्या राजसत्तम ॥ १२२० ॥
षष्ठे षष्ठे तदा काले बभूव मितभोजनः।
पूर्णे त्वष्टादशे वर्षे सावित्री तुष्टिमभ्यगात् ॥ १२२१ ॥
उवाच चैनं वरदा वचनं पार्थिवं तदा।
वरं वृणीष्वाश्वपते मद्रराज यदीप्सितम् ॥ १२२२ ॥

अश्वपति- पुत्रा मे बहवो देवि भवेयुः कुलभावनाः।
तुष्टाऽसि यदि मे देवि वरमेतं वृणोम्यहम् ॥ १२२३ ॥

सावित्री- कन्या तेजस्विनी सौम्य क्षिप्रमेव भविष्यति।
उत्तरं च न ते किञ्चिद्व्याहर्तव्यं कथञ्चन ॥ १२२४ ॥
अन्तर्हितायां सावित्र्यां जगाम स्वपुरं नृपः।
कस्मिंश्चित्तु गते काले स राजा नियतव्रतः।
ज्येष्ठायां धर्मचारिण्यां महिष्यां गर्भमादधे ॥ १२२५ ॥
प्राप्ते तु काले सुषुवे कन्यां राजीवलोचनाम्।
क्रियाश्च तस्या मुदितश्चक्रे च नृपसत्तमः ॥ १२२६ ॥

सावित्र्या प्रीतया दत्ता सावित्र्या हुतया ह्यपि।
सावित्रीत्येव नामास्याश्चक्रुर्विप्रास्तथा पिता ॥ १२२७ ॥
सा विग्रहवतीव श्रीर्व्यवर्धत नृपात्मजा।
कालेन चापि सा कन्या यौवनस्था बभूव ह ॥ १२२८ ॥
तां तु पद्मपलाशाक्षीं ज्वलन्तीमिव तेजसा।
न कश्चिद्वरयामास तेजसा प्रतिवारितः ॥ १२२९ ॥
यौवनस्थां तु तां दृष्ट्वा स्वां सुतां देवरूपिणीम्।
अयाच्यमाना च वरैर्नृपतिर्दुःखितोऽभवत् ॥ १२३० ॥

राजा– पुत्रि प्रदानकालस्ते न च कश्चिद्वृणोति माम्।
स्वयमन्विच्छ भर्तारं गुणैः सदृशमात्मनः ॥ १२३१ ॥
प्रार्थितः पुरुषो यश्च स निवेद्यस्त्वया मम।
विमृश्याहं प्रदास्यामि वरय त्वं यथेप्सितम् ॥ १२३२ ॥
साभिवाद्य पितुः पादौ व्रीडितेव तपस्विनी।
पितुर्वचनमाज्ञाय निर्जगामाविचारितम् ॥ १२३३ ॥
सा हैमं रथमास्थाय स्थविरैः सचिवैर्वृता।
तपोवनानि रम्याणि राजर्षीणां जगाम ह ॥ १२३४ ॥

(अ.२९४) अथ मद्राधिपो राजा नारदेन समागतः।
उपविष्टः सभामध्ये कथायोगेन भारत ॥ १२३५ ॥
ततोऽभिगम्य तीर्थानि सर्वाण्येवाश्रमांस्तथा।
आजगाम पितुर्वेश्म सावित्री सह मन्त्रिभिः ॥ १२३६ ॥
सा ब्रूहि विस्तरेणेति पित्रा सञ्चोदिता शुभा।
तदैव तस्य वचनं प्रतिगृह्येदमब्रवीत् ॥ १२३७ ॥
आसीच्छाल्वेषु धर्मात्मा क्षत्रियः पृथिवीपतिः।
द्युमत्सेन इति ख्यातः पश्चादन्धो बभूव ह ॥ १२३८ ॥
विनष्टचक्षुषस्तस्य बालपुत्रस्य धीमतः।
सामीप्येन हृतं राज्यं छिद्रेऽस्मिन् पूर्ववैरिणा ॥ १२३९ ॥

स वाल्वन्सया सार्धं भार्यया प्रस्थितो वनम् ।
महारण्यं गतश्चापि तपस्तेपे महाव्रतः ॥ १२४० ॥
तस्य पुत्रः पुरे जातः संवृद्धश्च तपोवने ।
सत्यवाननुरूपो मे भर्तेति मनसा वृतः ॥ १२४१ ॥

नारद– अहो बत महत्पापं सावित्र्या नृपते कृतम् ।
अजानन्त्या यदनया गुणवान् सत्यवान् वृतः ॥ १२४२ ॥
स दान्तः स मृदुः शूरः स सत्यः संयतेन्द्रियः ।
स मैत्रः सोऽनसूयश्च स ह्रीमान् द्युतिमांश्च सः ॥ १२४३ ॥
एको दोषोऽस्ति नान्योऽस्य सोऽद्यप्रभृति सत्यवान् ।
'संवत्सरेण क्षीणायुर्देहन्यासं करिष्यति ॥ १२४४ ॥

राजा– एहि सावित्रि गच्छस्व अन्यं वरय शोभने ।
संवत्सरेण सोऽल्पायुर्देहन्यासं करिष्यति ॥ १२४५ ॥

सावित्री– सकृदंशो निपतति सकृत् कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सकृत् सकृत् ॥ १२४६ ॥
दीर्घायुरथवाऽल्पायुः सगुणो निर्गुणोऽपि वा ।
सकृद्वृतो मया भर्ता न द्वितीयं वृणोम्यहम् ॥ १२४७ ॥
मनसा निश्चयं कृत्वा ततो वाचाऽभिधीयते ।
क्रियते कर्मणा पश्चात् प्रमाणं मे मनस्ततः ॥ १२४८ ॥

नारद– स्थिरा बुद्धिर्नरश्रेष्ठ सावित्र्या दुहितुस्तव ।
नैषा वारयितुं शक्या धर्मादस्मात् कथञ्चन ॥ १२४९ ॥
नान्यस्मिन् पुरुषे सन्ति ये सत्यवति वै गुणाः ।
प्रदानमेव तस्मान्मे रोचते दुहितुस्तव ॥ १२५० ॥
एवमुक्त्वा समुत्पत्य नारदस्त्रिदिवं गतः ।
राजाऽपि दुहितुः सर्वं वैवाहिकमकारयत् ॥ १२५१ ॥

(अ.२९५) ततो वृद्धान् द्विजान् सर्वानृत्विजः सपुरोहितान् ।
समाहूय दिने पुण्ये प्रययौ सह कन्यया ॥ १२५२ ॥

मेध्यारण्यं स गत्वा च द्युमत्सेनाश्रमं नृपः।
तत्रापश्यन्महाभागं शालवृक्षमुपाश्रितम् ॥ १२५३ ॥
कौश्यां बृस्यां समासीनं चक्षुर्हीनं नृपं तदा।
स राजा तस्य राजर्षेः कृत्वा पूजां यथाऽर्हतः ॥ १२५४ ॥
वाचा सुनियतो भूत्वा चकारात्मनिवेदनम्।
अश्वपति- सावित्री नाम राजर्षे कन्येयं मम शोभना ॥ १२५५ ॥
तां स्वधर्मेण धर्मज्ञ स्नुषार्थे त्वं गृहाण मे।
द्युमत्सेन- अभिप्रायस्त्वयं यो मे पूर्वमेवाभिकांक्षितः ॥ १२५६ ॥
स निर्वर्ततु मेऽद्यैव काङ्क्षितो ह्यसि मेऽतिथिः।
ततः सर्वान् समानाय्य द्विजानाश्रमवासिनः ॥ १२५७ ॥
यथाविधि समुद्वाहं कारयामासतुर्नृपौ।
दत्वा सोऽश्वपतिः कन्यां यथार्हं सपरिच्छदम् ॥ १२५८ ॥
ययौ स्वमेव भवनं युक्तः परमया मुदा।
सत्यवानपि तां भार्यां लब्ध्वा सर्वगुणान्विताम् ॥ १२५९ ॥
मुमुदे सा च तं लब्ध्वा भर्तारं मनसेप्सितम्।
गते पितरि सर्वाणि सन्न्यस्याभरणानि सा ॥ १२६० ॥
जगृहे वल्कलान्येव वस्त्रं काषायमेव च।
परिचारैर्गुणैश्चैव प्रश्रयेण दमेन च ॥ १२६१ ॥
सर्वकामक्रियाभिश्च सर्वेषां तुष्टिमादधे।
(व.२९४) ततः काले बहुतिथे व्यतिक्रान्ते कदाचन ॥ १२६२ ॥
प्राप्तः स कालो मर्तव्यं यत्र सत्यवता नृप।
गणयन्त्याश्च सावित्र्या दिवसे दिवसे गते ॥ १२६३ ॥
यद्वाक्यं नारदेनोक्तं वर्तते हृदि नित्यशः।
चतुर्थेऽहनि मर्तव्यमिति सञ्चिन्त्य भामिनी ॥ १२६४ ॥
व्रतं त्रिरात्रमुद्दिश्य दिवारात्रं स्थिताऽभवत्।
श्वोभूते भर्तृमरणे सावित्र्या भरतर्षभ ॥ १२६५ ॥

दुःखान्वितायास्तिष्ठन्त्याः सा रात्रिर्व्यत्यवर्तत।
अथ तद्दिवसं चेति हुत्वा दीप्तं हुताशनम्॥ १२६६॥
युगमात्रोदिते सूर्ये कृत्वा पौर्वाह्णिकीः क्रियाः।
ततः सर्वान् द्विजान् वृद्धान् श्वश्रूं श्वशुरमेव च॥ १२६७॥
अभिवाद्यानुपूर्व्येण प्राञ्जलिर्नियता स्थिता।
ततस्तु श्वश्रूश्वशुरावूचतुस्तां नृपात्मजाम्॥ १२६८॥
एकान्तमास्थितां वाक्यं प्रीत्या भरतसत्तम।
व्रतं यथोपदिष्टं तु तथा तत्पारितं त्वया॥ १२६९॥
आहारकालः सम्प्राप्तः क्रियतां यदनन्तरम्।

सावित्री– अस्तं गते मयाऽऽदित्ये भोक्तव्यं कृतकामया॥ १२७०॥
एष मे हृदि सङ्कल्पः समयश्च कृतो मया।
एवं सम्भाषमाणायाः सावित्र्या भोजनं प्रति॥ १२७१॥
स्कन्धे परशुमादाय सत्यवान् प्रस्थितो वनम्।
सावित्री त्वाह भर्तारं नैकस्त्वं गन्तुमर्हसि॥ १२७२॥
सह त्वयाऽऽगमिष्यामि न हि त्वां हातुमुत्सहे।

सत्यवान्– वनं न गतपूर्वं ते दुःखः पन्थाश्च भाविनि॥ १२७३॥
व्रतोपवासक्षामा च कथं पद्भ्यां गमिष्यसि।

सावित्री– उपवासान्न मे ग्लानिर्नास्ति चापि परिश्रमः॥ १२७४॥
गमने च कृतोत्साहां प्रतिषेद्धुं न माऽर्हसि।

सत्यवान्– यदि ते गमनोत्साहः करिष्यामि तव प्रियम्॥ १२७५॥
मम त्वामन्त्रय गुरून् मां दोषः स्पृशेदयम्।
साभिवाद्याब्रवीच्छ्वश्रूं श्वशुरं च महाव्रता॥ १२७६॥
अयं गच्छति मे भर्ता फलाहारो महावनम्।
इच्छेयमभ्यनुज्ञाता आर्यया श्वशुरेण ह॥ १२७७॥
अनेन सह निर्गन्तुं न मेऽद्य विरहः क्षमः।
उभाभ्यामभ्यनुज्ञाता सा जगाम यशस्विनी॥ १२७८॥

सह भर्त्रा हसन्तीव हृदयेन विदूयता ।
(अ.२९७) अथ भार्यासहाय स फलान्यादाय वीर्यवान् ॥ १२७९ ॥
कठिनं पूरयामास तत काष्ठान्यपाटयत् ।
तस्य पाटयत काष्ठ स्वेदो वै समजायत ॥ १२८० ॥
सोऽभिगम्य प्रिया भार्यामुवाच श्रमपीडित ।
व्यायामेन ममानेन जाता शिरसि वेदना ॥ १२८१ ॥
अस्वस्थमिव चात्मान लक्षये मितभाषिणि ।
तत् स्वप्तुमिच्छे कल्याणि न स्थातु शक्तिरस्ति मे ॥१२८२॥
सा समासाद्य सावित्री भर्तारमुपगम्य च ।
उत्सङ्गेऽस्य शिर कृत्वा निषसाद महीतले ॥ १२८३ ॥
तत सा नारदवचो विमृशन्ती तपस्विनी ।
त मुहूर्तं क्षणं वेला दिवस च युयोज ह ॥ १२८४ ॥
मुहूर्तादेव चापश्यत् पुरुष रक्तवाससम् ।
श्यामावदात रक्ताक्ष पाशहस्त भयावहम् ॥ १२८५ ॥
त दृष्ट्वा सहसोत्थाय भर्तुर्न्यस्य शनै शिर ।
कृताञ्जलिरुवाचार्ता हृदयेन प्रवेपती ॥ १२८६ ॥
सावित्री– दैवतं त्वाऽभिजानामि वपुरेतद्ध्यमानुषम् ।
कामया ब्रूहि देवेश कस्त्व किञ्च चिकीर्षसि ॥ १२८७ ॥
यम– पतिव्रताऽसि सावित्रि तथैव च तपोन्विता ।
अतस्त्वामभिभाषामि विद्धि मा त्व शुभे यमम् ॥ १२८८ ॥
अय ते सत्यवान भर्ता क्षीणायु पार्थिवात्मज ।
नेष्यामि तमहं बद्ध्वा विद्ध्येतन्मे चिकीर्षितम् ॥ १२८९ ॥
तत सत्यवत कायात् पाशबद्धं वशं गतम् ।
अङ्गुष्ठमात्रं पुरुष निश्चकर्ष यमो बलात् ॥ १२९० ॥
यमस्तु त ततो बद्ध्वा प्रयातो दक्षिणामुख ।
सावित्री चैव दु खार्ता यममेवान्वगच्छत ॥ १२९१ ॥

यम– निवर्त गच्छ सावित्रि कुरुष्वास्यौर्ध्वदेहिकम्।
कृतं भर्तुस्त्वयाऽनृण्यं यावद्गम्यं गतं त्वया ॥ १२९२ ॥

सावित्री– यत्र मे नीयते भर्ता स्वयं वा यत्र गच्छति।
मया च तत्र गन्तव्यमेष धर्मः सनातनः ॥ १२९३ ॥
तपसा गुरुभक्त्या च भर्तुः स्नेहाद्व्रतेन च।
तव चैव प्रसादेन न मे प्रतिहता गतिः ॥ १२९४ ॥
प्राहुः साप्तपदं मैत्रं बुधास्तत्त्वार्थदर्शिनः।
मित्रतां च पुरस्कृत्य किञ्चिद्वक्ष्यामि तच्छृणु ॥ १२९५ ॥
नानात्मवन्तस्तु वने चरन्ति
धर्मं च वासं च परिश्रमं च।
विज्ञानतो धर्ममुदाहरन्ति
तस्मात् सन्तो धर्ममाहुः प्रधानम् ॥ १२९६ ॥
एकस्य धर्मेण सतां मतेन
सर्वे स्म तं मार्गमनुप्रपन्नाः।
मा वै द्वितीयं मा तृतीयं च वाञ्छे
तस्मात्सन्तो धर्ममाहुः प्रधानम् ॥ १२९७ ॥

यम– निवर्त तुष्टोऽस्मि तवानया गिरा
स्वराक्षरव्यञ्जनहेतुयुक्तया।
वरं वृणीष्वेह विनाऽस्य जीवितं
ददानि ते सर्वमनिन्दिते वरम् ॥ १२९८ ॥

सावित्री– च्युतः स्वराज्याद्वनवासमाश्रितो
विनष्टचक्षुः श्वशुरो ममाश्रमे।
स लब्धचक्षुर्बलवान् भवेन्नृप-
स्तव प्रसादाज्ज्वलनार्कसन्निभः ॥ १२९९ ॥

यम– ददानि तेऽहं तमनिन्दिते वरम्
यथा त्वयोक्तं भविता च तत्तथा।

तयाध्वना ग्लानिमिवोपलक्षये
निवर्त गच्छस्व न ते श्रमो भवेत् ॥ १३०० ॥

सावित्री- श्रमः कुतो भर्तृसमीपतो हि मे
यतो हि भर्ता मम सा गतिर्ध्रुवा।
यतः पतिं नेष्यसि तत्र मे गतिः
सुरेश भूयश्च वचो निबोध मे ॥ १३०१ ॥
सतां सकृत्सङ्गतमीप्सितं परं
ततः परं मित्रमिति प्रचक्षते।
न चाफलं सत्पुरुषेण सङ्गतम्
ततः सतां सन्निवसेत् समागमे ॥ १३०२ ॥

यम- मनोनुकूलं बुधबुद्धिवर्धनम्
त्वया यदुक्तं वचनं हिताश्रयम्।
विना पुनः सत्यवतोऽस्य जीवितं
वरं द्वितीयं वरयस्व भामिनि ॥ १३०३ ॥

सावित्री- हृतं पुरा मे श्वशुरस्य धीमतः
स्वमेव राज्यं लभतां स पार्थिवः।
जह्यात् स्वधर्मांश्च च मे गुरुर्यथा।
द्वितीयमेतद्वरयामि ते वरम् ॥ १३०४ ॥

यम- स्वमेव राज्यं प्रतिपत्स्यतेऽचिरा-
न्न च स्वधर्मात् परिहास्यते नृपः।
कृतेन कामेन मया नृपात्मजे।
निवर्त गच्छस्व न ते श्रमो भवेत् ॥ १३०५ ॥

सावित्री- प्रजास्त्वयैता नियमेन संयता
नियम्य चैता नयसे निकामया।
ततो यमत्वं तव देव विश्रुतं
निबोध चेमां गिरमीरितां मया ॥ १३०६ ॥

अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा।
अनुग्रहश्च दानं च सतां धर्मः सनातनः ॥ १३०७ ॥
एवंप्रायश्च लोकोऽयं मनुष्याः शक्तिपेशलाः।
सन्तस्त्वेवाप्यमित्रेषु दयां प्राप्तेषु कुर्वते ॥ १३०८ ॥

यम– पिपासितस्येव भवेद्यथा पय-
स्तथा त्वया वाक्यमिदं समीरितम्।
विना पुनः सत्यवतोऽस्य जीवितं
वरं वृणीष्वेह शुभे यदिच्छसि ॥ १३०९ ॥

सावित्री– ममानपत्यः पृथिवीपतिः पिता
भवेत् पितुः पुत्रशतं तथौरसम्।
कुलस्य सन्तानकरं च यद्भवेत्
तृतीयमेतद्वरयामि ते वरम् ॥ १३१० ॥

यम– कुलस्य सन्तानकरं सुवर्चसम्
शतं सुतानां पितुरस्तु ते शुभे।
कृतेन कामेन नराधिपात्मजे
निवर्त दूरं हि पथस्त्वमागता ॥ १३११ ॥

सावित्री– न दूरमेतन्मम भर्तृसन्निधौ
मनो हि मे दूरतरं प्रधावति।
अथ व्रजन्नेव गिरं समुद्यतां
मयोच्यमानां शृणु भूय एव च ॥ १३१२ ॥
विवस्वतस्त्वं तनयः प्रतापवां-
स्ततो हि वैवस्वत उच्यसे बुधैः।
समेन धर्मेण चरन्ति ताः प्रजा-
स्ततस्तवेहेश्वर धर्मराजता ॥ १३१३ ॥
आत्मन्यपि न विश्वासस्तथा भवति सत्सु यः।
तस्मात् सत्सु विशेषेण सर्वः प्रणयमिच्छति ॥ १३१४ ॥

सौहृदात् सर्वभूताना विश्वासो नाम जायते।
तस्मात् सत्सु विशेषेण विश्वासं कुरुते जनः ॥ १३१५ ॥

यम- उदाहृतं ते वचनं यदङ्गने
शुभे न तादृक् त्वदृते श्रुतं मया।
अनेन तुष्टोऽस्मि विनास्य जीवितं
वरं चतुर्थं वरयस्व गच्छ च ॥ १३१६ ॥

सावित्री- ममात्मजं सत्यवतस्तथौरसं
भवेदुभाभ्यामिह यत् कुलोद्वहम्।
शतं सुतानां बलवीर्यशालिना-
मिदं चतुर्थं वरयामि ते वरम् ॥ १३१७ ॥

यम- शतं सुतानां बलवीर्यशालिनां
भविष्यति प्रीतिकरं तवाबले।
परिश्रमस्ते न भवेन्नृपात्मजे
निवर्त दूरं हि पथस्त्वमागता ॥ १३१८ ॥

सावित्री- सतां सदा शाश्वतधर्मवृत्तिः
सन्तो न सीदन्ति न च व्यथन्ति।
सतां सद्भिर्नाफलः सङ्गमोऽस्ति
सद्भ्यो भयं नानुवर्तन्ति सन्तः ॥ १३१९ ॥
सन्तो हि सत्येन नयन्ति सूर्यं
सन्तो भूमिं तपसा धारयन्ति।
सन्तो गतिर्भूतभव्यस्य राजन्
सतां मध्ये नावसीदन्ति सन्तः ॥ १३२० ॥
आर्यजुष्टमिदं वृत्तमिति विज्ञाय शाश्वतम्।
सन्तः परार्थं कुर्वाणा नावेक्षन्ति परस्परम् ॥ १३२१ ॥
न च प्रसादः सत्पुरुषेषु मोघो
न चाप्यर्थो नश्यति नापि मानः।

यस्मादेतन्नियतं सत्सु नित्यं
तस्मात् सन्तो रक्षितारो भवन्ति ॥ १३२२ ॥

यम- यथा यथा भाषसि धर्मसंहितं
मनोनुकूलं सुपदं महार्थवत् ।
तथा तथा मे त्वयि भक्तिरुत्तमा
वरं वृणीष्वाप्रतिमं पतिव्रते ॥ १३२३ ॥

सावित्री- न तेऽपवर्गः सुकृताद्विनाकृत-
स्तथा यथाऽन्येषु वरेषु मानद ।
वरं वृणे जीवतु सत्यवानयं
यथा मृता ह्येवमहं पतिं विना ॥ १३२४ ॥

न कामये भर्तृविनाकृता सुखं
न कामये भर्तृविनाकृता दिवम् ।
न कामये भर्तृविनाकृता श्रियम्
न भर्तृहीना व्यवसामि जीवितुम् ॥ १३२५ ॥

वरातिसर्गः शतपुत्रता मम
त्वयैव दत्तो ह्रियते च मे पतिः ।
वरं वृणे जीवतु सत्यवानयम्
तवैव सत्यं वचनं भविष्यति ॥ १३२६ ॥

तथेत्युक्त्वा तु तं पाशं मुक्त्वा वैवस्वतो यमः ।
धर्मराजः प्रहृष्टात्मा सावित्रीमिदमब्रवीत् ॥ १३२७ ॥
एष भद्रे मया मुक्तो भर्ता ते कुलनन्दिनि ।
अरोगस्तव नेयश्च सिद्धार्थः स भविष्यति ॥ १३२८ ॥
चतुर्वर्षशतायुश्च त्वया सार्धमवाप्स्यति ।
इष्ट्वा यज्ञैश्च धर्मेण ख्यातिं लोके गमिष्यति ॥ १३२९ ॥
एवं तस्यै वरं दत्त्वा धर्मराजः प्रतापवान् ।
निवर्तयित्वा सावित्रीं स्वमेव भवनं ययौ ॥ १३३० ॥

सावित्र्यपि यमे याते भर्तारं प्रतिलभ्य च।
जगाम तत्र यत्रास्या भर्तुः शावं कलेवरम् ॥ १३३१ ॥
सा भूमौ प्रेक्ष्य भर्तारमुपसृत्योपगृह्य च।
उत्सङ्गे शिर आरोप्य भूमावुपविवेश ह ॥ १३३२ ॥
संज्ञां च स पुनर्लब्ध्वा सावित्रीमभ्यभाषत।
प्रोष्यागत इव प्रेम्णा पुनः पुनरुदीक्ष्य वै ॥ १३३३ ॥
स्वस्थोऽस्मि बलवानस्मि दिदृक्षुः पितरावुभौ।
ब्रुवन्नेव त्वयायुक्तः सम्प्रायादाश्रमं प्रति ॥ १३३४ ॥
(अ.२९८) एतस्मिन्नेव काले तु द्युमत्सेनो महाबलः।
लब्धचक्षुः प्रसन्नायां दृष्ट्यां सर्वं ददर्श ह ॥ १३३५ ॥
स सर्वानाश्रमान् गत्वा शैब्यया सह भार्यया।
पुत्रहेतोः परामार्तिं जगाम भरतर्षभ ॥ १३३६ ॥
तावाश्रमान्नदीश्चैव वनानि च सरांसि च।
तस्यां निशि विचिन्वन्तौ दम्पती परिजग्मतुः ॥ १३३७ ॥
ततोऽभिसृत्य तैर्विप्रैः सर्वैराश्रमवासिभिः।
परिवार्य समाश्वास्य तावानीतौ स्वमाश्रमम् ॥ १३३८ ॥
ततो मुहूर्तात् सावित्री भर्त्रा सत्यवता सह।
आजगामाश्रमं रात्रौ प्रहृष्टा प्रविवेश ह ॥ १३३९ ॥
(अ २९९) तस्यां रात्र्यां व्यतीतायामुदिते सूर्यमण्डले।
कृतपौर्वाह्णिकाः सर्वे समेयुस्ते तपोधनाः ॥ १३४० ॥
ततः प्रकृतयः सर्वाः शाल्वेभ्योऽभ्यागता नृप।
आचख्युर्निहतं चैव स्वेनामात्येन तं द्विषम् ॥ १३४१ ॥
प्रयाहि राजन् भद्रं ते घुष्टस्ते नगरे जयः।
अध्यास्व चिररात्राय पितृपैतामहं पदम् ॥ १३४२ ॥
ततोऽभिवाद्य तान् वृद्धान् द्विजानाश्रमवासिनः।
तैश्चाभिपूजितः सर्वैः प्रययौ नगरं प्रति ॥ १३४३ ॥

ततोऽभिषिषिचुः प्रीत्या द्युमत्सेनं पुरोहिताः।
पुत्रं चास्य महात्मानं यौवराज्येऽभ्यषेचयन् ॥ १३४४ ॥
ततः कालेन महता सावित्र्याः कीर्तिवर्धनम्।
तद्वै पुत्रशतं जज्ञे शूराणामनिवर्तिनाम् ॥ १३४५ ॥
भ्रातॄणां सोदराणां च तथैवास्याभवच्छतम्।
मद्राधिपस्याश्वपतेर्मालव्यां सुमहद्बलम् ॥ १३४६ ॥
एवमात्मा पिता माता श्वश्रूः श्वशुर एव च ।
भर्तुः कुलं च सावित्र्या सर्वं कृच्छ्रात् समुद्धृतम् ॥ १३४७ ॥
तथैवैषा हि कल्याणी द्रौपदी शीलसम्मता।
तारयिष्यति वः सर्वान् सावित्रीव कुलाङ्गना ॥ १३४८ ॥
एवं स पाण्डवस्तेन अनुनीतो महात्मना।
विशोको विज्वरो राजन् काम्यके न्यवसत् तदा ॥ १३४९ ॥

## कुण्डलाहरणम्

(अ.३००) द्वादशे समतिक्रान्ते वर्षे प्राप्ते त्रयोदशे।
पाण्डूनां हितकृच्छक्रः कर्णं भिक्षितुमुद्यतः ॥ १३५० ॥
अभिप्रायमथो ज्ञात्वा महेन्द्रस्य विभावसुः।
स्वप्नान्ते निशि राजेन्द्र दर्शयामास रश्मिवान् ॥ १३५१ ॥
ब्राह्मणो वेदविद्भूत्वा सूर्यो योगार्द्धिरूपवान्।
हितार्थमब्रवीत् कर्णं सान्त्वपूर्वमिदं वचः ॥ १३५२ ॥
त्वं हि तात ददास्येव ब्राह्मणेभ्यः प्रयाचितम्।
वित्तं यच्चान्यदप्याहुर्न प्रत्याख्यासि कस्यचित् ॥ १३५३ ॥
त्वां तु चैवंविधं ज्ञात्वा स्वयं वै पाकशासनः।
आगन्ता कुण्डलार्थाय कवचं चैव भिक्षितुम् ॥ १३५४ ॥
तस्मै प्रयाचमानाय न देये कुण्डले त्वया।
अनुनेयः परं शक्त्या श्रेय एतद्धि ते परम् ॥ १३५५ ॥

कवचेन समायुक्तः कुण्डलाभ्यां च मानद।
अवध्यस्त्वं रणेऽरीणामिति विद्धि वचो मम ॥ १३५६ ॥
अहं तात सहस्रांशुः सौहृदात्त्वां निदर्शये।
कुरुष्वैतद्वचो मे त्वमेतच्छ्रेयः परं हि ते ॥ १३५७ ॥

कर्ण– प्रसादये त्वां वरदं प्रणयाच्च ब्रवीम्यहम्।
न निवार्यो व्रतादस्मादहं यद्यस्मि ते प्रियः १३५८ ॥
यद्यागच्छति मां शक्रो ब्राह्मणच्छद्मना वृतः।
दास्यामि विबुधश्रेष्ठ कुण्डले वर्म चोत्तमम् ॥ १३५९ ॥
न मे कीर्तिः प्रणश्येत त्रिषु लोकेषु विश्रुता।
वृणोमि कीर्तिं लोके हि जीवितेनापि भानुमन् ॥ १३६० ॥
कीर्तिमानश्नुते स्वर्गं हीनकीर्तिस्तु नश्यति।
कीर्तिर्हि पुरुषं लोके सञ्जीवयति मातृवत् ॥ १३६१ ॥
अकीर्तिर्जीवितं हन्ति जीवतोऽपि शरीरिणः।

सूर्य– माऽहितं कर्ण कार्षीस्त्वमात्मनः सुहृदां तथा ॥ १३६२ ॥
(अ.३०१) यस्त्वं प्राणविरोधेन कीर्तिमिच्छसि शाश्वतीम्।
सा ते प्राणान् समादाय गमिष्यति न संशयः ॥ १३६३ ॥
मृतस्य कीर्त्या किं कार्यं भस्मीभूतस्य देहिनः।
मृतः कीर्तिं न जानीते जीवन् कीर्तिं समश्नुते ॥ १३६४ ॥
मृतस्य कीर्तिर्मर्त्यस्य यथा माला गतायुषः।

कर्ण– भूयश्च शिरसा याचे प्रसाद्य च पुनः पुनः ॥ १३६५ ॥
(अ.३०२) इति ब्रवीमि तिग्मांशो त्वं तु मे क्षन्तुमर्हसि।
बिभेमि न तथा मृत्योर्यथा बिभ्येऽनृतादहम् ॥ १३६६ ॥
विशेषेण द्विजातीनां सर्वेषां सर्वदा सताम्।

सूर्य– यदि तात ददास्येते वज्रिणे कुण्डले शुभे ॥ १३६७ ॥
अभ्यर्थयेथा देवेशममोघार्थं पुरन्दरम्।
अमोघां देहि मे शक्तिममित्रविनिबर्हिणीम् ॥ १३६८ ॥

दास्यामि ते सहस्राक्ष कुण्डले वर्म चोत्तमम्।
इत्येव नियमेन त्वं दद्याः शक्राय कुण्डले ॥ १३६९ ॥
तया त्वं कर्ण सङ्ग्रामे हनिष्यसि रणे रिपून्।
एवमुक्त्वा सहस्रांशुः सहसाऽन्तरधीयत ॥ १३७० ॥

(अ.३०९) यदा च कर्णो राजेन्द्र भानुमन्तं दिवाकरम्।
स्तौति मध्यन्दिने प्राप्ते प्राञ्जलिः सलिलोत्थितः ॥ १३७१ ॥
तत्रैनमुपतिष्ठन्ति ब्राह्मणा धनहेतुना।
नादेयं तस्य तत्काले किञ्चिदस्ति द्विजातिषु ॥ १३७२ ॥
तमिन्द्रो ब्राह्मणो भूत्वा भिक्षां देहीत्युपस्थितः।
स्वागतं चेति राधेयस्तमथ प्रत्यभाषत ॥ १३७३ ॥

ब्राह्मण– यदेतत्सहजं वर्म कुण्डले च तवानघ।
(अ.३१०) एतदुत्कृत्य मे देहि यदि सत्यव्रतो भवान् ॥ १३७४ ॥

कर्ण– वर्मणा कुण्डलाभ्यां च शक्तिं मे देहि वासव।
एकमेवाहमिच्छामि रिपुं हन्तुं महाहवे ॥ १३७५ ॥
गर्जन्तं प्रतपन्तं च यतो मम भयं भवेत्।
उत्कृत्य तु प्रदास्यामि कुण्डले कवचं च ते ॥ १३७६ ॥
निकृत्तेषु तु गात्रेषु न मे बीभत्सता भवेत्।

इन्द्र– न ते बीभत्सता कर्ण भविष्यति कथञ्चन ॥ १३७७ ॥
व्रणश्चैव न गात्रेषु यस्त्वं नानृतमिच्छसि।
विद्यमानेषु शस्त्रेषु यद्यमोघामसंशये ॥ १३७८ ॥
प्रमत्तो मोक्ष्यसे चापि त्वय्येवैषा पतिष्यति।

कर्ण– संशयं परमं प्राप्य विमोक्ष्ये वासवीमिमाम् ॥ १३७९ ॥
यथा मामात्थ शक्र त्वं सत्यमेतद्ब्रवीमि ते।
ततः शक्तिं प्रज्वलितां प्रतिगृह्य विशाम्पते।
शस्त्रं गृहीत्वा निशितं सर्वगात्राण्यकृन्तत ॥ १३८० ॥

ततो दिव्या दुन्दुभयः प्रणेदुः
पपातोच्चैः पुष्पवर्षं च दिव्यम्।
दृष्ट्वा कर्णं शस्त्रसङ्कृत्तगात्रं
मुहुश्चापि स्मयमानं नृवीरम् ॥ १३८१ ॥
ततश्छित्त्वा कवचं दिव्यमङ्गा-
त्तथैवार्द्रं प्रददौ वासवाय।
तथोत्कृत्य प्रददौ कुण्डले ते
कर्णात्तस्मात् कर्मणा तेन कर्णः ॥ १३८२ ॥
ततः शक्रः प्रहसन् वञ्चयित्वा
कर्णं लोके यशसा योजयित्वा।
कृतं कार्यं पाण्डवानां हि मेने
ततः पश्चाद्दिवमेवोत्पपात ॥ १३८३ ॥

## पुनर्द्वैतवनागमनं यक्षप्रश्नाश्च

(अ.३११) विहाय काम्यकं राजा सह भ्रातृभिरच्युतः।
पुनर्द्वैतवनं रम्यमाजगाम युधिष्ठिरः ॥ १३८४ ॥
तस्मिन् प्रतिवसन्तस्ते यत्प्रापुः कुरुसत्तमाः।
वने क्लेशं सुखोदर्कं तत्प्रवक्ष्यामि ते शृणु ॥ १३८५ ॥
अजातशत्रुमासीनं भ्रातृभिः सहितं वने।
आगम्य ब्राह्मणस्तूर्णं सन्तप्तश्चेदमब्रवीत् ॥ १३८६ ॥
अरणीसहितं मन्थं समासक्तं वनस्पतौ।
मृगस्य घर्षमाणस्य विषाणे समसज्जत ॥ १३८७ ॥
तमादाय गतो राजंस्त्वरमाणो महामृगः।
आश्रमात्त्वरितः शीघ्रं प्लवमानो महाजवः ॥ १३८८ ॥
तस्य गत्वा पदं राजन्नासाद्य च महामृगम्।
अग्निहोत्रं न लुप्येत तदानयत पाण्डवाः ॥ १३८९ ॥

ब्राह्मणस्य वचः श्रुत्वा सन्तप्तोऽथ युधिष्ठिरः।
धनुरादाय कौन्तेयः प्राद्रवद्भ्रातृभिः सह ॥ १३९० ॥
तेषां प्रयतमानानां नादृश्यत महामृगः।
अपश्यन्तो मृगं श्रान्ता दुःखं प्राप्ता मनस्विनः ॥ १३९१ ॥
शीतलच्छायमागम्य न्यग्रोधं गहने वने।
क्षुत्पिपासापरीताङ्गाः पाण्डवाः समुपाविशन् ॥ १३९२ ॥
(अ.३१२) ततो युधिष्ठिरो राजा नकुलं वाक्यमब्रवीत्।
एते हि भ्रातरः श्रान्तास्तव तात पिपासिताः ॥ १३९३ ॥
गच्छ सौम्य ततः शीघ्रं तूर्णं पानीयमानय।
नकुलस्तु तथेत्युक्त्वा भ्रातुर्ज्येष्ठस्य शासनात् ॥ १३९४ ॥
प्राद्रवद्यत्र पानीयं शीघ्रं चैवाऽन्वपद्यत।
पातुकामस्ततो वाचमन्तरिक्षात् स शुश्रुवे ॥ १३९५ ॥
मा तात साहसं कार्षीर्मम पूर्वपरिग्रहः।
प्रश्नानुक्त्वा तु माद्रेय ततः पिब हरस्व च ॥ १३९६ ॥
अनादृत्य तु तद्वाक्यं नकुलः सुपिपासितः।
अपिबच्छीतलं तोयं पीत्वा च निपपात ह ॥ १३९७ ॥
चिरयमाणे नकुले कुन्तीपुत्रो युधिष्ठिरः।
अब्रवीद्भ्रातरं वीरं सहदेवमरिन्दमम् ॥ १३९८ ॥
भ्राता हि चिरयातो नः सहदेव तवाग्रजः।
तथैवानय सोदर्यं पानीयं च त्वमानय ॥ १३९९ ॥
सहदेवस्तथेत्युक्त्वा तां दिशं प्रत्यपद्यत।
ददर्श च हतं भूमौ भ्रातरं नकुलं तदा ॥ १४०० ॥
भ्रातृशोकाभिसन्तप्तस्तृषया च प्रपीडितः।
अभिदुद्राव पानीयं ततो वागभ्यभाषत॥ १४०१ ॥
मा तात साहसं कार्षीर्मम पूर्वपरिग्रहः।
प्रश्नानुक्त्वा यथाकामं पिबस्व च हरस्व च ॥ १४०२ ॥

अनादृत्य तु तद्वाक्यं सहदेवः पिपासितः।
अपिबच्छीतलं तोयं पीत्वा च निपपात ह ॥ १४०३ ॥
अथाब्रवीत् स विजयं कुन्तीपुत्रो युधिष्ठिरः।
भ्रातरौ ते परिगतौ बीभत्सो शत्रुकर्शन ॥ १४०४ ॥
तौ चैवानय भद्रं ते पानीयं च त्वमानय।
एवमुक्तो गुडाकेशः प्रगृह्य सशरं धनुः ॥ १४०५ ॥
आमुक्तखड्गो मेधावी तत्सरः प्रत्यपद्यत।
तौ ददर्श हतौ तत्र भ्रातरौ श्वेतवाहनः ॥ १४०६ ॥
सव्यसाची ततः श्रान्तः पानीयं सोऽभ्यधावत।
अभिधावंस्ततो वाक्यमन्तरिक्षात् स शुश्रुवे ॥ १४०७ ॥
कौन्तेय यदि प्रश्नांस्तान् मयोक्तान्प्रतिपत्स्यसे
ततः पास्यसि पानीयं हरिष्यसि च भारत ॥ १४०८ ॥
एवमुक्तस्ततः पार्थः सव्यसाची धनञ्जयः।
अवज्ञायैव तां वाचं पीत्वैव निपपात ह ॥ १४०९ ॥
अथाब्रवीद्भीमसेनं कुन्तीपुत्रो युधिष्ठिरः।
नकुलः सहदेवश्च बीभत्सुश्च परन्तप ॥ १४१० ॥
चिरं गतास्तोयहेतोर्न चागच्छन्ति भारत।
तांश्चैवानय भद्रं ते पानीयं च त्वमानय ॥ १४११ ॥
भीमसेनस्तथेत्युक्त्वा तं देशं प्रत्यपद्यत।
यत्र ते पुरुषव्याघ्रा भ्रातरोऽस्य निपातिताः ॥ १४१२ ॥
तान् दृष्ट्वा दुःखितो भीमस्तृषया च प्रपीडितः।
ततोऽभ्यधावत् पानीयं पिपासुः पुरुषर्षभः ॥ १४१३ ॥
यक्ष— मा तात साहसं कार्षीर्मम पूर्वपरिग्रहः।
प्रश्नानुक्त्वा तु कौन्तेय ततः पिब हरस्व च ॥ १४१४ ॥
एवमुक्तस्तदा भीमो यक्षेणामिततेजसा।
अनुक्त्वैव तु तान् प्रश्नान् पीत्वैव निपपात ह ॥ १४१५ ॥

ततः कुन्तीसुतो राजा प्रचिन्त्य पुरुषर्षभः।
व्यपेतजननिर्घोषं प्रविवेश महावनम्।
ददर्श तत्सरः श्रीमान्विश्वकर्मकृतं यथा ॥ १४१६ ॥

(अ.३१३) स ददर्श हतान् भ्रातॄन् लोकपालानिव च्युतान्।
बुद्ध्या विचिन्तयामास वीराः केन निपातिताः ॥ १४१७ ॥
नैषां शस्त्रप्रहारोऽस्ति पदं नेहास्ति कस्यचित्।
भूतं महदिदं मन्ये भ्रातरो येन मे हताः ॥ १४१८ ॥
एकैकशश्चौघबलानिमान् पुरुषसत्तमान्।
कोऽन्यः प्रतिसमासेत कालान्तकयमादृते ॥ १४१९ ॥
एतेन व्यवसायेन तत् तोयं व्यवगाढवान्।
गाहमानश्च तत्तोयमन्तरिक्षात् स शुश्रुवे ॥ १४२० ॥
मा तात साहसं कार्षीर्मम पूर्वपरिग्रह ।
प्रश्नानुक्त्वा तु कौन्तेय ततः पिब हरस्व च ॥ १४२१ ॥

युधि– न चाहं कामये यक्ष तव पूर्वपरिग्रहम्।
यथाप्रज्ञं तु ते प्रश्नान् प्रतिवक्ष्यामि पृच्छ माम् ॥ १४२२ ॥

यक्ष– केनस्विच्छ्रोत्रियो भवति केनस्विद्विन्दते महत्।
केनस्विद् द्वितीयवान् भवति राजन् केन च बुद्धिमान् ॥१४२३॥

युधि– श्रुतेन श्रोत्रियो भवति तपसा विन्दते महत्।
धृत्या द्वितीयवान् भवति बुद्धिमान् वृद्धसेवया ॥ १४२४ ॥

यक्ष– किंस्वित् सुप्तं न निमिषति किंस्विज्जात न चोपति।
कस्यस्विद्धृदय नास्ति किंस्विद्वेगेन वर्धते ॥ १४२५ ॥

युधि– मत्स्य. सुप्तो न निमिषत्यण्डं जातं न चोपति।
अश्मनो हृदयं नास्ति नदी वेगेन वर्धते ॥ १४२६ ॥

यक्ष– किंस्विदेकपदं धर्म्यं किंस्विदेकपद यश.।
किंस्विदेकपदं स्वर्ग्यं किंस्विदेकपदं सुखम् ॥ १४२७ ॥

युधि- दाक्ष्यमेकपदं धर्म्यं दानमेकपदं यशः।
सत्यमेकपदं स्वर्ग्यं शीलमेकपदं सुखम्॥ १४२८॥

यक्ष- धन्यानामुत्तमं किंस्विद् धनानां स्यात् किमुत्तमम्।
लाभानामुत्तमं किं स्यात् सुखानां स्यात् किमुत्तमम्॥१४२९॥

युधि- धन्यानामुत्तमं दाक्ष्यं धनानामुत्तमं श्रुतम्।
लाभानां श्रेय आरोग्यं सुखानां तुष्टिरुत्तमा॥ १४३०॥

यक्ष- किं नु हित्वा प्रियो भवति किं नु हित्वा न शोचति।
किं नु हित्वाऽर्थवान भवति किं नु हित्वा सुखी भवेत्॥१४३१॥

युधि- मानं हित्वा प्रियो भवति क्रोधं हित्वा न शोचति।
कामं हित्वाऽर्थवान् भवति लोभं हित्वा सुखी भवेत्॥१४३२॥

यक्ष- मृत. कथं स्यात् पुरुषः कथं राष्ट्रं मृतं भवेत्।

युधि- मृतो दरिद्रः पुरुषो मृतं राष्ट्रमराजकम्॥ १४३३॥

यक्ष- तपः किंलक्षणं प्रोक्तं को दमश्च प्रकीर्तित.।
क्षमा च का परा प्रोक्ता का च ह्री. परिकीर्तिता॥ १४३४॥

युधि- तपः स्वधर्मवर्तित्वं मनसो दमनं दमः।
क्षमा द्वन्द्वसहिष्णुत्वं ह्रीरकार्यनिवर्तनम्॥ १४३५॥

यक्ष- कः शत्रुर्दुर्जयः पुंसां कश्च व्याधिरनन्तकः।
कीदृशश्च स्मृत. साधुरसाधुः कीदृशः स्मृत.॥ १४३६॥

युधि- क्रोध. सुदुर्जयः शत्रुर्लोभो व्याधिरनन्तकः।
सर्वभूतहितः साधुरसाधुर्निर्दय. स्मृतः॥ १४३७॥

यक्ष- किं स्थैर्यमृषिभिः प्रोक्तं किं च धैर्यमुदाहृतम्।
स्नानं च किं परं प्रोक्तं दानं च किमिहोच्यते॥ १४३८॥

युधि- स्वधर्मे स्थिरता स्थैर्यं धैर्यमिन्द्रियनिग्रहः।
स्नानं मनोमलत्यागो दानं वै भूतरक्षणम्॥ १४३९॥

यक्ष- को मोदते किमाश्चर्यं कः पन्थाः का च वार्तिका।
वद मे चतुरः प्रश्नान् मृता जीवन्तु बान्धवा.॥ १४४०॥

युधि- पञ्चमेऽहनि षष्ठे वा शाकं पचति स्वे गृहे।
अनृणी चाप्रवासी च स वारिचर मोदते ॥ १४४१ ॥
अहन्यहनि भूतानि गच्छन्तीह यमालयम्।
शेषाः स्थावरमिच्छन्ति किमाश्चर्यमतः परम् ॥ १४४२ ॥
तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना
नैको ऋषिर्यस्य मतं प्रमाणम्।
धर्मस्य तत्त्वं निहितं गुहायां
महाजनो येन गतः स पन्थाः ॥ १४४३ ॥
अस्मिन् महामोहमये कटाहे
सूर्याग्निना रात्रिदिवेन्धनेन।
मासर्तुदर्वीपरिघट्टनेन
भूतानि कालः पचतीति वार्ता ॥ १४४४ ॥

यक्ष- व्याख्याता मे त्वया प्रश्ना याथातथ्यं परन्तप।
तस्मात्त्वमेकं भ्रातॄणां यमिच्छसि स जीवतु ॥ १४४५ ॥

युधि- श्यामो य एष रक्ताक्षो बृहच्छाल इवोत्थितः।
व्यूढोरस्को महाबाहुर्नकुलो यक्ष जीवतु ॥ १४४६ ॥

यक्ष- प्रियस्ते भीमसेनोऽयमर्जुनो वः परायणम्।
स कस्मान्नकुलो राजन् सापत्नं जीवमिच्छसि ॥ १४४७ ॥

युधि- धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः।
तस्माद्धर्मं न त्यजामि मा नो धर्मो हतोऽवधीत् ॥ १४४८ ॥
आनृशंस्यं परो धर्मः परमार्थाच्च मे मतम्।
आनृशंस्यं चिकीर्षामि नकुलो यक्ष जीवतु ॥ १४४९ ॥
कुन्ती चैव तु माद्री च द्वे भार्ये तु पितुर्मम।
उभे सपुत्रे स्यातां वै इति मे धीयते मतिः ॥ १४५० ॥
यथा कुन्ती तथा माद्री विशेषो नास्ति मे तयोः।
मातृभ्यां सममिच्छामि नकुलो यक्ष जीवतु ॥ १४५१ ॥

यक्ष- तस्य तेऽर्थाच्च कामाच्च आनृशंस्य परं मतम्।
तस्मात्ते भ्रातर· सर्वे जीवन्तु भरतर्षभ ॥ १४५२ ॥

(अ ३१४) ततस्ते यक्षवचनादुदतिष्ठन्त पाण्डवा ।
क्षुत्पिपासे च सर्वेषां क्षणेन व्यपगच्छताम् ॥ १४५३ ॥

यक्ष- अहं ते जनकस्तात धर्मो मृदुपराक्रम।
आनृशंस्येन तुष्टोऽस्मि वरं दास्यामि तेऽनघ ॥ १४५४ ॥

युधि- अरणीसहितं यस्य मृगो ह्यादाय गच्छति।
तस्याग्नयो न लुप्येरन् प्रथमोऽस्तु वरो मम ॥ १४५५ ॥
ददानीत्येव भगवानुत्तरं प्रत्यपद्यत ।
अन्यं वरय भद्रं ते वरं त्वममरोपम ॥ १४५६ ॥

युधि- वर्षाणि द्वादशारण्ये त्रयोदशमुपस्थितम्।
तत्र नो नाभिजानीयुर्वसतो मनुजा· क्वचित् ॥ १४५७ ॥
ददानीत्येव भगवानुत्तरं प्रत्यपद्यत।
भूयश्चाश्वासयामास कौन्तेय सत्यविक्रमम् ॥ १४५८ ॥
वर्षं त्रयोदशमिदं मत्प्रसादात्कुरूद्वहा ।
विराटनगरे गूढा अविज्ञाताश्चरिष्यथ ॥ १४५९ ॥
अरणीसहितं चेद ब्राह्मणाय प्रयच्छत।
जिज्ञासार्थं मया ह्येतदाहृतं मृगरूपिणा ॥ १४६० ॥
इत्युक्त्वाऽन्तर्दधे धर्मो भगवाल्लोकभावन·।
समेता पाण्डवाश्चैव सुखसुप्ता मनस्विन ॥ १४६१ ॥
उपेत्य चाश्रमं वीरा सर्व एव गतक्लमा ।
आरणेयं ददुस्तस्मै ब्राह्मणाय तपस्विने ॥ १४६२ ॥

(अ ३१५) धर्मेण तेऽभ्यनुज्ञाता· पाण्डवा सत्यविक्रमा·।
अज्ञातवासं वत्स्यन्तश्छन्ना वर्षं त्रयोदशम् ॥ १४६३ ॥
उपोपविष्टा विद्वास· सहिता· संशितव्रता ।
ये तद्भक्ता वसन्ति स्म वनवासे तपस्विन· ॥ १४६४ ॥

तानब्रुवन् महात्मानः स्थिताः प्राञ्जलयस्तदा ।
उषिताश्च वने कृच्छ्रे वयं द्वादशवत्सरान् ॥ १४६५ ॥
अज्ञातवाससमयं शेषं वर्षं त्रयोदशम् ।
तद्वसामो वयं छन्नास्तदनुज्ञातुमर्हथ ॥ १४६६ ॥
अपि नस्तद्भवेद्भूयो यद्वयं ब्राह्मणैः सह ।
समस्ताः स्वेषु राष्ट्रेषु स्वराज्यस्था भवेमहि ॥ १४६७ ॥
अथ धौम्योऽब्रवीद्वाक्यं महार्थं नृपतिं तदा ।
देवैरप्यापदः प्राप्ताश्छन्नैश्च बहुशस्तथा ॥ १४६८ ॥
तत्र तत्र सपत्नानां निग्रहार्थं महात्मभिः ।
विष्णुना वसता चापि गृहे दशरथस्य वै ॥ १४६९ ॥
दशग्रीवो हतश्छन्नं संयुगे भीमकर्मणा ।
एवमेव महात्मानः प्रच्छन्नास्तत्र तत्र ह ॥ १४७० ॥
अजयञ्छात्रवान् युद्धे तथा त्वमपि जेष्यसि ।
अथाब्रवीन्महाबाहुर्भीमसेनो महाबलः ॥ १४७१ ॥
राजानं बलिनां श्रेष्ठो गिरा सम्परिहर्षयन् ।
न वयं तत्प्रहास्यामो यस्मिन् मोक्ष्यति नो भवान् ॥ १४७२ ॥
भवान् विधत्तां तत्सर्वं क्षिप्रं जेष्यामहे रिपून् ।
इत्युक्ते भीमसेनेन ब्राह्मणाः परमाशिषा ॥ १४७३ ॥
उक्त्वा चापृच्छ्य भरतान्यथा स्वान्स्वान्ययुर्गृहान् ।
सह धौम्येन विद्वांसस्तथा पञ्च च पाण्डवाः ॥ १४७४ ॥
उत्थाय प्रययुर्वीराः कृष्णामादाय धन्विनः ।
क्रोशमात्रमुपागम्य तस्माद्देशान्निमित्ततः ॥ १४७५ ॥
श्वोभूते मनुजव्याघ्राश्छन्नवासार्थमुद्यताः ।
पृथक् शास्त्रविदः सर्वे सर्वे मन्त्रविशारदाः ।
सन्धिविग्रहकालज्ञा मन्त्राय समुपाविशन् ॥ १४७६ ॥

## उपकथा १ उर्वशीशापः

(अ ४५) प्रार्थनीयैर्गुणगणे फाल्गुने जातमन्मथा।
(अ ४६) उर्वशी चाकरोत्स्नानं पार्थदर्शनलालसा ॥ १ ॥
निर्गम्य चन्द्रोदयने विगाढे रजनीमुखे।
प्रस्थिता सा पृथुश्रोणी पार्थस्य भवनं प्रति ॥ २ ॥
सुसूक्ष्मेणोत्तरीयेण मेघवर्णेन राजता।
तनुरभ्रावृता व्योम्नि चन्द्रलेखेव गच्छती ॥ ३ ॥
ततः प्राप्ता क्षणेनैव मनःपवनगामिनी।
भवनं पाण्डुपुत्रस्य फाल्गुनस्य शुचिस्मिता ॥ ४ ॥
दृष्ट्वैव चोर्वशीं पार्थो लज्जासंवृतलोचनः।
तदाऽभिवादनं कृत्वा गुरुपूजां प्रयुक्तवान् ॥ ५ ॥

अर्जुन– अभिवादये त्वा शिरसा प्रवराप्सरसां वरे।
किमाज्ञापयसे देवि प्रेष्यस्तेऽहमुपस्थितः ॥ ६ ॥

उर्वशी– उपस्थाने महेन्द्रस्य वर्तमाने मनोरमे।
तवागमनतो वृत्ते स्वर्गस्य परमोत्सवे ॥ ७ ॥
त्वं किलानिमिषः पार्थ मामेकां तत्र दृष्टवान्।
ततः शक्रेण सन्दिष्टश्चित्रसेनो ममान्तिकम् ॥ ८ ॥
प्राप्तः कमलपत्राक्ष स च मामब्रवीदथ।
त्वत्कृतेऽहं सुरेशेन प्रेषितो वरवर्णिनि ॥ ९ ॥
प्रियं कुरु महेन्द्रस्य मम चैवात्मनश्च ह।
शक्रतुल्यं रणे शूरं सदौदार्यगुणान्वितम् ॥ १० ॥
पार्थं प्रार्थय सुश्रोणि त्वमित्येव तदाब्रवीत्।
ततोऽहं समनुज्ञाता तेन पित्रा च तेऽनघ ॥ ११ ॥
तवान्तिकमनुप्राप्ता शुश्रूषितुमरिंदम।
त्वद्गुणाकृष्टचित्ताहमनङ्गवशमागता ॥ १२ ॥

चिराभिलषितो वीर ममाप्येष मनोरथः।
तां तथा ब्रुवतीं श्रुत्वा भृशं लज्जावृतोऽर्जुनः ॥ १३ ॥
उवाच कर्णौ हस्ताभ्यां पिधाय त्रिदशालये।
यथा कुन्ती महाभागा यथेन्द्राणी शची मम ॥ १४ ॥
तथा त्वमपि कल्याणी नात्र कार्या विचारणा।
यच्चेक्षितासि विस्पष्टं विशेषेण मया शुभे ॥ १५ ॥
तच्च कारणपूर्वं हि शृणु सत्यं शुचिस्मिते।
इयं पौरववंशस्य जननी मुदितेति ह ॥ १६ ॥
त्वामहं दृष्टवांस्तत्र विज्ञायोत्फुल्ललोचन।

उर्वशी- अनावृताश्च सर्वाः स्म देवराजाभिनन्दन ॥ १७ ॥
गुरुस्थाने न मां वीर नियोक्तुं त्वमिहार्हसि।
पूरोर्वंशे हि ये पुत्रा नप्तारो वा त्विहागताः ॥ १८ ॥
तपसा रमयन्त्यस्मान्न च तेषां व्यतिक्रमः।
तत्प्रसीद न मामार्तां विसर्जयितुमर्हसि ॥ १९ ॥
हृच्छयेन च सन्तप्ता भक्ता च भज मानद।

अर्जुन- शृणु सत्यं वरारोहे यत्त्वा वक्ष्याम्यनिन्दिते ॥ २० ॥
यथा कुन्ती च माद्री च शची चैव ममानघे।
तथा च वंशजननी त्वं हि मेऽद्य गरीयसी ॥ २१ ॥
गच्छ मूर्ध्ना प्रपन्नोऽस्मि पादौ ते वरवर्णिनि।
त्वं हि मे मातृवत्पूज्या रक्ष्योऽहं पुत्रवत्त्वया ॥ २२ ॥
एवमुक्ता तु पार्थेन उर्वशी क्रोधमूर्च्छिता।
वेपन्ती भ्रुकुटीवक्रा शशापाथ धनञ्जयम् ॥ २३ ॥
तव पित्राभ्यनुज्ञातां स्वयं च गृहमागताम्।
यस्मान्मां नाभिनन्देथा कामबाणवशङ्गताम् ॥ २४ ॥
तस्मात्त्वं नर्तनः पार्थ स्त्रीमध्ये मानवर्जितः।
अपुमानिति विख्यातः षण्ढवद्विचरिष्यसि ॥ २५ ॥

एवं दत्वाऽर्जुने शापं स्फुरदोष्ठी श्वसन्त्यथ ;
पुनः प्रत्यागता क्षिप्रमुर्वशी गृहमात्मनः ॥ २६ ॥
ततोऽर्जुनस्त्वरमाणश्चित्रसेनमरिंदमः ।
सम्प्राप्य रजनीवृत्तं तदुर्वश्या यथातथा ॥ २७ ॥
निवेदयामास तदा चित्रसेनाय पाण्डवः ।
तत्र चैवं यथावृत्तं शापं चैव पुनः पुनः ॥ २८ ॥
अवेदयच्च शक्रस्य चित्रसेनोऽपि सर्वशः ।
तत आनाय्य तनयं विविक्ते हरिवाहनः ॥ २९ ॥
सान्त्वयित्वा शुभैर्वाक्यैः स्मयमानोऽभ्यभाषत ।
सुपुत्राद्य पृथा तात त्वया पुत्रेण सत्तम ॥ ३० ॥
ऋषयोऽपि हि धैर्येण जिता वै ते महाभुज ।
यत्तु दत्तवती शापमुर्वशी तव मानद ॥ ३१ ॥
स चापि तेऽर्थकृत्तात साधकश्च भविष्यति ।
अज्ञातवासो वस्तव्यो भवद्भिर्भूतलेऽनघ ॥ ३२ ॥
वर्षे त्रयोदशे वीर तं तत्र क्षपयिष्यसि ।
तेन नर्तनवेषेण अपुंस्त्वेन तथैव च ॥ ३३ ॥
वर्षमेकं विहृत्यैव ततः पुंस्त्वमवाप्स्यसि ।
एवमुक्तस्तु शक्रेण फाल्गुनः परवीरहा ।
मुदं परमिकां लेभे न च शापं व्यचिन्तयत् ॥ ३४ ॥ १५१

## उपकथा २ अगस्त्योपाख्यानम् ।

लोमश– इल्वलो नाम दैतेय आसीत्कौरवनन्दन ।
(अ.९९) मणिमत्यां पुरि पुरा वातापिस्तस्य चानुजः ॥ १ ॥
स ब्राह्मणं तपोयुक्तमुवाच दितिनन्दनः ।
पुत्रं मे भगवानेकमिन्द्रतुल्यं प्रयच्छतु ॥ २ ॥

तस्मै स ब्राह्मणो नादात्पुत्रं वासवसम्मितम्।
चुक्रोध सोऽसुरस्तस्य ब्राह्मणस्य ततो भृशम्॥ ३॥
स वाह्वयति यं वाचा गतं वैवस्वतक्षयम्।
स पुनर्देहमास्थाय जीवन् स्म प्रत्यदृश्यत॥ ४॥
ततो वातापिमसुरं छागं कृत्वा सुसंस्कृतम्।
तं ब्राह्मणं भोजयित्वा पुनरेव समाह्वयत्॥ ५॥
तस्य पार्श्वं विनिर्भिद्य ब्राह्मणस्य महासुरः।
वातापिः प्रहसन् राजन्निश्चक्राम विशाम्पते॥ ६॥
एवं स ब्राह्मणान्राजन्भोजयित्वा पुनः पुनः।
हिंसयामास दैतेय इल्वलो दुष्टचेतनः॥ ७॥
अगस्त्यश्चापि भगवानेतस्मिन् काल एव तु।
पितॄन्ददर्श गर्ते वै लम्बमानानधोमुखान्॥ ८॥
ते तस्मै कथयामासुर्वयं ते पितरः स्वकाः।
गर्तमेतमनुप्राप्ता लम्बामः प्रसवार्थिनः॥ ९॥
स तानुवाच तेजस्वी सत्यधर्मपरायणः।
करिष्ये पितरः कामं व्येतु वो मानसो ज्वरः॥ १०॥
स तस्य तस्य सत्त्वस्य तत्तदङ्गमनुत्तमम्।
सङ्गृह्य तत्समैरङ्गैर्निर्ममे स्त्रियमुत्तमाम्॥ ११॥
स तां विदर्भराजस्य पुत्रार्थं तप्यतस्तपः।
निर्मितामात्मनोर्थाय मुनिः प्रादान्महातपाः॥ १२॥
जातमात्रां च तां दृष्ट्वा वैदर्भः पृथिवीपतिः।
प्रहर्षेण द्विजातिभ्यो न्यवेदयत भारत॥ १३॥
अभ्यनन्दन्त तां सर्वे ब्राह्मणा वसुधाधिप।
लोपामुद्रेति तस्याश्च चक्रिरे नाम ते द्विजाः॥ १४॥
(अ.९७) यदा त्वमन्यतागस्त्यो गार्हस्थ्ये तां क्षमामिति।
तदाभिगम्य प्रोवाच वैदर्भं पृथिवीपतिम्॥ १५॥

राजन्निवेशे बुद्धिर्मे वर्तते पुत्रकारणात्।
वरये त्वा महीपाल लोपामुद्रां प्रयच्छ मे ॥ १६ ॥
दुहितुर्वचनाद्राजा सोऽगस्त्याय महात्मने।
लोपामुद्रां ततः प्रादाद्विधिपूर्वं विशाम्पते ॥ १७ ॥
ततश्चीराणि जग्राह वल्कलान्यजिनानि च।
समानव्रतचर्या च बभूवायतलोचना ॥ १८ ॥
गङ्गाद्वारमथागम्य भगवानृषिसत्तमः।
उग्रमातिष्ठत तपः सह पत्न्यानुकूलया ॥ १९ ॥
स तस्याः परिचारेण शौचेन च दमेन च।
श्रिया रूपेण च प्रीतो मैथुनायाजुहाव ताम् ॥ २० ॥
ततः सा प्राञ्जलिर्भूत्वा लज्जमानेव भाविनी।
तदा सप्रणयं वाक्यं भगवन्तमथाब्रवीत् ॥ २१ ॥
यथा पितुर्गृहे विप्र प्रासादे शयनं मम।
तथाविधे त्वं शयने मामुपैतुमिहार्हसि ॥ २२ ॥
अन्यथा नोपतिष्ठेयं चीरकाषायवासिनी।
नैवापवित्रो विप्रर्षे भूषणोयं कथञ्चन ॥ २३ ॥
(अ ९८) ततो जगाम कौरव्य सोऽगस्त्यो भिक्षितुं वसु।
श्रुतर्वाणं महीपालं यं वेदाभ्यधिकं नृपैः ॥ २४ ॥
अगस्त्य- वित्तार्थिनमनुप्राप्तं विद्धि मां पृथिवीपते।
यथाशक्त्यविहिंस्यान्यान्संविभागं प्रयच्छ मे ॥ २५ ॥
तत आयव्ययौ पूर्णौ तस्मै राजा न्यवेदयत्।
तत आयव्ययौ दृष्ट्वा समौ सममतिर्द्विजः ॥ २६ ॥
सर्वथा प्राणिनां पीडामुपादानादमन्यत।
स श्रुतर्वाणमादाय ब्रध्नश्वमगमत्ततः ॥ २७ ॥
अगस्त्य- वित्तकामाविह प्राप्तौ विद्ध्यावां पृथिवीपते।
यथाशक्त्यविहिंस्यान्यान्संविभागं प्रयच्छ नौ ॥ २८ ॥

तत आयव्ययौ पूर्णौ ताभ्यां राजा न्यवेदयत् ।
तत आयव्ययौ दृष्ट्वा समौ सममतिर्द्विजः ॥ २९ ॥
सर्वथा प्राणिनां पीडामुपादानादमन्यत ।
पौरुकुत्सं ततो जग्मुस्त्रसदस्युं महाधनम् ॥ ३० ॥
अगस्त्यश्च श्रुतर्वा च ब्रध्नश्वश्च महीपतिः ।
अगस्त्य– वित्तकामानिह प्राप्तान्विद्धि नः पृथिवीपते ॥ ३१ ॥
यथाशक्त्यविहिंस्यान्यान्संविभागं प्रयच्छ नः ।
तत आयव्ययौ पूर्णौ तेषां राजा न्यवेदयत् ॥ ३२ ॥
तत आयव्ययौ दृष्ट्वा समौ सममतिर्द्विजः ।
सर्वथा प्राणिनां पीडामुपादानादमन्यत ॥ ३३ ॥
ततस्ते सहिता राजन्निल्वलं समुपाद्रवन् ।
(अ.९९) तेषां ततोऽसुरश्रेष्ठस्त्वातिथ्यमकरोत्तदा ॥ ३४ ॥
वातापिं संस्कृतं दृष्ट्वा मेषभूतं महासुरम् ।
तं पर्यवेषद्दैत्येन्द्र इल्वलः प्रहसन्निव ॥ ३५ ॥
अगस्त्य एव कृत्स्नं तु वातापिं बुभुजे ततः ।
भुक्तवत्यसुरोऽऽह्वानमकरोत्तस्य चेल्वलः ॥ ३६ ॥
तं प्रहस्याब्रवीद्राजन्नगस्त्यो मुनिसत्तमः ।
कुतो निष्क्रमितुं शक्तो मया जीर्णस्तु सोऽसुरः ॥ ३७ ॥
इल्वलस्तु विषण्णोऽभूद्दृष्ट्वा जीर्णं महासुरम् ।
प्राञ्जलिश्च सहामात्यैरिदं वचनमब्रवीत् ॥ ३८ ॥
किमर्थमुपयाताः स्थ ब्रूत किं करवाणि वः ।
प्रत्युवाच ततोऽगस्त्यः प्रहसन्निल्वलं तदा ॥ ३९ ॥
यथाशक्त्यविहिंस्यान्यान्संविभागं प्रयच्छ नः ।
ततः संपथितो दैत्यो ददावभ्यधिकं वसु ॥ ४० ॥
अगस्त्येनाऽभ्यनुज्ञाता जग्मू राजर्षयस्तदा ।
कृतवांश्च मुनिः सर्वं लोपामुद्राचिकीर्षितम् ॥ ४१ ॥

लोपामुद्रा– कृतवानसि तत्सर्वं भगवन्मम काङ्क्षितम्।
उत्पादय सकृन्महामपत्यं वीर्यवत्तरम् ॥ ४२ ॥
अगस्त्य– सहस्रं तेऽस्तु पुत्राणां शतं वा दशसंमितम्।
दश वा शततुल्याः स्युरेको वापि सहस्रजित् ॥ ४३ ॥
लोपामुद्रा– सहस्रसम्मित पुत्र एकोऽप्यस्तु तपोधन।
एको हि बहुभि· श्रेयान्विद्वान्साधुरसाधुभिः ॥ ४४ ॥
स तथेति प्रतिज्ञाय तया समभवन्मुनि·।
तत आधाय गर्भं तमगमद्वनमेव स· ॥ ४५ ॥
तस्मिन् वनगते गर्भो ववृधे सप्तशारदान्।
सप्तमेऽब्दे गते चापि प्राच्यवत्स महाकविः ॥ ४६ ॥
स बाल एव तेजस्वी पितुस्तस्य निवेशने।
इध्मानां भारमाजह्रे इध्मवाहस्ततोऽभवत् ॥ ४७ ॥
एवं स जनयामास भारतापत्यमुत्तमम्।
लेभिरे पितरश्चास्य लोकान्राजन्यथेप्सितान् ॥ ४८ ॥
लोमश– आसन् कृतयुगे घोरा दानवा युद्धदुर्मदा।
(अ १००) कालकेया इति ख्याता गणा परमदारुणाः ॥ ४९ ॥
(अ.१०२) समुद्र ते समाश्रित्य वरुणं निधिमम्भस।
कालेया सम्प्रवर्तन्त त्रैलोक्यस्य विनाशने ॥ ५० ॥
ते रात्रौ समभिक्रुद्धा भक्षयन्ति सदा मुनीन्।
आश्रमेषु च ये सन्ति पुण्येष्वायतनेषु च ॥ ५१ ॥
जगत्युपशम याते नष्टयज्ञोत्सवक्रिये।
आजग्मु· परमामार्तिं त्रिदशा मनुजेश्वर ॥ ५२ ॥
(अ.१०३) तेऽभिगम्य महात्मानं मैत्रावरुणिमच्युतम्।
आश्रमस्थं तपोराशिं कर्मभि· स्वैरभिष्टुवन् ॥ ५३ ॥
(अ.१०४) त्रिदशानां वच श्रुत्वा मैत्रावरुणिरब्रवीत्।
किमर्थमभियाताः स्थ वरं मत्त· कमिच्छथ।
एवमुक्तास्ततस्तेन देवता मुनिमब्रुवन् ॥ ५४ ॥

एवं त्वयेच्छाम कृतं हि कार्यं
महार्णवं पीयमानं महात्मन्।
ततो वधिष्याम सहानुबन्धान्
कालेयसंज्ञान्सुरविद्विषस्तान् ॥ ५५ ॥
त्रिदशानां वचः श्रुत्वा तथेति मुनिरब्रवीत्।
करिष्ये भवतां कामं लोकानां च महत्सुखम् ॥ ५६ ॥
एवमुक्त्वा ततोऽगच्छत्समुद्रं सरितां पतिम्।
ऋषिभिश्च तपःसिद्धैः सार्धं देवैश्च सुव्रत ॥ ५७ ॥
(अ.१०५) समुद्रं स समासाद्य वारुणिर्भगवानृषिः।
समुद्रमपिबत्क्रुद्धः सर्वलोकस्य पश्यतः ॥ ५८ ॥
दृष्ट्वा कृतं निःसलिलं महार्णवं
सुराः समस्ताः परमप्रहृष्टाः।
प्रगृह्य दिव्यानि वरायुधानि
तान्दानवाञ्जघ्नुरदीनसत्त्वाः ॥ ५९ ॥ १५६९ ॥

उपकथा ३ गङ्गावतरणम्

(अ.१०६) इक्ष्वाकूणां कुले जातः सगरो नाम पार्थिवः।
(अ.१०७) षष्टिः पुत्रसहस्राणि तस्याप्रतिमतेजसः ॥ १ ॥
रुद्रप्रसादाद्राजर्षेः समजायन्त पार्थिव।
ततः काले बहुतिथे व्यतीते भरतर्षभ ॥ २ ॥
दीक्षितः सगरो राजा हयमेधेन वीर्यवान्।
तस्याश्वो व्यचरद्भूमिं पुत्रैः स परिरक्षितः ॥ ३ ॥
समुद्रं स समासाद्य निस्तोयं भीमदर्शनम्।
रक्ष्यमाणः प्रयत्नेन तत्रैवान्तरधीयत ॥ ४ ॥
ततस्ते पितुराज्ञाय दिक्षु सर्वासु तं हयम्।
अमार्गन्त महाराज सर्वं च पृथिवीतलम् ॥ ५ ॥

अथापश्यन्त ते वीरा पृथिवीमवदारिताम्।
समासाद्य बिलं तच्चाप्यखनन्सगरात्मजाः ॥ ६ ॥
ततः पूर्वोत्तरे देशे समुद्रस्य महीपते।
अपश्यन्त हयं तत्र विचरन्तं महीतले ॥ ७ ॥
कपिलं च महात्मानं तेजोराशिमनुत्तमम्।
ते तं दृष्ट्वा हयं राजन्सम्प्रहृष्टतनूरुहाः ॥ ८ ॥
अनादृत्य महात्मानं कपिलं कालचोदिताः।
सङ्क्रुद्धाः समधावन्त अश्वग्रहणकाङ्क्षिणः ॥ ९ ॥
ततः क्रुद्धो महाराज कपिलो मुनिसत्तमः।
स चक्षुर्विकृतं कृत्वा तेजस्तेषु समुत्सृजन् ॥ १० ॥
ददाह सुमहातेजा मन्दबुद्धीन् स सागरान्।
तान्दृष्ट्वा भस्मसाद्भूतान्नारदः सुमहातपाः ॥ ११ ॥
सगरान्तिकमागच्छत्तच्च तस्मै न्यवेदयत्।
स तच्छ्रुत्वा वचो घोरं राजा मुनिमुखोद्गतम् ॥ १२ ॥
अंशुमन्तं समाहूय असमञ्जःसुतं तदा।
पौत्रं भरतशार्दूल इदं वचनमब्रवीत् ॥ १३ ॥
हयस्यानयनात्पौत्र नरकान्मां समुद्धर।
अंशुमानेवमुक्तस्तु सगरेण महात्मना ॥ १४ ॥
जगाम दुःखार्त्तं देशं यत्र वै दारिता मही।
स तु तेनैव मार्गेण समुद्रं प्रविवेश ह ॥ १५ ॥
अपश्यच्च महात्मानं कपिलं तुरगं च तम्।
स दृष्ट्वा तेजसो राशिं पुराणमृषिसत्तमम् ॥ १६ ॥
प्रणम्य शिरसा भूमौ कार्यमस्मै न्यवेदयत्।
तमुवाच महातेजाः कपिलो मुनिपुङ्गवः ॥ १७ ॥
हयं नयस्व भद्रं ते यज्ञियं नरपुङ्गव।
अंशुमानेवमुक्तस्तु कपिलेन महात्मना ॥ १८ ॥

आजगाम हयं गृह्य यज्ञवाटं महात्मनः।
सोऽभिवाद्य ततः पादौ सगरस्य महात्मनः ॥ १९ ॥
मूर्ध्नि तेनाप्युपाघ्रातस्तस्मै सर्वं न्यवेदयत्।
तच्छ्रुत्वा सगरो राजा पुत्रजं दुःखमत्यजत् ॥ २० ॥
अंशुमन्तं च सम्पूज्य समापयत तं क्रतुम्।
प्रशास्य सुचिरं कालं राज्यं राजीवलोचनः ॥ २१ ॥
पौत्रे भारं समावेश्य जगाम त्रिदिवं तदा।
अंशुमानपि धर्मात्मा महीं सागरमेखलाम् ॥ २२ ॥
प्रशशास महाराज यथैवास्य पितामहः।
तस्य पुत्रः समभवद्दिलीपो नाम धर्मवित् ॥ २३ ॥
गङ्गावतरणे यत्नं सुमहच्चाकरोन्नृपः।
न चावतारयामास चेष्टमानो यथाबलम् ॥ २४ ॥
तस्य पुत्रः समभवच्छ्रीमान्धर्मपरायणः।
भगीरथ इति ख्यातः सत्यवागनसूयकः ॥ २५ ॥
(अ.१०८) स शुश्राव महाबाहुः कपिलेन महात्मना।
पितॄणां निधनं घोरमप्राप्तिं त्रिदिवस्य च ॥ २६ ॥
स राज्यं सचिवे न्यस्य हृदयेन विदूयता।
जगाम हिमवत्पार्श्वं तपस्तप्तुं नरेश्वर ॥ २७ ॥
आरिराधयिषुर्गङ्गां तपसा दग्धकिल्बिषः।
संवत्सरसहस्रे तु गते दिव्ये महानदी ॥ २८ ॥
दर्शयामास तं गङ्गा तदा मूर्तिमती स्वयम्।
गङ्गा– किमिच्छसि महाराज मत्तः किं च ददानि ते ॥ २९ ॥
एवमुक्तः प्रत्युवाच राजा हैमवतीं तदा।
स्वर्गं नय महाभागे मत्पितॄन्सगरात्मजान् ॥ ३० ॥
एतच्छ्रुत्वा वचो राज्ञो गङ्गा लोकनमस्कृता।
भगीरथमिदं वाक्यं सुप्रीता समभाषत ॥ ३१ ॥

करिष्यामि महाराज वचस्ते नात्र संशयः।
वेगं तु मम दुर्धर्षं पतन्त्या गगनाद्भुवम् ॥ ३२ ॥
न शक्तस्त्रिषु लोकेषु कश्चिद्धारयितुं नृप।
अन्यत्र विबुधश्रेष्ठान्नीलकण्ठान्महेश्वरात् ॥ ३३ ॥
एतच्छ्रुत्वा ततो राजन्महाराजो भगीरथः।
कैलासं पर्वतं गत्वा तोषयामास शङ्करम् ॥ ३४ ॥
अगृह्णाच्च वरं तस्माद्गङ्गाया धारणे नृप।
(अ.१०९) ततः पपात गगनाद्गङ्गा हिमवतः सुता ॥ ३५ ॥
तां दधार हरो राजन् गङ्गां गगनमेखलाम्।
ललाटदेशे पतितां मालां मुक्तामयीमिव ॥ ३६ ॥
सा बभूव विसर्पन्ती त्रिधा राजन्समुद्रगा।
पृथिवीतलमासाद्य भगीरथमथाब्रवीत् ॥ ३७ ॥
दर्शयस्व महाराज मार्गं केन व्रजाम्यहम्।
एतच्छ्रुत्वा वचो राजा प्रातिष्ठत भगीरथः ॥ ३८ ॥
यत्र तानि शरीराणि सागराणां महात्मनाम्।
समासाद्य समुद्रं च गङ्गया सहितो नृपः ॥ ३९ ॥
पूरयामास वेगेन समुद्रं वरुणालयम्।
दुहितृत्वे च नृपतिर्गङ्गां समनुकल्पयत्।
पितॄणां चोदकं तत्र ददौ पूर्णमनोरथः ॥ ४० ॥ १६०९ ॥

## उपकथा ४ पतिव्रतामाहात्म्यम्, ब्राह्मणव्याधसंवादः।

मार्कण्डेय– कश्चिद्द्विजातिप्रवरो वेदाध्यायी तपोधनः।
(अ.२०६) तपस्वी धर्मशीलश्च कौशिको नाम भारत ॥ १ ॥
स वृक्षमूले कस्मिंश्चिद्वेदानुच्चारयन्स्थितः।
उपरिष्टाच्च वृक्षस्य बलाका सन्न्यलीयत ॥ २ ॥

तया पुरीषमुत्सृष्टं ब्राह्मणस्य तदोपरि।
भृशं क्रोधाभिभूतेन बलाका सा निरीक्षिता ॥ ३ ॥
अपध्याता च विप्रेण न्यपतद्धरणीतले।
बलाकां पतितां दृष्ट्वा ग्रामं भैक्ष्याय संश्रितः ॥ ४ ॥
ग्रामे शुचीनि प्रचरन् कुलानि भरतर्षभ।
प्रविष्टस्तत्कुलं यत्र पूर्वं चरितवांस्तु सः ॥ ५ ॥
देहीति याचमानोऽसौ तिष्ठेत्युक्तः स्त्रिया ततः।
एतस्मिन्नन्तरे राजन् क्षुधासम्पीडितो भृशम् ॥ ६ ॥
भर्ता प्रविष्टः सहसा तस्या भरतसत्तम।
सा तु दृष्ट्वा पतिं साध्वी ब्राह्मणं व्यवहाय तम् ॥ ७ ॥
पाद्यमाचमनीयं वै ददौ भर्तुस्तथाऽऽसनम्।
प्रह्वा पर्यचरच्चापि भर्तारमसितेक्षणा ॥ ८ ॥
कुर्वती पतिशुश्रूषां सस्माराथ शुभेक्षणा।
भिक्षामादाय विप्राय निर्जगाम यशस्विनी ॥ ९ ॥

ब्राह्मण– किमिदं भवति त्वं मां तिष्ठेत्युक्त्वा वराङ्गने।
उपरोधं कृतवती न विसर्जितवत्यसि ॥ १० ॥

स्त्री– क्षन्तुमर्हसि मे विद्वन् भर्ता मे दैवतं महत्।
स चापि क्षुधितः श्रान्तः प्राप्तः शुश्रूषितो मया ॥ ११ ॥

ब्राह्मण– ब्राह्मणा न गरीयांसो गरीयांस्ते पतिः कृतः।
गृहस्थधर्मे वर्तन्ती ब्राह्मणानवमन्यसे ॥ १२ ॥
इन्द्रोऽप्येषां प्रणमते किं पुनर्मानवो भुवि।
अवलिप्ते न जानीषे वृद्धानां न श्रुतं त्वया ॥ १३ ॥

स्त्री– नाहं बलाका विप्रर्षे त्यज क्रोधं तपोधन।
अनया क्रुद्धया दृष्ट्या क्रुद्धः किं मां करिष्यसि ॥ १४ ॥
नावजानाम्यहं विप्रान् देवैस्तुल्यान् मनस्विनः।
पतिशुश्रूषया धर्मो यः स मे रोचते द्विज ॥ १५ ॥

देवतेष्वपि सर्वेषु भर्ता मे दैवतं परम्।
अविशेषेण तस्याहं कुर्यां धर्म द्विजोत्तम ॥ १६ ॥
शुश्रूषायाः फलं पश्य पत्युर्ब्राह्मण यादृशम्।
बलाका हि त्वया दग्धा रोषात् तद्विदितं मया ॥ १७ ॥
क्रोधः शत्रुः शरीरस्थो मनुष्याणां द्विजोत्तमः।
यः क्रोधमोहौ त्यजति तं देवा ब्राह्मणं विदुः॥ १८ ॥
बहुधा दृश्यते धर्मः सूक्ष्म एव द्विजोत्तम।
भगवानपि धर्मज्ञः स्वाध्यायनिरतः शुचिः ॥ १९ ॥
न तु तत्त्वेन भगवन् धर्मं वेत्सीति मे मतिः।
यदि विप्र न जानीषे धर्मं परमकं द्विज ॥ २० ॥
धर्मव्याधं ततः पृच्छ गत्वा तु मिथिलां पुरीम्।
(अ.२०७) चिन्तयित्वा तदाश्चर्य स्त्रिया प्रोक्तमशेषतः ॥ २१ ॥
ततो जगाम मिथिलां जनकेन सुरक्षिताम्।
प्रविश्य नगरीं रम्यां विमानैर्बहुभिर्युताम् ॥ २२ ॥
धर्मव्याधमपृच्छच्च स चास्य कथितो द्विजैः।
अपश्यत्तत्र गत्वा तं सूनामध्ये व्यवस्थितम् ॥ २३ ॥
मार्गमाहिषमांसानि विक्रीणन्तं तपस्विनम्।
आकुलत्वाच्च क्रेतृणामेकान्ते संस्थितो द्विजः ॥ २४ ॥
स तु ज्ञात्वा द्विजं प्राप्तं सहसा सम्भ्रमोत्थितः।
आजगाम यतो विप्रः स्थित एकान्तदर्शने ॥ २५ ॥
व्याध- अभिवादये त्वां भगवन् स्वागतं ते द्विजोत्तम।
अहं व्याधो हि भद्रं ते किं करोमि प्रशाधि माम् ॥ २६ ॥
एकपत्न्या यदुक्तोऽसि गच्छ त्वं मिथिलामिति।
जानाम्येतदहं सर्वं यदर्थं त्वमिहागतः ॥ २७ ॥
श्रुत्वा च तस्य तद्वाक्यं स विप्रो भृशविस्मितः।
द्वितीयमिदमाश्चर्यमित्यचिन्तयत द्विजः ॥ २८ ॥

अदेशस्थं हि ते स्थानमिति व्याधोऽब्रवीदिदम्।
गृहं गच्छाव भगवन्यदि ते रोचतेऽनघ ॥ २९ ॥
बाढमित्येव तं विप्रो हृष्टो वचनमब्रवीत्।
अग्रतस्तु द्विजं कृत्वा स जगाम गृहं प्रति ॥ ३० ॥
प्रविश्य च गृहं रम्यमासनेनाभिपूजितः।
पाद्यमाचमनीयं च प्रतिगृह्य द्विजोत्तमः ॥ ३१ ॥
ततः सुखोपविष्टस्तं व्याधं वचनमब्रवीत्।
कर्मैतद्वै न सदृशं भवतः प्रतिभाति मे ॥ ३२ ॥
अनुतप्ये भृशं तात तव घोरेण कर्मणा।
व्याध- कुलोचितमिदं कर्म पितृपैतामहं परम् ॥ ३३ ॥
वर्तमानस्य मे धर्मे स्वे मन्युं मा कृथा द्विज।
परेण हि हतान्ब्रह्मन्वराहमहिषानहम् ॥ ३४ ॥
न स्वयं हन्मि विप्रर्षे विक्रीणामि सदा त्वहम्।
न भक्षयामि मांसानि ऋतुगामी तथा ह्यहम् ॥ ३५ ॥
(अ २०८) स्वकर्म त्यजतो ब्रह्मन्नधर्म इह दृश्यते।
स्वकर्मनिरतो यस्तु धर्मः स इति निश्चयः ॥ ३६ ॥
(अ.२१४) पिता माता च भगवन्नेतौ मे दैवतं परम्।
यद्दैवतेभ्यः कर्तव्यं तदेताभ्यां करोम्यहम् ॥ ३७ ॥
(अ २१५) गुरू निवेद्य विप्राय तौ मातापितरावुभौ।
पुनरेव स धर्मात्मा व्याधो ब्राह्मणमब्रवीत् ॥ ३८ ॥
त्वया विनिकृता माता पिता च द्विजसत्तम।
अनिसृष्टोऽसि निष्क्रान्तो गृहात्ताभ्यामनिन्दित ॥ ३९ ॥
वेदोच्चारणकार्यार्थमयुक्तं तत्त्वया कृतम्।
तव शोकेन वृद्धौ तावन्धीभूतौ तपस्विनौ ॥ ४० ॥
तौ प्रसादयितुं गच्छ मा त्वां धर्मोऽत्यगादयम्।
ब्राह्मण- दुर्ज्ञेयः शाश्वतो धर्मः शूद्रयोनौ हि वर्तते ॥ ४१ ॥

न त्वां शूद्रमहं मन्ये भवितव्यं हि कारणम्।
येन कर्मविशेषेण प्राप्तेयं शूद्रता त्वया ॥ ४२ ॥
एतदिच्छामि विज्ञातुं तत्त्वेन हि महामते।
व्याध- अहं हि ब्राह्मणः पूर्वमास द्विजवरात्मजः ॥ ४३ ॥
कश्चिद्राजा मम सखा धनुर्वेदपरायणः।
संसर्गाद्धनुषि श्रेष्ठस्ततोऽहमभवं द्विज ॥ ४४ ॥
एतस्मिन्नेव काले तु मृगया निर्गतो नृपः।
ततोऽभ्यहन्मृगांस्तत्र सुबहूनाश्रमं प्रति ॥ ४५ ॥
अथ क्षिप्तः शरो घोरो मयापि द्विजसत्तम।
ताडितश्च ऋषिस्तेन शरेणानतपर्वणा ॥ ४६ ॥
अजानता कृतमिदं मयेत्यहमथाब्रुवम्।
क्षन्तुमर्हसि मे सर्वमिति चोक्तो मया मुनिः ॥ ४७ ॥
तत प्रत्यब्रवीद्वाक्यमृषिर्मां क्रोधमूर्च्छित ।
व्याधस्त्वं भविता क्रूर शूद्रयोनाविति द्विज ॥ ४८ ॥
(अ २१६) शूद्रयोन्यां वर्तमानो धर्मज्ञो हि भविष्यसि।
मातापित्रोश्च शुश्रूषां करिष्यसि न संशय ॥ ४९ ॥
तया शुश्रूषया सिद्धिं महत्त्व समवाप्स्यसि।
जातिस्मरश्च भविता स्वर्गं चैव गमिष्यसि ॥ ५० ॥
शापक्षये तु निर्वृत्ते भवितासि पुनर्द्विजः।
ब्राह्मण- आपृच्छे त्वा स्वस्ति तेऽस्तु धर्मस्त्वा परिरक्षतु ॥ ५१ ॥
अप्रमादस्तु कर्तव्यो धर्मे धर्मभृता वर।
स तु गत्वा द्विजः सर्वां शुश्रूषां कृतवांस्तदा।
मातापितृभ्यां वृद्धाभ्या यथान्यायं सुसंशित ॥ ५२ ॥ १६६ ॥

## उपकथा ५ द्रौपदीसत्यभामासंवादः

वैशम्पायन- उपासीनेषु विप्रेषु पाण्डवेषु महात्मसु।
(अ २३३) द्रौपदी सत्यभामा च सुखं तत्र निषीदतु ॥ १ ॥

चिरस्य दृष्ट्वा राजेन्द्र तेऽन्योन्यस्य प्रियंवदे।
कथयामासतुश्चित्रा· कथा कुरुयदुत्थिता·॥ २॥
अथाब्रवीत्सत्यभामा कृष्णस्य महिषी प्रिया।
सात्राजिती याज्ञसेनीं रहसीदं सुमध्यमा॥ ३॥
केन द्रौपदि वृत्तेन पाण्डवानधितिष्ठसि।
लोकपालोपमान्वीरान्युन· परमसंहतान्॥ ४॥
कथं च वशगास्तुभ्यं न कुप्यन्ति च ते शुभे।
तव वश्या हि सततं पाण्डवा प्रियदर्शने॥ ५॥
मुखप्रेक्षाश्च ते सर्वे तत्त्वमेतद्ब्रवीहि मे।
व्रतचर्या तपो वापि स्नानमन्त्रौषधानि वा॥ ६॥
विद्यावीर्यं मूलवीर्यं जपहोमागदास्तथा।
ममाद्याचक्ष्व पाञ्चालि यशस्यं भगदैवतम्॥ ७॥
येन कृष्णे भवेन्नित्यं मम कृष्णो वशानुग·।
एवमुक्त्वा सत्यभामा विरराम यशस्विनी॥ ८॥
पतिव्रता महाभागा द्रौपदी प्रत्युवाच ताम्।
असत्स्त्रीणा समाचारं सत्ये मामनुपृच्छसि॥ ९॥
असदाचरिते मार्गे कथं स्यादनुकीर्तनम्।
अनुप्रश्न· संशयो वा नैतत्त्वय्युपपद्यते॥ १०॥
तथा ह्युपेता बुद्धया त्वं कृष्णस्य महिषी प्रिया।
यदैव भर्ता जानीयान्मन्त्रमूलपरा स्त्रियम्॥ ११॥
उद्विजेत तदैवास्या सर्पाद्वेश्मगतादिव।
उद्विग्नस्य कुत· शान्तिरशान्तस्य कुत सुखम्॥ १२॥
न जातु वशगो भर्ता स्त्रिया स्यान्मन्त्रकर्मणा।
वर्तास्म्यहं तु या वृत्तिं पाण्डवेषु महात्मसु॥ १३॥
ता सर्वां शृणु मे सत्या सत्यभामे यशस्विनि।
अहङ्कारं विहायाहं कामक्रोधौ च सर्वदा॥ १४॥

सदारान्पाण्डवान्नित्यं प्रयतोपचराम्यहम् ।
दुर्व्याहृताच्छङ्कमाना दु स्थिताद्दुरवेक्षितात् ॥ १५ ॥
दुरासिताद्दुर्व्रजितादिङ्गिताध्यासितादपि ।
सेवे चक्षुर्हणः पार्थानुग्रवीर्यप्रतापिन ॥ १६ ॥
देवो मनुष्यो गन्धर्वो युवा चापि स्वलङ्कृत- ।
द्रव्यवानभिरूपो वा न मेऽन्य- पुरुषो मत- ॥ १७ ॥
नाभुक्तवति नास्नाते नासंविष्टे च भर्तरि ।
न संविशामि नाश्नामि सदा कर्मकरेष्वपि ॥ १८ ॥
क्षेत्राद्वनाद्वा ग्रामाद्वा भर्तारं गृहमागतम् ।
अभ्युत्थायाभिनन्दामि आसनेनोदकेन च ॥ १९ ॥
प्रमृष्टभाण्डा मृष्टान्ना काले भोजनदायिनी ।
सयता गुप्तधान्या च सुसम्मृष्टनिवेशना ॥ २० ॥
अतिरस्कृतसम्भाषा दु स्त्रियो नानुसेवती ।
अनुकूलवती नित्य भवाम्यनलसा सदा ॥ २१ ॥
अनर्म चापि हसितं द्वारि स्थानमभीक्ष्णश- ।
अवस्करे चिरस्थानं निष्कुटेषु च वर्जये ॥ २२ ॥
निरताऽहं सदा सत्ये भर्तृणामुपसेवने ।
सर्वथा भर्तृरहितं न ममेष्ट कथञ्चन ॥ २३ ॥
यदा प्रवसते भर्ता कुटुम्बार्थेन केनचित् ।
सुमनोवर्णकापेता भवामि व्रतचारिणी ॥ २४ ॥
यच्च भर्ता न पिबति यच्च भर्ता न सेवते ।
यच्च नाश्नाति मे भर्ता सर्व तद्वर्जयाम्यहम् ॥ २५ ॥
ये च धर्मा- कुटुम्बेषु श्वश्र्वा मे कथिता- पुरा ।
तान्सर्वाननुवर्तामि दिवारात्रमतन्द्रिता ॥ २६ ॥
पत्याश्रयो हि मे धर्मो मत- स्त्रीणां सनातन- ।
स देव- सा गतिर्नान्या तस्य का विप्रियं चरेत् ॥ २७ ॥

अहं पतीन्नातिशये नात्यश्ने नातिभूषये।
नापि परिवदे श्वश्रूं सर्वदा परियन्त्रिता ॥ २८ ॥
अवधानेन सुभगे नित्योत्थिततयैव च।
भर्तारो वशगा मह्यं गुरुशुश्रूषयैव च ॥ २९ ॥
नित्यमार्यामहं कुन्तीं वीरसूं सत्यवादिनीम्।
स्वयं परिचराम्येतां पानाच्छादनभोजनैः ॥ ३० ॥
नैतामतिशये जातु वस्त्रभूषणभोजनैः।
नापि परिवदे चाहं तां पृथां पृथिवीसमाम् ॥ ३१ ॥
अन्तःपुराणां सर्वेषां भृत्यानां चैव सर्वशः।
आगोपालाविपालेभ्यः सर्वं वेद कृताकृतम् ॥ ३२ ॥
सर्वं राज्ञः समुदयमायं च व्ययमेव च।
एकाऽहं वेद्मि कल्याणि पाण्डवानां यशस्विनी ॥ ३३ ॥
प्रथमं प्रतिबुद्ध्यामि चरमं संविशामि च।
नित्यकालमहं सत्ये एतत्संवननं मम ॥ ३४ ॥
एतज्जानाम्यहं कर्तुं भर्तृसंवननं महत्।
असत्स्त्रीणां समाचारं नाहं कुर्यां न कामये ॥ ३५ ॥
तच्छ्रुत्वा धर्मसहितं व्याहृतं कृष्णया तदा।
उवाच सत्या सत्कृत्य पाञ्चालीं धर्मचारिणीम् ॥ ३६ ॥
अभिपन्नाऽस्मि पाञ्चालि याज्ञसेनि क्षमस्व मे।
कामकारः सखीनां हि सोपहासं प्रभाषितम् ॥ ३७ ॥

द्रौपदी- (अ.२३४)

इमं तु ते मार्गमपेतमोहं
वक्ष्यामि चित्तग्रहणाय भर्तुः।
अस्मिन्यथावत्सखि वर्तमाना
भर्तारमाच्छेत्स्यसि कामिनीभ्यः ॥ ३८ ॥
नैतादृशं दैवतमस्ति सत्ये
सर्वेषु लोकेषु सदेवकेषु।

यथा पतिस्तस्य तु सर्वकामा
लभ्याः प्रसादात् कुपितश्च हन्यात् ॥ ३९ ॥
सुखं सुखेनेह न जातु लभ्यं
दुःखेन साध्वी लभते सुखानि ।
सा कृष्णमाराधय सौहृदेन
प्रेम्णा च नित्यं प्रतिकर्मणा च ॥ ४० ॥
श्रुत्वा स्वरं द्वारगतस्य भर्तुः
प्रत्युत्थिता तिष्ठ गृहस्य मध्ये ।
दृष्ट्वा प्रविष्टं त्वरिताऽऽसनेन
पाद्येन चैनं प्रतिपूजयस्व ॥ ४१ ॥
जानातु कृष्णस्तव भावमेतं
सर्वात्मना मां भजतीति सत्ये ।
त्वत्संनिधौ यत्कथयेत्पतिस्ते
यद्यप्यगुह्यं परिरक्षितव्यम् ॥ ४२ ॥
काचित्सपत्नी तव वासुदेवं
प्रत्यादिशेत्तेन भवेद्विरागः ।
प्रियाश्च रक्ताश्च हिताश्च भर्तु-
स्तान्भोजयेथा विविधैरुपायैः ॥ ४३ ॥
द्वेष्यैरुपेक्ष्यैरहितैश्च तस्य
भिद्यस्व नित्यं कुहकोद्यतैश्च ।
प्रद्युम्नसाम्बावपि ते कुमारौ
नोपासितव्यौ रहिते कदाचित् ॥ ४४ ॥
महाकुलीनाभिरपापिकाभिः
स्त्रीभिः सतीभिस्तव सख्यमस्तु ।
चण्डाश्च शौण्डाश्च महाशनाश्च
चौराश्च दुष्टाश्चपलाश्च वर्ज्याः ॥ ४५ ॥ १७०६ ॥

## उपकथा ६ मुद्गलोपाख्यानम् ।

व्यास– शिलोञ्छवृत्तिर्धर्मात्मा मुद्गलः संयतेन्द्रियः ।
(अ.२६०) आसीद्राजन्कुरुक्षेत्रे सत्यवागनसूयकः ॥ १ ॥
अतिथिव्रती क्रियावांश्च कापोतीं वृत्तिमास्थितः ।
सत्रमिष्टीकृतं नाम समुपास्ते महातपाः ॥ २ ॥
सपुत्रदारो हि मुनिः पक्षाहारो बभूव ह ।
कपोतवृत्त्या पक्षेण व्रीहिद्रोणमुपार्जयत् ॥ ३ ॥
दर्शं च पौर्णमासं च कुर्वन्विगतमत्सरः ।
देवतातिथिशेषेण कुरुते देहयापनम् ॥ ४ ॥
तस्येन्द्रः सहितो देवैः साक्षात्त्रिभुवनेश्वरः ।
प्रत्यगृह्णान्महाराज भागं पर्वणि पर्वणि ॥ ५ ॥
स पर्वकालं कृत्वा तु मुनिवृत्त्या समन्वितः ।
अतिथिभ्यो ददावन्नं प्रहृष्टेनान्तरात्मना ॥ ६ ॥
व्रीहिद्रोणस्य तद्धस्य ददतोऽन्नं महात्मनः ।
शिष्टं मात्सर्यहीनस्य वर्धत्यतिथिदर्शनात् ॥ ७ ॥
तच्छतान्यपि भुञ्जन्ति ब्राह्मणानां मनीषिणाम् ।
मुनेस्त्यागविशुद्ध्या तु तदन्नं वृद्धिमृच्छति ॥ ८ ॥
तं तु शुश्राव धर्मिष्ठं मुद्गलं संशितव्रतम् ।
दुर्वासा नृप दिग्वासास्तमथाभ्याजगाम ह ॥ ९ ॥
बिभ्रच्चानियतं वेषमुन्मत्त इव पाण्डव ।
विकचः परुषा वाचो व्याहरन्विविधा मुनिः ॥ १० ॥
अभिगम्याथ तं विप्रमुवाच मुनिसत्तमः ।
अन्नार्थिनमनुप्राप्तं विद्धि मां द्विजसत्तम ॥ ११ ॥
प्रादात्स तापसायान्नं क्षुधितायातिथिव्रती ।
बुभुजे कृत्स्नमुन्मत्तः प्रादात्तस्मै च मुद्गलः ॥ १२ ॥

भुक्त्वा चान्नं ततः सर्वमुच्छिष्टेनात्मनस्ततः ।
अथाङ्ग लिलिपेऽनेन यथागतमगाच्च सः ॥ १३ ॥
तथा तमुञ्छधर्माणं दुर्वासा मुनिसत्तमम् ।
उपतस्थे यथाकालं षट्कृत्वः कृतनिश्चयः ॥ १४ ॥
न चास्य मनसा कश्चिद्विकारं ददृशे मुनिः ।
तमुवाच ततः प्रीतः स मुनिर्मुद्गलं ततः ॥ १५ ॥
त्वत्समो नास्ति लोकेऽस्मिन्दाता मात्सर्यवर्जितः ।
दया सत्यं च धर्मश्च त्वयि सर्वं प्रतिष्ठितम् ॥ १६ ॥
सशरीरो भवान्गन्ता स्वर्गं सुचरितव्रतः ।
इत्येवं वदतस्तस्य तदा दुर्वाससो मुनेः ॥ १७ ॥
देवदूतो विमानेन मुद्गलं प्रत्युपस्थितः ।
उवाच चैनं विप्रर्षिं विमानं कर्मभिर्जितम् ॥ १८ ॥
समुपारोह संसिद्धिं प्राप्तोऽसि परमां मुने ।
तमेववादिनमृषिर्देवदूतमुवाच ह ॥ १९ ॥
स्वर्गे तत्र सुखं किञ्च दोषो वा देवदूतक ।
यदत्र तथ्यं पथ्यं च तद्ब्रवीह्यविचारयन् ॥ २० ॥
श्रुत्वा तथा करिष्यामि व्यवसायं गिरा तव ।
देवदूत- महर्षे आर्यबुद्धिस्त्वं यः स्वर्गसुखमुत्तमम् ॥ २१ ॥
(अ २६१) सम्प्राप्तं बहुमन्तव्यं विमृशस्यबुधो यथा ।
नन्दनादीनि पुण्यानि विहाराः पुण्यकर्मणाम् ॥ २२ ॥
न क्षुत्पिपासे न ग्लानिर्न शीतोष्णे भयं तथा ।
शब्दाः श्रुतिमनोग्राह्याः सर्वतस्तत्र वै मुने ॥ २३ ॥
न शोको न जरा तत्र नायासपरिदेवने ।
न सस्वेदो न दौर्गन्ध्यं पुरीषं मूत्रमेव च ॥ २४ ॥
तेषां न च रजो वस्त्रं बाधते तत्र वै मुने ।
सेयं दानकृता व्युष्टिरनुप्राप्ता सुखं त्वया ॥ २५ ॥

तां भुङ्क्ष्व सुकृतैर्लब्धान्तपसा द्योतितप्रभः।
गुणाः स्वर्गस्य प्रोक्तास्ते दोषानपि निबोध मे ॥ २६ ॥
कृतस्य कर्मणस्तत्र भुज्यते यत्फलं दिवि।
न चान्यत् क्रियते कर्म मूलच्छेदेन भुज्यते ॥ २७ ॥
सोऽत्र दोषो मम मतस्तस्यान्ते पतनं च यत्।
असन्तोष. परीतापो दृष्ट्वा दीप्ततरा. श्रियः ॥ २८ ॥
यद्भवत्यवरे स्थाने स्थितानां तत्सुदुष्करम्।
आब्रह्मभवनादेते दोषा मौद्गल्य दारुणाः ॥ २९ ॥
मुद्गल- महान्तस्तु अमी दोषास्त्वया स्वर्गस्य कीर्तिताः।
निर्दोष एव यस्त्वन्यो लोकः तं प्रवदस्व मे ॥ ३० ॥
देवदूत- ब्रह्मणः सदनादूर्ध्वं तद्विष्णोः परमं पदम्।
शुद्धं सनातनं ज्योतिः परं ब्रह्मेति यद्विदुः ॥ ३१ ॥
एतच्छ्रुत्वा तु मौद्गल्यो वाक्यं विममृशे धिया।
विमृश्य च मुनिश्रेष्ठो देवदूतमुवाच ह ॥ ३२ ॥
देवदूत नमस्तेऽस्तु गच्छ तात यथासुखम्।
महादोषेण मे कार्यं न स्वर्गेण सुखेन वा ॥ ३३ ॥
इत्युक्त्वा स मुनिर्वाक्यं देवदूतं विसृज्य तम्।
शिलोञ्छवृत्तिर्धर्मात्मा शममातिष्ठदुत्तमम् ॥ ३४ ॥
तुल्यनिन्दास्तुतिर्भूत्वा समलोष्टाश्मकाञ्चनः।
ज्ञानयोगेन शुद्धेन ध्याननित्यो बभूव ह ॥ ३५ ॥
ध्यानयोगाद्बलं लब्ध्वा प्राप्य बुद्धिमनुत्तमाम्।
जगाम शाश्वतीं सिद्धिं परां निर्वाणलक्षणाम् ॥३६॥१७४२॥

आदितः श्लोकाः ॥ ३७०२ ॥

॥ इति श्रीमहाभारतसारे वनपर्व समाप्तम् ॥

# महाभारतसारः

## विराटपर्व

नारायणं नमस्कृत्य नरं चैव नरोत्तमम्।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत्॥

### धौम्यकृतः उपदेशः, विराटनगरे पाण्डवप्रवेशः

अर्जुन– सन्ति रम्या जनपदा बह्वन्नाः परितः कुरून्।
पाञ्चालाश्चेदिमत्स्याश्च शूरसेनाः पटच्चराः।
एतेषां कतमो राजन् निवासस्तव रोचते॥ १॥

युधिष्ठिर– विराटनगरे तात संवत्सरमिमं वयम्।
कुर्वन्तस्तस्य कर्माणि विहरिष्याम भारत॥ २॥

(अ.४) पुरोहितोऽयमस्माकमग्निहोत्राणि रक्षतु।
सूदपौरोगवैः सार्धं द्रुपदस्य निवेशने॥ ३॥
इन्द्रसेनमुखाश्चेमे रथानादाय केवलान्।
यान्तु द्वारवतीं शीघ्रमिति मे वर्तते मतिः॥ ४॥
इमाश्च नार्यो द्रौपद्याः सर्वाश्च परिचारिकाः।
पाञ्चालानेव गच्छन्तु सूदपौरोगवैः सह॥ ५॥
सर्वैरपि च वक्तव्यं न प्राज्ञायन्त पाण्डवाः।
गता ह्यस्मानपाहाय सर्वे द्वैतवनादिति॥ ६॥

धौम्य– विदिते चापि वक्तव्यं सुहृद्भिरनुरागतः।
अतोऽहमपि वक्ष्यामि हेतुमत्र निबोधत॥ ७॥
हन्तेमां राजवसतिं राजपुत्रा ब्रवीम्यहम्।
दृष्टद्वारो लभेद्द्रष्टुं राजस्वेषु न विश्वसेत्॥ ८॥
तदेवासनमन्विच्छेद्यत्र नाभिपतेत्परः।
यत्र यत्रैनमासीनं शङ्केरन्दुष्टचारिणः॥ ९॥

न तत्रोपविशेद्यो वै स राजवसतिं वसेत्।
न चानुशिष्याद्राजानमपृच्छन्तं कदाचन ॥ १० ॥
तूष्णीं त्वेनमुपासीत काले समभिपूजयेत्।
असूयन्ति हि राजानो जनाननृतवादिनः ॥ ११ ॥
तथैव चावमन्यन्ते मन्त्रिणं वादिनं मृषा।
नैषां दारेषु कुर्वीत मैत्रीं प्राज्ञः कदाचन ॥ १२ ॥
अन्तःपुरचरा ये च द्वेष्टि यानहिताश्च ये।
यद्यद्भर्ताऽनुयुञ्जीत तत्तदेवानुवर्तयेत् ॥ १३ ॥
प्रमादमवलेपं च कोपं च परिवर्जयेत्।
शूरोऽस्मीति न दृप्तः स्याद्बुद्धिमानिति वा पुनः ॥ १४ ॥
प्रियमेवाचरन्राज्ञः प्रियो भवति भोगवान्।
राजानं राजपुत्रं वा संवर्णयति यः सदा ॥ १५ ॥
अमात्यः पण्डितो भूत्वा स चिरं तिष्ठते प्रियः।
अम्लानो बलवाञ्छूरश्छायेवानुगतः सदा ॥ १६ ॥
सत्यवादी मृदुर्दान्तः स राजवसतिं वसेत्।
समवेषं न कुर्वीत नोच्चैः सन्निहितो वसेत् ॥ १७ ॥
न मन्त्रं बहुधा कुर्यादेवं राज्ञः प्रियो भवेत्।
न कर्मणि नियुक्तः सन्धनं किञ्चिदपि स्पृशेत् ॥ १८ ॥
प्राप्नोति हि हरन्द्रव्यं बन्धनं यदि वा वधम्।
एवं संयम्य चित्तानि यत्नतः पाण्डुनन्दनाः ॥ १९ ॥
संवत्सरमिमं तात यथाशीला बुभूषत।
अथ स्वविषयं प्राप्य यथाकामं करिष्यथ ॥ २० ॥
अग्नीन्प्रदक्षिणीकृत्य ब्राह्मणांश्च तपोधनान्।
याज्ञसेनीं पुरस्कृत्य षडेवाथ प्रवव्रजुः ॥ २१ ॥
ते वीरा बद्धनिस्त्रिंशास्तथा बद्धकलापिनः।
बद्धगोधाङ्गुलित्राणाः कालिन्दीमभितो ययुः ॥ २२ ॥

उत्तरेण दशार्णांस्ते पञ्चालान्दक्षिणेन च।
अन्तरेण यकृल्लोमान् शूरसेनांश्च पाण्डवाः ॥ २३ ॥
लुब्धा ब्रुवाणा मत्स्यस्य विषयं प्राविशन्वनात्।
स राजधानीं सम्प्राप्य कौन्तेयोऽर्जुनमब्रवीत्।
क्वायुधानि समासज्य प्रवेक्ष्यामः पुरं वयम् ॥ २४ ॥

अर्जुन- इयं कूटे मनुष्येन्द्र गहना महती शमी।
समीपे च श्मशानस्य गहनस्य विशेषतः ॥ २५ ॥
समाधायायुधं शम्यां गच्छामो नगरं प्रति।
अथान्वशासन्नकुलं कुन्तीपुत्रो युधिष्ठिरः ॥ २६ ॥
आरुह्येमां शमीं वीर धनूंष्येतानि निक्षिप।
तामुपारुह्य नकुलो धनूंषि निदधे स्वयम् ॥ २७ ॥
जयो जयन्तो विजयो जयत्सेनो जयद्बलः।
इति गुह्यानि नामानि चक्रे तेषां युधिष्ठिरः ॥ २८ ॥
ततो यथाप्रतिज्ञाभिः प्राविशन्नगरं महत्।
अज्ञातचर्यां वत्स्यन्तो राष्ट्रे वर्षं त्रयोदशम् ॥ २९ ॥

## विराटगृहे पाण्डवानामज्ञातवासः, जीमूतवधश्च

ततो विराटं प्रथमं युधिष्ठिरो
राजा सभायामुपविष्टमाव्रजत्।
वैदूर्यरूपान प्रतिमुच्य काञ्चना-
नक्षान् स कक्षे परिगृह्य वाससा ॥ ३० ॥

युधिष्ठिर- युधिष्ठिरस्यासमहं पुरा सखा
वैयाघ्रपद्यः पुनरस्मि विप्रः।
अक्षान्प्रयोक्तुं कुशलोऽस्मि देविनां
कङ्केति नाम्नाऽस्मि विराट विश्रुतः ॥ ३१ ॥

विराट- समानयानो भविताऽसि मे सखा।
प्रभूतवस्त्रो बहुपानभोजनः।
पश्येस्त्वमन्तश्च बहिश्च सर्वदा।
कृतं च ते द्वारमपावृतं मया ॥ ३२ ॥

(अ.८) अथापरो भीमबलः श्रिया ज्वल-
न्नुपाययौ सिंहविलासविक्रमः।
खजां च दर्वीं च करेण धारय-
न्नसिं च कालाङ्गमकोशमव्रणम् ॥ ३३ ॥

ततो विराटं समुपेत्य पाण्डव-
स्त्वदीनरूपं वचनं महामनाः।
उवाच सूदोऽस्मि नरेन्द्र बल्लवो
भजस्व मां व्यञ्जनकारमुत्तमम् ॥ ३४ ॥

बलेन तुल्यश्च न विद्यते मया
नियुद्धशीलश्च सदैव पार्थिव।
गजैश्च सिंहैश्च समेयिवानहम्
सदा करिष्यामि तवानघ प्रियम् ॥ ३५ ॥

ददामि ते हन्त वरान्महानसे
तथा च कुर्याः कुशलं प्रभाषसे।
नराश्च ये तत्र समाहिताः पुरा
भवांश्च तेषामधिपो मया कृतः ॥ ३६ ॥

ततः केशान्समुत्क्षिप्य वेल्लिताग्राननिन्दितान्।
वासश्च परिधायैकं कृष्णा सुमलिनं महत् ॥ ३७ ॥
कृत्वा वेषं च सैरन्ध्र्यास्ततो व्यचरदार्तवत्।
विराटस्य तु कैकेयी भार्या परमसम्मता ॥ ३८ ॥
आलोकयन्ती ददृशे प्रासादाद्द्रुपदात्मजाम्।
सा समीक्ष्य तथारूपामनाथामेकवाससम् ॥ ३९ ॥

समाहूयाब्रवीद्भद्रे का त्वं किं च चिकीर्षसि।
सा तामुवाच राजेन्द्र सैरन्ध्र्यहमुपागता।
कर्म चेच्छाम्यहं कर्तुं तस्य यो मां युयुक्षति ॥ ४० ॥

सुदेष्णा– स्त्रियो राजकुले याश्च याश्चेमा मम वेश्मनि।
प्रसक्तास्त्वां निरीक्षन्ते पुमांसं कं न मोहयेः ॥ ४१ ॥
राजा विराटः सुश्रोणि दृष्ट्वा वपुरमानुषम्।
विहाय मां वरारोहे गच्छेत्सर्वेण चेतसा ॥ ४२ ॥
यथा च कर्कटी गर्भमाधत्ते मृत्युमात्मनः।
तथाविधमहं मन्ये वासं तव शुचिस्मिते ॥ ४३ ॥

द्रौपदी– नास्मि लभ्या विराटेन न चान्येन कदाचन।
गन्धर्वाः पतयो मह्यं युवानः पञ्च भामिनि ॥ ४४ ॥
रक्षन्ति ते च मां नित्यं दुःखाचारा तथा ह्यहम्।
यो मे न दद्यादुच्छिष्टं न च पादौ प्रधावयेत् ॥ ४५ ॥
प्रीणेरंस्तेन वासेन गन्धर्वाः पतयो मम।

सुदेष्णा– एवं त्वां वासयिष्यामि यथा त्वं नन्दिनीच्छसि ॥ ४६ ॥
एवं कृष्णा विराटस्य भार्यया परिसान्त्विता।
उवास नगरे तस्मिन्पतिधर्मवती सती ॥ ४७ ॥

(अ.१०) सहदेवोऽपि गोपानां कृत्वा वेषमनुत्तमम्।
भाषां चैषां समास्थाय विराटमुपयादथ ॥ ४८ ॥

सहदेव– पञ्चानां पाण्डुपुत्राणां ज्येष्ठो भ्राता युधिष्ठिरः।
तस्याष्टशतसाहस्रा गवां वर्गाः शतं शतम्।
तेषां गोसङ्ख्य आसं वै तन्तिपालेति मां विदुः ॥ ४९ ॥
क्षिप्रं च गावो बहुला भवन्ति
न तासु रोगो भवतीह कश्चन।
तैस्तैरुपायैर्विदितं ममैत-
देतानि शिल्पानि मयि स्थितानि ॥ ५० ॥

विराट– शतं सहस्राणि समाहितानि
सवर्णवर्णस्यविमिश्रितान् गुणैः।
पशून्सपालान्भवते ददाम्यहं
त्वदाश्रया मे पशवो भवन्त्विह ॥ ५१ ॥

(अ.११) अथापरोऽदृश्यत रूपसंपदा
स्त्रीणामलङ्कारधरो बृहत्पुमान्।

अर्जुन– गायामि नृत्याम्यथ वादयामि
भद्रोऽस्मि नृत्ये कुशलोऽस्मि गीते ॥ ५२ ॥
बृहन्नलां मां नरदेव विद्धि
सुत सुता वा पितृमातृवर्जिताम्।
सम्मन्त्र्य राजा विविधैः स्वमन्त्रिभिः
परीक्ष्य चैनं प्रमदाभिराशु वै ॥ ५३ ॥
अपुंस्त्वमप्यस्य निशम्य च स्थिरं
ततः कुमारीपुरमुत्ससर्ज तम्।
स शिक्षयामास च गीतवादितं
सुता विराटस्य धनञ्जयः प्रभुः ॥ ५४ ॥

(अ.१२) अथापरोऽदृश्यत पाण्डवः प्रभु-
र्विराटराजं तरसा समेयिवान्।
अभ्येत्य राजानममित्रहाऽब्रवीत्
तवाश्वसूतो निपुणो भवाम्यहम् ॥ ५५ ॥

पञ्चानां पाण्डुपुत्राणां ज्येष्ठो भ्राता युधिष्ठिरः।
तेनाहमश्वेषु पुरा नियुक्तः शत्रुकर्शन ॥ ५६ ॥
अश्वानां प्रकृतिं वेद्मि विनयं चापि सर्वशः।
दुष्टानां प्रतिपत्तिं च कृत्स्नं चैव चिकित्सितम् ॥ ५७ ॥

न कातरं स्यान्मम जातु वाहनं
न मेऽस्ति दुष्टा वडवा कुतो हयाः।

जनस्तु मामाह स चापि पाण्डवो
युधिष्ठिरो ग्रन्थिकमेव नामतः ॥ ५८ ॥

विराट– यदस्ति किञ्चिन्मम वाजिवाहनं
तदस्तु सर्वं त्वदधीनमद्य वै ।
ये चापि केचिन्मम वाजियोजका-
स्त्वदाश्रयाः सारथयश्च सन्तु मे ॥ ५९ ॥

एवं हि मत्स्ये न्यवसन्त पाण्डवा
यथाप्रतिज्ञाभिरमोघदर्शनाः ।
अज्ञातचर्यां व्यचरन्समाहिताः
समुद्रनेमीपतयोऽतिदुःखिताः ॥ ६० ॥

(अ.१३) अथ मासे चतुर्थे तु ब्रह्मणः सुमहोत्सवः ।
आसीत्समृद्धो मत्स्येषु पुरुषाणां सुसंमतः ॥ ६१ ॥
तत्र मल्लाः समापेतुर्दिग्भ्यो राजन्सहस्रशः ।
तेषामेको महानासीत्सर्वमल्लानथाह्वयत् ॥ ६२ ॥
आवल्गमानं तं रङ्गे नोपतिष्ठति कश्चन ।
अथ सूदेन तं मल्लं योधयामास मत्स्यराट् ॥ ६३ ॥
ततस्तौ नरशार्दूलौ बाहुयुद्धं समीयतुः ।
चकर्ष दोर्भ्यामुत्पाट्य भीमो मल्लममित्रहा ॥ ६४ ॥
समुद्यम्य महाबाहुर्भ्रामयामास वीर्यवान् ।
भ्रामयित्वा शतगुणं गतसत्त्वमचेतनम् ॥ ६५ ॥
प्रत्यपिंषन्महाबाहुर्मल्लं भुवि वृकोदरः ।
तस्मिन् विनिहते धीरे जीमूते लोकविश्रुते ॥ ६६ ॥
विराटः परमं हर्षमगच्छद्बान्धवैः सह ।
एवं ते न्यवसंस्तत्र प्रच्छन्नाः पुरुषर्षभाः ।
कर्माणि तस्य कुर्वाणा विराटनृपतेस्तदा ॥ ६७ ॥

## कीचकवधः

(अ.१४) वसमानेषु पार्थेषु मत्स्यस्य नगरे तदा।
महारथेषुच्छन्नेषु मासा दश समाययुः॥ ६८॥
तस्मिन्वर्षे गतप्राये कीचकस्तु महाबलः।
सेनापतिर्विराटस्य ददर्श द्रुपदात्मजाम्॥ ६९॥
तां दृष्ट्वा देवगर्भाभां चरन्तीं देवतामिव।
कीचकः कामयामास कामबाणप्रपीडितः॥ ७०॥

ततः सुदेष्णामनुमन्त्र्य कीचक-
स्ततः समभ्येत्य नराधिपात्मजाम्।
उवाच कृष्णामभिसान्त्वयंस्तदा
मृगेन्द्रकन्यामिव जम्बुको वने॥ ७१॥

चित्रमाल्याम्बरधरा सर्वाभरणभूषिता।
कामं प्रकामं सेव त्वं मया सह विलासिनि॥ ७२॥

त्यजामि दारान्मम ये पुरातना
भवन्तु दास्यस्तव चारुहासिनि।
अहं च ते सुन्दरि दासवत्स्थितः
सदा भविष्ये वशगो वरानने॥ ७३॥

द्रौपदी– परदाराऽस्मि भद्रं ते न युक्तं तव साम्प्रतम्।
दयिताः प्राणिनां दारा धर्मं समनुचिन्तय॥ ७४॥
परदारे न ते बुद्धिर्जातु कार्या कथञ्चन।
विवर्जनं ह्यकार्याणामेतत्सुपुरुषव्रतम्॥ ७५॥
मिथ्याभिगृध्नो हि नरः पापात्मा मोहमास्थितः।
अयशः प्राप्नुयाद्घोरं महद्वा प्राप्नुयाद्भयम्॥ ७६॥
एवमुक्तस्तु सैरन्ध्र्या कीचकः काममोहितः।
प्रोवाचेदं सुदुर्बुद्धिर्द्रौपदीमजितेन्द्रियः॥ ७७॥

प्रत्याख्याय च मां भीरु वशगं प्रियवादिनम्।
नूनं त्वमसितापाङ्गि पश्चात्तापं करिष्यसि ॥ ७८ ॥
अहं हि सुभ्रु राज्यस्य कृत्स्नस्यास्य सुमध्यमे।
प्रभुर्वासयिता चैव वीर्ये चाप्रतिमः क्षितौ ॥ ७९ ॥
मया दत्तमिदं राज्यं स्वामिन्यसि शुभानने।
भजस्व मां वरारोहे भुङ्क्ष्व भोगाननुत्तमान् ॥ ८० ॥

सैरन्ध्री— मा सूतपुत्र मुह्यस्व माऽद्य त्यक्ष्यस्व जीवितम्।
जानीहि पञ्चभिर्घोरैर्नित्यं मामभिरक्षिताम् ॥ ८१ ॥
न चाप्यहं त्वया लभ्या गन्धर्वाः पतयो मम।
ते त्वां निहन्युः कुपिताः साध्वलं मा व्यनीनशः ॥ ८२ ॥
प्रत्याख्यातो राजपुत्र्या सुदेष्णां कीचकोऽब्रवीत्।
यथा कैकेयि सैरन्ध्री समेयात्तद्विधीयताम् ॥ ८३ ॥
तस्य सा बहुशः श्रुत्वा वाचं विलपतस्तदा।
विराटमहिषी देवी सुदेष्णा सूतमब्रवीत् ॥ ८४ ॥
पर्वणि त्वं समुद्दिश्य सुरामन्नं च कारय।
तत्रैनां प्रेषयिष्यामि सुराहारीं तवान्तिकम् ॥ ८५ ॥
तत्र सम्प्रेषितामेनां विजने निरवग्रहे।
सान्त्वयेथा यथाकामं सान्त्व्यमाना रमेद्यदि ॥ ८६ ॥
इत्युक्तः स विनिष्क्रम्य भगिन्या वचनात्तदा।
सुरामाहारयामास राजार्हां सुपरिष्कृताम् ॥ ८७ ॥
भक्ष्यांश्च विविधाकारान्बहूंश्चोच्चावचांस्तदा।
कारयामास कुशलैरन्नं पानं सुशोभनम् ॥ ८८ ॥
तस्मिन्कृते तदा देवी कीचकेनोपमन्त्रिता।
सुदेष्णा प्रेषयामास सैरन्ध्रीं कीचकालयम् ॥ ८९ ॥

सुदेष्णा—उत्तिष्ठ गच्छ सैरन्ध्रि कीचकस्य निवेशनम्।
पानमानय कल्याणि पिपासा मां प्रबाधते ॥ ९० ॥

सैरन्ध्री– न गच्छेयमहं तस्य राजपुत्रि निवेशनम् ।
त्वमेव राज्ञि जानासि यथा स निरपत्रपः ॥ ९१ ॥
न चाहमनवद्याङ्गि तव वेश्मनि भामिनि ।
कामवृत्ता भविष्यामि पतीनां व्यभिचारिणी ॥ ९२ ॥
सन्ति बह्वयस्तव प्रेष्या राजपुत्रि वशानुगाः ।
अन्यां प्रेषय भद्रं ते स हि मामवमंस्यते ॥ ९३ ॥

सुदेष्णा– नैव त्वां जातु हिंस्यात्स इतः सम्प्रेषितां मया ।
इत्युक्त्वा प्रददौ पात्रं सपिधानं हिरण्मयम् ॥ ९४ ॥
सा शङ्कमाना रुदती दैवं शरणमीयुषी ।
प्रातिष्ठत सुराहारी कीचकस्य निवेशनम् ॥ ९५ ॥
उपातिष्ठत सा सूर्यं मुहूर्तमबला ततः ।
तां मृगीमिव सन्त्रस्तां दृष्ट्वा कृष्णां समीपगाम् ।
उदतिष्ठन्मुदा सूतो नावं लब्ध्वेव पारगः ॥ ९६ ॥

कीचक– स्वागतं ते सुकेशान्ते सुव्युष्टा रजनी मम ।
(अ.१६) स्वामिनी त्वमनुप्राप्ता प्रकुरुष्व मम प्रियम् ॥ ९७ ॥

द्रौपदी– अप्रैषीद्राजपुत्री मां सुराहारीं तवान्तिकम् ।
पानमाहर मे क्षिप्रं पिपासा मेऽस्ति चाब्रवीत् ॥ ९८ ॥

कीचक– अन्या भद्रे नयिष्यन्ति राजपुत्र्याः प्रतिश्रुतम् ।
इत्येतां दक्षिणे पाणौ सूतपुत्रः परामृशत् ॥ ९९ ॥
सा गृहीता विधुन्वाना भूमावाक्षिप्य कीचकम् ।
सभां शरणमागच्छद्यत्र राजा युधिष्ठिरः ॥ १०० ॥
तां कीचकः प्रधावन्तीं केशपाशे परामृशत् ।
अथैनां पश्यतो राज्ञः पातयित्वा पदाऽवधीत् ॥ १०१ ॥
सा सभाद्वारमासाद्य रुदती मत्स्यमब्रवीत् ।
अवेक्षमाणा सुश्रोणि पतींस्तान्दीनचेतसः ॥ १०२ ॥

येषां वैरी न स्वपिति षष्ठेऽपि विषये वसन्।
तेषां मां मानिनीं भार्यां सूतपुत्रः पदाऽवधीत् ॥ १०३ ॥
कथं ते सूतपुत्रेण वध्यमानां प्रियां सतीं।
मर्षयन्ति यथा क्लीबा बलवन्तोऽमितौजसः ॥ १०४ ॥
क्व नु तेषाममर्षश्च वीर्यं तेजश्च वर्तते।
न परीप्सन्ति ये भार्यां वध्यमानां दुरात्मना ॥ १०५ ॥
मयाऽत्र शक्यं किं कर्तुं विराटे धर्मदूषके।
यः पश्यन्मां मर्षयति वध्यमानामनागसम् ॥ १०६ ॥
कीचको न च धर्मज्ञो न च मत्स्यः कथञ्चन।
सभासदोऽप्यधर्मज्ञा य एनं पर्युपासते ॥ १०७ ॥

विराट– परोक्षे नाभिजानामि विग्रहं युवयोरहम्।
अर्थतत्त्वमविज्ञाय किं नु स्यात्कौशलं मम ॥ १०८ ॥
अथाब्रवीद्राजपुरीं कौरव्यो महिषीं प्रियाम्।
मन्ये न कालं क्रोधस्य पश्यन्ति पतयस्तव ॥ १०९ ॥
गच्छ सैरन्ध्रि गन्धर्वाः करिष्यन्ति तव प्रियम्।
व्यपनेष्यन्ति ते दुःखं येन ते विप्रियं कृतम् ॥ ११० ॥

सैरन्ध्री– अतीव तेषां घृणिनामर्थेऽहं धर्मचारिणी।
तस्य तस्यैव ते वध्या येषां ज्येष्ठोऽक्षदेविता ॥ १११ ॥
इत्युक्त्वा प्राद्रवत्कृष्णा सुदेष्णाया निवेशनम्।
शुशुभे वदनं तस्या रुदत्याः सुचिरं तदा।
मेघलेखाविनिर्मुक्तं दिवीव शशिमण्डलम् ॥ ११२ ॥

सुदेष्णा– कस्त्वावधीद्वरारोहे कस्माद्रोदिषि शोभने।
कस्याद्य न सुखं भद्रे केन ते विप्रियं कृतम् ॥ ११३ ॥

द्रौपदी– कीचको माऽवधीत्तत्र सुराहारीं गतां तव।
सभायां पश्यतो राज्ञो यथैव विजने वने ॥ ११४ ॥

सुदेष्णा– घातयामि सुकेशान्ते कीचकं यदि मन्यसे।
योऽसौ त्वां कामसम्मत्तो दुर्लभाममवन्यते ॥ ११५ ॥

सैरन्ध्री– अन्ये चैनं वधिष्यन्ति येषामागः करोति सः।
मन्ये चैवाद्य सुव्यक्तं यमलोकं गमिष्यति ॥ ११६ ॥

(अ.१७) कृत्वा शौचं यथान्यायं कृष्णा सा तनुमध्यमा।
गात्राणि वाससी चैव प्रक्षाल्य सलिलेन सा ॥ ११७ ॥
चिन्तयामास रुदती तस्य दुःखस्य निर्णयम्।
तत उत्थाय रात्रौ सा विहाय शयनं स्वकम् ॥ ११८ ॥
प्राद्रवन्नाथमिच्छन्ती कृष्णा नाथवती सती।
भवनं भीमसेनस्य क्षिप्रमायतलोचना ॥ ११९ ॥
भीमसेनमुपाश्लिष्यद्धस्तिनीव महागजम्।
अभ्यभाषत पाञ्चाली भीमसेनमनिन्दिता ॥ १२० ॥
उत्तिष्ठोत्तिष्ठ किं शेषे भीमसेन यथा मृतः।
नामृतस्य हि पापीयान्भार्यामालभ्य जीवति ॥ १२१ ॥
अथाब्रवीद्राजपुत्रीं कौरव्यो महिषीं प्रियाम्।
केनास्यर्थेन सम्प्राप्ता त्वरितेव ममान्तिकम् ॥ १२२ ॥
शीघ्रमुक्त्वा यथाकामं यत्ते कार्यं विवक्षितम्।
गच्छ वै शयनायैव पुरा नान्येन बुध्यते ॥ १२३ ॥

द्रौपदी– जानन्सर्वाणि दुःखानि किं मां त्वं परिपृच्छसि।
(अ.१८) योऽयं राज्ञो विराटस्य कीचको नाम भारत ॥ १२४ ॥
सेनानीः पुरुषव्याघ्र श्यालः परमदुर्मतिः।
स मां सैरन्ध्रिवेषेण वसन्तीं राजवेश्मनि ॥ १२५ ॥
नित्यमेवाह दुष्टात्मा भार्या मम भवेति वै।
तेनोपमन्त्र्यमाणाया वधार्हेण सपत्नहन्।
कालेनेव फलं पक्वं हृदयं मे विदीर्यते ॥ १२६ ॥

(अ २०) त्वमेव भीम जानीषे यन्मे पार्थ सुख पुरा।
साह दासीत्वमापन्ना न शान्तिमवशा लभे ॥ १२७ ॥
यस्या मम मुखप्रेक्षा यूयमिंद्रसमा सदा।
सा प्रेक्षे मुखमन्यासामवराणा वरा सती ॥ १२८ ॥
या न जातु स्वयं पिंषे गात्रोद्वर्तनमात्मन ।
अन्यत्र कुन्त्या भद्र ते सा पिनष्म्यद्य चन्दनम् ॥ १२९ ॥
पश्य कौन्तेय पाणी मे नैवाभूतां हि यौ पुरा।
इत्यस्य दर्शयामास किणवन्तौ करावुभौ ॥ १३० ॥
सा कीर्तयन्ती दु खानि भीमसेनस्य भामिनी।
रुरोद शनकै कृष्णा भीमसेनमुदीक्षती ॥ १३१ ॥
ततस्तस्या करौ सूक्ष्मौ किणवद्धौ वृकोदर ।
मुखमानीय वै पत्न्या रुरोद परवीरहा ॥ १३२ ॥
तौ गृहीत्वा च कौन्तेयो वाष्पमुत्सृज्य वीर्यवान्।
तत परमदु खार्त इद वचनमब्रवीत् ॥ १३३ ॥

(अ २१) धिगस्तु मे वाहुवल गाण्डीव फाल्गुनस्य च।
भीम- यत्ते रक्तौ पुरा भूत्वा पाणी कृतकिणाविमौ ॥ १३४ ॥
मा दीर्घं क्षम काल त्व मासमर्धं च सम्मितम्।
पूर्णे त्रयोदशे वर्षे राज्ञा राज्ञी भविष्यसि ॥ १३५ ॥

द्रौपदी- कीचको राजवाल्लभ्याच्छोककृन्मम भारत।
तमेव कामसम्मत्त भिन्धि कुम्भमिवाश्मनि ॥ १३६ ॥
त चेज्जीवन्तमादित्य प्रातरभ्युदयिष्यति।
विषमालोड्य पास्यामि मा कीचकवशं गमम् ॥ १३७ ॥

भीमसेन- तथा भद्रे करिष्यामि यथा त्व भीरु भाषसे।
(अ २२) अस्या प्रदोषे शर्वर्या कुरुष्वानेन सङ्गतम् ॥ १३८ ॥
यैषा नर्तनशालेह मत्स्यराजेन कारिता।
तत्रास्य दर्शयिष्यामि पूर्वप्रेतान्पितामहान् ॥ १३९ ॥

यथा च त्वां न पश्येयुः कुरूणां तेन संविदम्।
कुर्यास्तया त्वं कल्याणि यथा सन्निहितो भवेत् ॥ १४० ॥
तथा तौ कथयित्वा तु बाष्पमुत्सृज्य दुःखितौ।
रात्रिशेषं तमत्युग्रं धारयामासतुर्हृदि ॥ १४१ ॥
तस्यां रात्र्यां व्यतीतायां प्रातरुत्थाय कीचकः।
गत्वा राजकुलायैव द्रौपदीमिदमब्रवीत् ॥ १४२ ॥
सभायां पश्यतो राज्ञः पातयित्वा पदाऽहनम्।
न चैवालभसे त्राणमभिपन्ना बलीयसा ॥ १४३ ॥
प्रवादेनेह मत्स्यानां राजा नाम्नाऽयमुच्यते।
अहमेव हि मत्स्यानां राजा वै वाहिनीपतिः।
मां सुखं प्रतिपद्यस्व दासो भीरु भवामि ते ॥ १४४ ॥
द्रौपदी– एवं मे समयं त्वद्य प्रतिपद्यस्व कीचक।
न त्वां सखा वा भ्राता वा जानीयात्सङ्गतं मया ॥ १४५ ॥
अनुप्रवादाद्भीताऽस्मि गन्धर्वाणां यशस्विनाम्।
एवं मे प्रतिजानीहि ततोऽहं वशगा तव ॥ १४६ ॥
कीचक– एवमेतत्करिष्यामि यथा सुश्रोणि भाषसे ॥ १४७ ॥
द्रौपदी– यदेतन्नर्तनागारं मत्स्यराजेन कारितम्।
तमिस्रे तत्र गच्छेथा गन्धर्वास्तन्न जानते ॥ १४८ ॥
तत्र दोषः परिहृतो भविष्यति न संशयः।
कीचकोऽथ गृहं गत्वा भृशं हर्षपरिप्लुतः ॥ १४९ ॥
सैरन्ध्रीरूपिणं मूढो मृत्युं तं नावबुद्धवान्।
ततस्तु द्रौपदी गत्वा तदा भीमं महानसे ॥ १५० ॥
उपातिष्ठत कल्याणी कौरव्यं पतिमन्तिकम्।
तमुवाच सुकेशान्ता कीचकस्य मया कृतः ॥ १५१ ॥
सङ्गमो नर्तनागारे यथाऽवोचः परन्तप।
भीमोऽथ प्रथमं गत्वा रात्रौ छन्न उपाविशत् ॥ १५२ ॥

मृग हरिरिवाहृदय प्रत्याकाङ्क्षत कीचकम्।
कीचकश्चाप्यलङ्कृत्य यथाकाममुपागमत्॥ १५३॥
ता वेला नर्तनागार पाञ्चालीसङ्गमाशया।
पूर्वागत ततस्तत्र भीममप्रतिमौजसम्॥ १५४॥
शयान शयने तत्र सूतपुत्र परामृशत्।
सहसोत्पत्य कौन्तेय प्रहस्येदमुवाच ह॥ १५५॥
अद्य त्वा भगिनी पाप कृष्यमाण मया भुवि।
द्रक्ष्यतेऽद्रिप्रतीकाश सिंहेनेव महागजम्॥ १५६॥
निराबाधा त्वयि हते सैरन्ध्री विचरिष्यति।
सुखमेव चरिष्यन्ति सैरन्ध्र्या पतय सदा॥ १५७॥
ततो जग्राह केशेषु माल्यवत्सु महाबल।
स केशेषु परामृष्टो बलेन बलिना परः॥ १५८॥
आक्षिप्य केशान्वेगेन बाह्वोर्जग्राह पाण्डवम्।
बाहुयुद्ध तयोरासीत् क्रुद्धयोर्नरसिंहयो॥ १५९॥
तावन्योन्य समाश्लिष्य प्रकर्षन्तौ परस्परम्।
उभावपि प्रकाशेते प्रवृद्धौ वृषभाविव॥ १६०॥
तत एन परिश्रान्तमुपलभ्य वृकोदर।
योक्त्रयामास बाहुभ्या पशु रशनया यथा॥ १६१॥
प्रगृह्य तरसा दोर्भ्या कण्ठ तस्य वृकोदर।
अपीडयत कृष्णायास्तदा कोपोपशान्तये॥ १६२॥
अथ त भग्नसर्वाङ्ग व्याविद्धनयनाम्बरम्।
आक्रम्य च कटीदेशे जानुना कीचकाधमम्॥ १६३॥
अपीडयत बाहुभ्या पशुमारममारयत्।
तस्य पादौ च पाणी च शिरो ग्रीवा च सर्वश॥ १६४॥
काये प्रवेशयामास पशोरिव पिनाकधृक्।
त सम्मथितसर्वाङ्ग मासपिण्डोपम मृतम्॥ १६५॥

कृष्णाया दर्शयामास भीमसेनो महाबलः।
तत्कृत्वा दुष्करं कर्म कृष्णायाः प्रियमुत्तमम् ॥ १६६ ॥
आमन्त्र्य द्रौपदीं कृष्णां क्षिप्रमायान्महानसम्।
कीचकं घातयित्वा तु द्रौपदी योषितां वरा ॥ १६७ ॥
प्रहृष्टा गतसन्तापा सभापालानुवाच ह।
कीचकोऽयं हतः शेते गन्धर्वैः पतिभिर्मम ॥ १६८ ॥
परस्त्रीकामसम्मत्तस्तत्रागच्छत पश्यत।
तच्छ्रुत्वा भाषितं तस्या नर्तनागाररक्षिणः ॥ १६९ ॥
सहसैव समाजग्मुरादायोल्काः सहस्रशः।
क्वास्य ग्रीवा क्व चरणौ क्व पाणी क्व शिरस्तथा ॥ १७० ॥
इति स्म तं परीक्षन्ते गन्धर्वेण हतं तदा।
(अ.२३) तस्मिन्काले समागम्य सर्वे तत्रास्य बान्धवाः ॥ १७१ ॥
रुरुदुः कीचकं दृष्ट्वा परिवार्य समन्ततः।
ददृशुस्ते ततः कृष्णां सूतपुत्राः समागताः ॥ १७२ ॥
समवेतेषु सर्वेषु तामूचुरुपकीचकाः।
हन्यतां शीघ्रमसती यत्कृते कीचको हतः ॥ १७३ ॥
अथवा नैव हन्तव्या दह्यतां कामिना सह।
मृतस्यापि प्रियं कार्यं सूतपुत्रस्य सर्वथा ॥ १७४ ॥
ततस्तु तां समारोप्य निबध्य च सुमध्यमाम्।
जग्मुरुद्यम्य ते सर्वे श्मशानाभिमुखास्तदा ॥ १७५ ॥
ह्रियमाणा तु सा राजन्सूतपुत्रैरनिन्दिता।
प्राक्रोशन्नाथमिच्छन्ती कृष्णा नाथवती सती ॥ १७६ ॥
जयो जयन्तो विजयो जयत्सेनो जयद्बलः।
ते मे वाचं विजानन्तु सूतपुत्रा नयन्ति माम् ॥ १७७ ॥
भीम– अहं शृणोमि ते वाचं त्वया सैरन्ध्रि भाषिताम्।
तस्मात्ते सूतपुत्रेभ्यो भयं भीरु न विद्यते ॥ १७८ ॥

इत्युक्त्वा स महाबाहुर्विजजृम्भे जिघांसया।
ततः स व्यायतं कृत्वा वेषं विपरिवर्त्य च ॥ १७९ ॥
अद्वारेणाभ्यवस्कंद्य निर्जगाम बहिस्तदा।
चितासमीपे गत्वा स तत्रापश्यद्वनस्पतिम् ॥ १८० ॥
स तं वृक्षं दशव्यामं सस्कंधविटपं बली।
प्रगृह्याभ्यद्रवत्सूतान्दण्डपाणिरिवान्तकः ॥ १८१ ॥
ते तु दृष्ट्वा तदाऽऽविद्धं भीमसेनेन पादपम्।
विमुच्य द्रौपदीं तत्र प्राद्रवन्नगरं प्रति ॥ १८२ ॥
द्रवतस्तांस्तु सम्प्रेक्ष्य स वज्री दानवानिव।
शतं पञ्चाधिकं भीमः प्राहिणोद्यमसादनम् ॥ १८३ ॥
तत आश्वासयत्कृष्णां स विमुच्य विशाम्पते।
एवं ते निहता राजन् शतं पञ्च च कीचकाः ॥ १८४ ॥
स च सेनापतिः पूर्वमित्येतत्सूतषट्शतम्।
तद्दृष्ट्वा महदाश्चर्यं नरा नार्यश्च सङ्गताः।
विस्मयं परमं गत्वा नोचुः किञ्चन भारत ॥ १८५ ॥
(अ.२४) ते दृष्ट्वा निहतान्सूतान्राज्ञे गत्वा न्यवेदयन्।
गन्धर्वैर्निहता राजन्सूतपुत्रा महाबलाः ॥ १८६ ॥
तेषां तद्वचनं श्रुत्वा विराटो वाहिनीपतिः।
अब्रवीत्क्रियतामेषां सूतानां परमक्रिया ॥ १८७ ॥
सुदेष्णामब्रवीद्राजा महिषीं जातसाध्वसः।
सैरन्ध्रीमागतां ब्रूया ममैव वचनादिदम् ॥ १८८ ॥
गच्छ सैरन्ध्रि भद्रं ते यथाकामं वरानने।
बिभेति राजा सुश्रोणि गन्धर्वेभ्यः पराभवात् ॥ १८९ ॥
अथ मुक्ता भयात्कृष्णा सूतपुत्रान्निरस्य च।
मोक्षिता भीमसेनेन जगाम नगरं प्रति ॥ १९० ॥

ततो महानसद्वारि भीमसेनमवस्थितम्।
ददर्श राजन्पाञ्चाली यथा मत्तं महाद्विपम्॥ १९१॥
तं विस्मयन्ती शनकैः संज्ञाभिरिदमब्रवीत्।
गंधर्वराजाय नमो येनास्मि परिमोचिता॥ १९२॥
ततः सा नर्तनागारे धनञ्जयमपश्यत।
राज्ञः कन्या विराटस्य नर्तयानं महाभुजम्॥ १९३॥

बृहन्नला– कथं सैरन्ध्रि मुक्तासि कथं पापाश्च ते हताः।
इच्छामि वै तव श्रोतुं सर्वमेव यथातथम्॥ १९४॥

सैरन्ध्री– बृहन्नले किं नु तव सैरन्ध्र्या कार्यमद्य वै।
या त्वं वससि कल्याणि सदा कन्यापुरे सुखम्॥ १९५॥
न हि दुःखं समाप्नोषि सैरन्ध्री यदुपाश्नुते।
तेन मां दुःखितामेवं पृच्छसे प्रहसन्निव॥ १९६॥

बृहन्नला– बृहन्नलापि कल्याणि दुःखमाप्नोत्यनुत्तमम्।
तिर्यग्योनिगता बाले न चैनामवबुध्यसे॥ १९७॥
न तु केनचिदत्यन्तं कस्यचिद्धृदयं क्वचित्।
वेदितुं शक्यते नूनं तेन मां नावबुध्यसे॥ १९८॥
ततः सहैव कन्याभिर्द्रौपदी राजवेश्म तत्।
प्रविवेश सुदेष्णायाः समीपमुपगामिनी॥ १९९॥
तामब्रवीद्राजपुत्री विराटवचनादिदम्।
सैरन्ध्रि गम्यतां शीघ्रं यत्र कामयसे गतिम्॥ २००॥
राजा बिभेति ते भद्रे गन्धर्वेभ्यः पराभवात्।
त्वं चापि तरुणी सुभ्रु रूपेणाप्रतिमा भुवि।
पुंसामिष्टश्च विषयो गन्धर्वाश्चातिकोपनाः॥ २०१॥

सैरन्ध्री– त्रयोदशाहमात्रं मे राजा क्षमतु भामिनि।
कृतकृत्या भविष्यन्ति गन्धर्वास्ते न संशयः॥ २०२॥

इत्युक्त्वा स महाबाहुर्विजजृम्भे जिघांसया।
ततः स व्यायतं कृत्वा वेषं विपरिवर्त्य च ॥ १७९ ॥
अद्वारेणाभ्यवस्कंद्य निर्जगाम बहिस्तदा।
चितासमीपे गत्वा स तत्रापश्यद्वनस्पतिम् ॥ १८० ॥
स तं वृक्षं दशव्यामं सस्कंधविटपं बली।
प्रगृह्याभ्यद्रवत्सूतान्दण्डपाणिरिवान्तकः ॥ १८१ ॥
ते तु दृष्ट्वा तदाऽऽविद्धं भीमसेनेन पादपम्।
विमुच्य द्रौपदीं तत्र प्राद्रवन्नगरं प्रति ॥ १८२ ॥
द्रवतस्तांस्तु सम्प्रेक्ष्य स वज्री दानवानिव।
शतं पञ्चाधिकं भीमः प्राहिणोद्यमसादनम् ॥ १८३ ॥
तत आश्वासयत्कृष्णां स विमुच्य विशाम्पते।
एवं ते निहता राजन् शतं पञ्च च कीचकाः ॥ १८४ ॥
स च सेनापतिः पूर्वमित्येतत्सूतषट्शतम्।
तद्दृष्ट्वा महदाश्चर्यं नरा नार्यश्च सङ्गताः।
विस्मयं परमं गत्वा नोचुः किञ्चन भारत ॥ १८५ ॥
(अ.२४) ते दृष्ट्वा निहतान्सूताव्राज्ञे गत्वा न्यवेदयन्।
गन्धर्वैर्निहता राजन्सूतपुत्रा महाबलाः ॥ १८६ ॥
तेषां तद्वचनं श्रुत्वा विराटो वाहिनीपतिः।
अब्रवीत्क्रियतामेषां सूतानां परमक्रिया ॥ १८७ ॥
सुदेष्णामब्रवीद्राजा महिषीं जातसाध्वसः।
सैरन्ध्रीमागतां ब्रूया ममैव वचनादिदम् ॥ १८८ ॥
गच्छ सैरन्ध्रि भद्रं ते यथाकामं वरानने।
बिभेति राजा सुश्रोणि गन्धर्वेभ्यः पराभवात् ॥ १८९ ॥
अथ मुक्ता भयात्कृष्णा सूतपुत्रान्निरस्य च।
मोक्षिता भीमसेनेन जगाम नगरं प्रति ॥ १९० ॥

ततो महानसद्वारि भीमसेनमवस्थितम्।
ददर्श राजन्पाञ्चाली यथा मत्तं महाद्विपम् ॥ १९१ ॥
तं विस्मयन्ती शनकैः संज्ञाभिरिदमब्रवीत्।
गंधर्वराजाय नमो येनास्मि परिमोचिता ॥ १९२ ॥
ततः सा नर्तनागारे धनञ्जयमपश्यत।
राज्ञः कन्या विराटस्य नर्तयानं महाभुजम् ॥ १९३ ॥
बृहन्नला– कथं सैरन्ध्रि मुक्तासि कथं पापाश्च ते हताः।
इच्छामि वै तव श्रोतुं सर्वमेव यथातथम् ॥ १९४ ॥
सैरन्ध्री– बृहन्नले किं नु तव सैरन्ध्र्या कार्यमद्यवै।
या त्वं वससि कल्याणि सदा कन्यापुरे सुखम् ॥ १९५ ॥
न हि दुःखं समाप्नोषि सैरन्ध्री यदुपाश्नुते।
तेन मां दुःखितामेवं पृच्छसे प्रहसन्निव ॥ १९६ ॥
बृहन्नला– बृहन्नलापि कल्याणि दुःखमाप्नोत्यनुत्तमम्।
तिर्यग्योनिगता बाले न चैनामवबुध्यसे ॥ १९७ ॥
न तु केनचिदत्यन्तं कस्यचिद्धृदयं क्वचित्।
वेदितुं शक्यते नूनं तेन मां नावबुध्यसे ॥ १९८ ॥
ततः सहैव कन्याभिर्द्रौपदी राजवेश्म तत्।
प्रविवेश सुदेष्णायाः समीपमुपगामिनी ॥ १९९ ॥
तामब्रवीद्राजपुत्री विराटवचनादिदम्।
सैरन्ध्रि गम्यतां शीघ्रं यत्र कामयसे गतिम् ॥ २०० ॥
राजा बिभेति ते भद्रे गन्धर्वेभ्यः पराभवात्।
त्वं चापि तरुणी सुभ्रु रूपेणाप्रतिमा भुवि।
पुंसामिष्टश्च विषयो गन्धर्वाश्चातिकोपनाः ॥ २०१ ॥
सैरन्ध्री– त्रयोदशाहमात्रं मे राजा क्षम्यतु भामिनि।
कृतकृत्या भविष्यन्ति गन्धर्वास्ते न संशयः ॥ २०२ ॥

ततो मामुपनेष्यन्ति करिष्यन्ति च ते प्रियम्।
ध्रुवं च श्रेयसा राजा योक्ष्यते सह बान्धवैः ॥ २०३ ॥

(अ.२५) अथ वै धार्तराष्ट्रेण प्रयुक्ता ये बहिश्चराः।
मृगयित्वा बहून्ग्रामान्राष्ट्राणि नगराणि च ॥ २०४ ॥
कृतकृत्या न्यवर्तन्त ते चरा नगरं प्रति।
दुर्योधनं सभामध्ये आसीनमिदमब्रुवन् ॥ २०५ ॥
नरेन्द्र बहुशोऽन्विष्टा नैव विद्मश्च पाण्डवान्।
अत्यन्तं वा विनष्टास्ते भद्रं तुभ्यं नरर्षभ ॥ २०६ ॥
इमां च नः प्रियां वीर वाचं भद्रवतीं शृणु।
येन त्रिगर्ता निहता बलेन महता नृप ॥ २०७ ॥
सूतेन राज्ञो मत्स्यस्य कीचकेन बलीयसा।
स हतः पतितः शेते गन्धर्वैर्निशि भारत।
अदृश्यमानैर्दुष्टात्मा भ्रातृभिः सह सोदरैः ॥ २०८ ॥

## दक्षिणगोग्रहणम्

(अ.२६) ततो दुर्योधनो राजा श्रुत्वा तेषां वचस्तदा।
चिरमन्तर्मना भूत्वा प्रत्युवाच सभासदः ॥ २०९ ॥
अल्पावशिष्टं कालस्य गतं भूयिष्ठमन्ततः।
तेषामज्ञातचर्यायामस्मिन्वर्षे त्रयोदशे ॥ २१० ॥
अस्य वर्षस्य शेषं चेद्व्यतीयुरिह पाण्डवाः।
दु सहा भवेयुः संरब्धाः कौरवान्प्रति ते ध्रुवम् ॥ २११ ॥
प्रविशेयुर्जितक्रोधास्तावदेव पुनर्वनम्।
तस्मात्क्षिप्रं बुभूषध्वं यथा तेऽत्यन्तमव्ययम् ॥ २१२ ॥
राज्यं निर्द्वन्द्वमव्यग्रं निःसपत्नं चिरं भवेत्।
अथाब्रवीत्ततः कर्णः क्षिप्रं गच्छन्तु भारत ॥ २१३ ॥

अन्ये धूर्ता नरा दक्षा निभृताः साधुकारिणः।
ज्येष्ठं दुःशासनस्तत्र भ्राता भ्रातरमब्रवीत् ॥ २१४ ॥
येषु नः प्रत्ययो राजंश्चारेषु मनुजाधिप।
ते यान्तु दत्तदेया वै भूयस्तान्परिमार्गितुम् ॥ २१५ ॥
(अ.३०) अथ राजा त्रिगर्तानां सुशर्मा रथयूथपः।
प्राप्तकालमिदं वाक्यमुवाच त्वरितो बली ॥ २१६ ॥
असकृन्मत्स्यराज्ञा मे राष्ट्रं बाधितमोजसा।
प्रणेता कीचकस्तस्य बलवानभवत्पुरा ॥ २१७ ॥
निहतः स तु गन्धर्वैः पापकर्मा नृशंसवान्।
तस्मिन्विनिहते राजा हतदर्पो निराश्रयः ॥ २१८ ॥
भविष्यति निरुत्साहो विराट इति मे मतिः।
तत्र यात्रा मम मता यदि ते रोचतेऽनघ ॥ २१९ ॥
कौरवाणां च सर्वेषां कर्णस्य च महात्मनः।
कौरवैः सह सङ्गत्य त्रिगर्तैश्च विशाम्पते ॥ २२० ॥
गास्तस्यापहरामोऽद्य सर्वैश्चैव सुसंहताः।
तच्छ्रुत्वा वचनं तस्य कर्णो राजानमब्रवीत् ॥ २२१ ॥
किं च नः पाण्डवैः कार्यं हीनार्थबलपौरुषैः।
यामो राजन्निरुद्विग्ना विराटनगरं वयम् ॥ २२२ ॥
आदास्यामो हि गास्तस्य विविधानि वसूनि च।
ततो दुर्योधनो राजा वाक्यमादाय तस्य तत् ॥ २२३ ॥
वैकर्तनस्य कर्णस्य क्षिप्रमाज्ञापयत्स्वयम्।
शासने नित्यसंयुक्तं दुःशासनमनन्तरम् ॥ २२४ ॥
सह वृद्धैस्तु सम्मन्त्र्य क्षिप्रं योजय वाहिनीम्।
सुशर्मा च यथोद्दिष्टं देशं यातु महारथः ॥ २२५ ॥
प्रागेव हि सुसंवीतो मत्स्यस्य विषयं प्रति।
जघन्यतो वयं तत्र यास्यामो दिवसान्तरे।
विषयं मत्स्यराजस्य सुसमृद्धं सुसंहताः ॥ २२६ ॥

(अ.३१) ततस्त्रयोदशस्यान्ते तस्य वर्षस्य भारत।
सुशर्मणा गृहीतं तद्गोधन तरसा बहु ॥ २२७ ॥
ततो जवेन महता गोप· पुरमथाव्रजत्।
सोऽब्रवीदुपसङ्गम्य विराटं प्रणतस्तदा ॥ २२८ ॥
अस्मान्युधि विनिर्जित्य परिभूय सबान्धवान्।
गवां शतसहस्राणि त्रिगर्ता कालयन्ति ते ॥ २२९ ॥
तच्छ्रुत्वा नृपति· सेना मत्स्यानां समयोजयत्।
अथ मत्स्योऽब्रवीद्राजा शतानीक जघन्यजम् ॥ २३० ॥
कङ्कबल्लवगोपाला दामग्रन्थिश्च वीर्यवान्।
युद्धयेयुरिति मे बुद्धिर्वर्तते नात्र संशयः ॥ २३१ ॥
एतेषामपि दीयन्तां रथा ध्वजपताकिनः।
एतच्छ्रुत्वा तु नृपतेर्वाक्यं त्वरितमानस· ॥ २३२ ॥
शतानीकस्तु पार्थेभ्यो रथान्राजन्समादिशत्।
रथान्हेमपरिच्छन्नानास्थाय च महारथा·।
विराटमन्वयु· पार्था सहिता· कुरुपुङ्गवाः ॥ २३३ ॥
(अ.३२) निर्याय नगराच्छूरा व्यूढानीका प्रहारिणः।
त्रिगर्तानस्पृशन्मत्स्या· सूर्ये परिणते सति ॥ २३४ ॥
(अ ३३) तत· सुशर्मा त्रैगर्त· सह भ्रात्रा यवीयसा।
अभ्यद्रवन्मत्स्यराजं रथव्रातेन सर्वशः ॥ २३५ ॥
तौ निहत्य पृथग्धुर्यावुभौ तौ पार्ष्णिसारथी।
विरथं मत्स्यराजानं जीवग्राहमगृह्णताम् ॥ २३६ ॥
तस्मिन्गृहीते विरथे विराटे बलवत्तरे।
प्राद्रवन्त भयान्मत्स्यास्त्रिगर्तैरर्दिता भृशम् ॥ २३७ ॥
तेषु सन्त्रस्यमानेषु कुन्तीपुत्रो युधिष्ठिरः।
प्रत्यभाषन्महाबाहुं भीमसेनमरिन्दमम् ॥ २३८ ॥

मत्स्यराजः परामृष्टस्त्रिगर्तेन सुशर्मणा ।
तं मोचय महाबाहो न गच्छेद्द्विषतां वशम् ॥ २३९ ॥
एवमुक्तस्तु वेगेन भीमसेनो महाबलः ।
समासाद्य सुशर्माणमश्वानस्य व्यपोथयत् ॥ २४० ॥
तं भीमसेनो धावन्तमभ्यधावत वीर्यवान् ।
त्रिगर्तराजमादातुं सिंह क्षुद्रमृग यथा ॥ २४१ ॥
अभिद्रुत्य सुशर्माणं केशपक्षे परामृशत् ।
समुद्यम्य तु रोषात्तं निष्पिपेष महीतले ॥ २४२ ॥
तत एनं विचेष्टन्त बद्ध्वा पार्थो वृकोदरः ।
अभ्येत्य रणमध्यस्थमभ्यगच्छद्युधिष्ठिरम् ॥ २४३ ॥
तं राजा प्राहसद्दृष्ट्वा मुच्यतां वै नराधमः ।
एवमुक्तोऽब्रवीद्भीम· सुशर्माणं महाबलम् ॥ २४४ ॥
दासोऽस्मीति त्वया वाच्यं संसत्सु च सभासु च ।
एवं ते जीवितं दद्यामेष युद्धजितो विधिः ॥ २४५ ॥
तमुवाच ततो ज्येष्ठो भ्राता सप्रणयं वच· ।
मुञ्च मुञ्चाधमाचारं प्रमाणं यदि ते वयम् ॥ २४६ ॥
दासभावं गतो ह्येष विराटस्य महीपतेः ।
अदासो गच्छ मुक्तोऽसि मैवं कार्षी· कदाचन ॥ २४७ ॥
(अ ३४) एवमुक्ते तु सव्रीड· सुशर्मासीदधोमुख· ।
स मुक्तोऽभ्येत्य राजानमभिवाद्य प्रतस्थिवान् ॥ २४८ ॥
विसृज्य तु सुशर्माणं पाण्डवास्ते हतद्विष· ।
सङ्ग्रामशिरसो मध्ये तां रात्रिं सुखिनोऽवसन् ॥ २४९ ॥

## उत्तरगोग्रहणम्

(अ ३५) याते त्रिगर्तान्मत्स्ये तु पशूंस्तान्वै परीप्सति ।
दुर्योधन· सहामात्यो विराटमुपयादथ ॥ २५० ॥

(अ.३१) ततस्त्रयोदशस्यान्ते तस्य वर्षस्य भारत।
सुशर्मणा गृहीतं तद्गोधनं तरसा बहु ॥ २२७ ॥
ततो जवेन महता गोपः पुरमथाव्रजत्।
सोऽब्रवीदुपसङ्गम्य विराटं प्रणतस्तदा ॥ २२८ ॥
अस्मान्युधि विनिर्जित्य परिभूय सबान्धवान्।
गवां शतसहस्राणि त्रिगर्ताः कालयन्ति ते ॥ २२९ ॥
तच्छ्रुत्वा नृपतिः सेनां मत्स्यानां समयोजयत्।
*अथ मत्स्योऽब्रवीद्राजा शतानीकं जघन्यजम् ॥ २३० ॥*
कङ्कवल्लवगोपाला दामग्रन्थिश्च वीर्यवान्।
युद्धयेयुरिति मे बुद्धिर्वर्तते नात्र संशयः ॥ २३१ ॥
एतेषामपि दीयन्तां रथा ध्वजपताकिनः।
एतच्छ्रुत्वा तु नृपतेर्वाक्यं त्वरितमानसः ॥ २३२ ॥
शतानीकस्तु पार्थेभ्यो रथान्राजन्समादिशत्।
रथान्हेमपरिच्छन्नानास्थाय च महारथाः।
विराटमन्वयुः पार्था सहिताः कुरुपुङ्गवाः ॥ २३३ ॥
(अ.३२) निर्याय नगराच्छूरा व्यूढानीकाः प्रहारिणः।
त्रिगर्तानस्पृशन्मत्स्याः सूर्ये परिणते सति ॥ २३४ ॥
(अ ३३) ततः सुशर्मा त्रैगर्तः सह भ्रात्रा यवीयसा।
अभ्यद्रवन्मत्स्यराजं रथव्रातेन सर्वशः ॥ २३५ ॥
तौ निहत्य पृथग्धुर्यावुभौ तौ पार्ष्णिसारथी।
विरथं मत्स्यराजानं जीवग्राहमगृह्णताम् ॥ २३६ ॥
तस्मिन्गृहीते विरथे विराटे बलवत्तरे।
प्राद्रवन्त भयान्मत्स्यास्त्रिगर्तैरर्दिता भृशम् ॥ २३७ ॥
तेषु सन्त्रस्यमानेषु कुन्तीपुत्रो युधिष्ठिरः।
प्रत्यभाषन्महाबाहुं भीमसेनमरिन्दमम् ॥ २३८ ॥

मत्स्यराजः परामृष्टस्त्रिगर्तेन सुशर्मणा।
तं मोचय महाबाहो न गच्छेद्द्विषतां वशम् ॥ २३९ ॥
एवमुक्तस्तु वेगेन भीमसेनो महाबलः।
समासाद्य सुशर्माणमश्वानस्य व्यपोथयत् ॥ २४० ॥
तं भीमसेनो धावन्तमभ्यधावत वीर्यवान्।
त्रिगर्तराजमादातुं सिंहः क्षुद्रमृगं यथा ॥ २४१ ॥
अभिद्रुत्य सुशर्माणं केशपक्षे परामृशत्।
समुद्यम्य तु रोषात्तं निष्पिपेष महीतले ॥ २४२ ॥
तत एनं विचेष्टन्तं बद्ध्वा पार्थो वृकोदरः।
अभ्येत्य रणमध्यस्थमभ्यगच्छद्युधिष्ठिरम् ॥ २४३ ॥
तं राजा प्राहसद्दृष्ट्वा मुच्यतां वै नराधमः।
एवमुक्तोऽब्रवीद्भीमः सुशर्माणं महाबलम् ॥ २४४ ॥
दासोऽस्मीति त्वया वाच्यं संसत्सु च सभासु च।
एवं ते जीवितं दद्यामेष युद्धजितो विधिः ॥ २४५ ॥
तमुवाच ततो ज्येष्ठो भ्राता सप्रणयं वचः।
मुञ्च मुञ्चाधमाचारं प्रमाणं यदि ते वयम् ॥ २४६ ॥
दासभावं गतो ह्येष विराटस्य महीपतेः।
अदासो गच्छ मुक्तोऽसि मैवं कार्षीः कदाचन ॥ २४७ ॥
(अ ३४) एवमुक्ते तु सव्रीडः सुशर्मासीदधोमुखः।
स मुक्तोऽभ्येत्य राजानमभिवाद्य प्रतस्थिवान् ॥ २४८ ॥
विसृज्य तु सुशर्माणं पाण्डवास्ते हतद्विषः।
सङ्ग्रामशिरसो मध्ये तां रात्रिं सुखिनोऽवसन् ॥ २४९ ॥

## उत्तरगोग्रहणम्

(अ ३५) याते त्रिगर्तान्मत्स्ये तु पशूंस्तान्वै परीप्सति।
दुर्योधनः सहामात्यो विराटमुपयादथ ॥ २५० ॥

भीष्मो द्रोणश्च कर्णश्च कृपश्च परमास्त्रवित्।
एते मत्स्यानुपागम्य विराटस्य महीपतेः ॥ २५१ ॥
घोषान्विद्राव्य तरसा गोधनं जहुरोजसा।
गोपाध्यक्षो भयत्रस्तो रथमास्थाय सत्वरः ॥ २५२ ॥
जगाम नगरायैव परिक्रोशंस्तदार्तवत्।
स प्रविश्य पुरं राज्ञो नृपवेश्माभ्ययात्ततः ॥ २५३ ॥
दृष्ट्वा भूमिंजयं नाम पुत्रं मत्स्यस्य मानिनम्।
तस्मै तत्सर्वमाचष्ट राष्ट्रस्य पशुकर्षणम् ॥ २५४ ॥
षष्टिं गवां सहस्राणि कुरवः कालयन्ति ते।
तद्विजेतुं समुत्तिष्ठ गोधनं राष्ट्रवर्धन ॥ २५५ ॥
स्त्रीमध्य उक्तस्तेनासौ तद्वाक्यमभयङ्करम्।
अन्तःपुरे श्लाघमान इदं वचनमब्रवीत् ॥ २५६ ॥
(अ.३६) अद्याहमनुगच्छेयं दृढधन्वा गवां पदम्।
यदि मे सारथिः कश्चिद्भवेदश्वेषु कोविदः ॥ २५७ ॥
पश्यध्वं सारथिं क्षिप्रं मम युक्तं प्रयास्यतः।
पश्येयुरद्य मे वीर्यं कुरवस्ते समागताः ॥ २५८ ॥
किं नु पार्थोऽर्जुनः साक्षादयमस्मान्प्रबाधते।
तस्य तद्वचनं स्त्रीषु भाषतश्च पुनः पुनः ॥ २५९ ॥
न साऽमर्षत पाञ्चाली बीभत्सोः परिकीर्तनम्।
अथैनमुपसङ्गम्य स्त्रीमध्यात्सा तपस्विनी ॥ २६० ॥
व्रीडमानेव शनकैरिदं वचनमब्रवीत्।
योऽसौ बृहद्वारणाभो युवा सुप्रियदर्शनः ॥ २६१ ॥
बृहन्नलेति विख्यातः पार्थस्यासीत्स सारथिः।
धनुष्यनवरश्चासीत्तस्य शिष्यो महात्मनः ॥ २६२ ॥
दृष्टपूर्वो मया वीर चरन्त्या पाण्डवान्प्रति।
एवमुक्तः स सैरन्ध्र्या भगिनीं प्रत्यभाषत ॥ २६३ ॥

गच्छ त्वमनवद्याङ्गि तामानय बृहन्नलाम्।
सा भ्रात्रा प्रेषिता शीघ्रमगच्छन्नर्तनागृहम् ॥ २६४ ॥
(अ.३७) तमब्रवीद्राजपुत्री समुपेत्य नरर्षभम्।
गावो राष्ट्रस्य कुरुभि· काल्यन्ते नो बृहन्नले ॥ २६५ ॥
ता विजेतुं मम भ्राता प्रयास्यति धनुर्धरः।
तस्मै प्रयतमानाय सारथ्यर्थे बृहन्नले ॥ २६६ ॥
आचचक्षे हयज्ञाने सैरन्ध्री कौशलं तव।
सा सारथ्यं मम भ्रातु कुरु साधु बृहन्नले ॥ २६७ ॥
एवमुक्तस्तु सुश्रोण्या तया सख्या परन्तप·।
जगाम राजपुत्रस्य सकाशममितौजस· ॥ २६८ ॥
दूरादेव तु ता प्रेक्ष्य राजपुत्रोऽभ्यभाषत।
बृहन्नले गायनो वा नर्तनो वा पुनर्भव ॥ २६९ ॥
क्षिप्रं मे रथमास्थाय निगृह्णीष्व हयोत्तमान्।
स तत्र नर्मसंयुक्तमकरोत्पाण्डवो बहु ॥ २७० ॥
उत्तराया प्रमुखत सर्वं जानन्नरिन्दम ।
ऊर्ध्वमुत्क्षिप्य कवचं शरीरे प्रत्यमुञ्चत ॥ २७१ ॥
कुमार्यस्तत्र त दृष्ट्वा प्राहसन्पृथुलोचना·।
स तु दृष्ट्वा विमुह्यन्तं स्वयमेवोत्तरस्तत· ॥ २७२ ॥
कवचेन महार्हेण समनह्यद्बृहन्नलाम्।
धनूंषि च महार्हाणि बाणांश्च रुचिरान्बहून् ॥ २७३ ॥
आदाय प्रययौ वीर· स बृहन्नलसारथि ।
अथोत्तरा च कन्याश्च सख्यस्तामब्रुवंस्तदा ॥ २७४ ॥
बृहन्नले आनयेथा वासांसि रुचिराणि च।
पाञ्चालिकार्थं चित्राणि सूक्ष्माणि च मृदूनि च।
विजित्य सङ्ग्रामगतान्भीष्मद्रोणमुखान्कुरून् ॥ २७५ ॥

बृहन्नला- यद्युत्तरोऽयं सङ्ग्रामे विजेष्यति महारथान्।
अथाहरिष्ये वासांसि दिव्यानि रुचिराणि च ॥ २७६ ॥

(अ.३८) ततस्तांश्चोदयामास सदश्वान्पाण्डुनन्दनः।
नातिदूरमथो गत्वा मत्स्यपुत्रधनञ्जयौ ॥ २७७ ॥
अवेक्षेतामभित्रघ्नौ कुरूणां बलिनां बलम्।
तदनीकं महद्दृष्ट्वा गजाश्वरथसङ्कुलम् ॥ २७८ ॥
हृष्टरोमा भयोद्विग्नः पार्थं वैराटिरब्रवीत्।
नोत्सहे कुरुभिर्योद्धुं रोमहर्षं हि पश्य मे ॥ २७९ ॥
दृष्ट्वैव हि परानाजौ मनः प्रव्यथतीव मे।
त्रिगर्तान्मे पिता यातः शून्ये सम्प्रणिधाय माम् ॥ २८० ॥
सर्वां सेनामुपादाय न मे सन्तीह सैनिकाः।
सोऽहमेको बहून्बालः कृतास्त्रानकृतश्रमः।
प्रतियोद्धुं न शक्ष्यामि निवर्तस्व बृहन्नले ॥ २८१ ॥

बृहन्नला- स्वयमेव च मामात्थ वह मां कौरवान्प्रति।
सोऽहं त्वां तत्र नेष्यामि यत्रैते बहुला ध्वजाः ॥ २८२ ॥
न चेद्विजित्य गास्तास्त्वं गृहान्वै प्रतियास्यसि।
प्रहसिष्यन्ति वीरास्त्वां नरा नार्यश्च सङ्गताः ॥ २८३ ॥
अहमप्यत्र सैरन्ध्र्या ख्याता सारथ्यकर्मणि।
न च शक्ष्याम्यनिर्जित्य गाः प्रयातुं पुरं प्रति ॥ २८४ ॥

उत्तर- कामं हरन्तु मत्स्यानां भूयांसः कुरवो धनम्।
प्रहसन्तु च मां नार्यो नरा वापि बृहन्नले ॥ २८५ ॥
सङ्ग्रामे न च कार्यं मे गावो गच्छन्तु चापि मे।
इत्युक्त्वा प्राद्रवद्भीतो रथात्प्रस्कन्द्य कुण्डली ॥ २८६ ॥
उत्तरं तु प्रधावन्तमभिद्रुत्य धनञ्जयः।
गत्वा पदशतं तूर्णं केशपक्षे परामृशत् ॥ २८७ ॥

उत्तर– शृणुयास्त्वं हि कल्याणि बृहन्नले सुमध्यमे।
निवर्तय रथं क्षिप्रं जीवन्भद्राणि पश्यति ॥ २८८ ॥
एवमादीनि वाक्यानि विलपन्तमचेतसम्।
प्रहस्य पुरुषव्याघ्रो रथस्यान्तिकमानयत् ॥ २८९ ॥
अथैनमब्रवीत्पार्थो भयार्तं नष्टचेतसम्।
यदि नोत्सहसे योद्धुं शत्रुभि शत्रुकर्षण ॥ २९० ॥
एहि मे त्व हयान्यच्छ युध्यमानस्य शत्रुभिः।
अहं वै कुरुभिर्योत्स्ये विजेष्यामि च ते पशून् ॥ २९१ ॥
तत एन विचेष्टन्तमकाम भयपीडितम्।
रथमारोपयामास पार्थः प्रहरता वर. ॥ २९२ ॥

(अ.४०) तां शमीमुपसगम्य पार्थो वैराटिमब्रवीत्।
समादिष्टो मया क्षिप्रं धनूंष्यवहरोत्तर ॥ २९३ ॥
नेमानि हि त्वदीयानि सोढु शक्ष्यन्ति मे बलम्।
तस्माद्भूमिंजयारोह शमीमेता पलाशिनीम्।
अस्यां हि पाण्डुपुत्राणां धनूंषि निहितान्युत ॥ २९४ ॥
(अ.४१) एवमुक्त. स पार्थेन रथात्प्रस्कन्द्य कुण्डली।
आरुरोह शमीवृक्षं वैराटिरवशस्तदा ॥ २९५ ॥
सोऽपहृत्य महार्हाणि धनूंषि पृथुवक्षसाम्।
परिवेष्टनपत्राणि विमुच्य समुपानयत् ॥ २९६ ॥
उत्तर– सुवर्णविकृतानीमान्यायुधानि महात्मनाम्।
(अ.४४) रुचिराणि प्रकाशन्ते पार्थानामाशुकारिणाम् ॥ २९७ ॥
क नु स्विदर्जुन· पार्थ· कौरव्यो वा युधिष्ठिरः।
नकुल सहदेवश्च भीमसेनश्च पाण्डव·।
द्रौपदी क च पाञ्चाली स्त्रीरत्नमिति विश्रुता ॥ २९८ ॥
अर्जुन– अहमस्म्यर्जुन· पार्थ· सभास्तारो युधिष्ठिर·।
बल्लवो भीमसेनस्तु पितुस्ते रसपाचक ॥ २९९ ॥

अश्वबन्धोऽथ नकुलः सहदेवस्तु गोकुले ।
सैरन्ध्रीं द्रौपदीं विद्धि यत्कृते कीचका हताः ॥ ३०० ॥
ततः स पार्थं वैराटिरभ्यवादयदन्तिकात् ।
अहं भूमिंजयो नाम नाम्नाऽहमपि चोत्तरः ॥ ३०१ ॥
दिष्ट्या त्वां पार्थ पश्यामि स्वागतं ते धनञ्जय ।
यदज्ञानादवोचं त्वां क्षन्तुमर्हसि तन्मम ॥ ३०२ ॥
यतस्त्वया कृतं पूर्वं चित्रं कर्म सुदुष्करम् ।
अतो भयं व्यतीतं मे प्रीतिश्च परमा त्वयि ॥ ३०३ ॥
(अ.४५) ततो विमुच्य बाहुभ्यां वलयानि स वीर्यवान् ।
चित्रे काञ्चनसन्नाहे प्रत्यमुञ्चत्तदा तले ॥ ३०४ ॥
कृष्णानभङ्गिमतः केशाञ्श्वेतेनोद्ग्रथ्य वाससा ।
अथासौ प्राङ्मुखो भूत्वा शुचिः प्रयतमानसः ॥ ३०५ ॥
अभिदध्यौ महाबाहुः सर्वास्त्राणि रथोत्तमे ।
प्रतिगृह्य ततोऽस्त्राणि प्रहृष्टवदनोऽभवत् ॥ ३०६ ॥
(अ.४६) ध्वजं सिंहं रथात्तस्मादपनीय महारथः ।
प्रणिधाय शमीमूले प्रायादुत्तरसारथिः ॥ ३०७ ॥
काञ्चनं सिंहलाङ्गूलं ध्वजं वानरलक्षणम् ।
मनसा चिन्तयामास प्रसादं पावकस्य च ॥ ३०८ ॥
स च तच्चिन्तितं ज्ञात्वा ध्वजे भूतान्यदेशयत् ।
सपताकं विचित्राङ्गं सोपासङ्गं महाबलम् ॥ ३०९ ॥
खात्पपात रथे तूर्णं दिव्यरूपं मनोरमम् ।
रथं समागतं दृष्ट्वा दक्षिणं प्राकरोत् तदा ॥ ३१० ॥
रथमास्थाय बीभत्सुः कौन्तेयः श्वेतवाहनः ।
ततः प्रायादुदीचीं च कपिप्रवरकेतनः ॥ ३११ ॥
द्रोण– यथा रथस्य निर्घोषो यथा मेघ उदीर्यते ।
कम्पते च यथा भूमिर्नैषोऽन्यः सव्यसाचिनः ॥ ३१२ ॥

(अ.४७) अथ दुर्योधनो राजा समरे भीष्ममब्रवीत्।
द्रोणं च रथशार्दूलं कृपं च सुमहारथम् ॥ ३१३ ॥
पराभूतैर्हि वस्तव्यं तैश्च द्वादश वत्सरान्।
वने जनपदे ज्ञातैरेष एव पणो हि नः ॥ ३१४ ॥
तेषां न तावन्निर्वृत्तं वर्तते तु त्रयोदशम्।
अज्ञातवासो बीभत्सुरथास्माभिः समागतः ॥ ३१५ ॥
अनिर्वृत्ते तु निर्वासे यदि बीभत्सुरागतः।
पुनर्द्वादश वर्षाणि वने वत्स्यन्ति पाण्डवाः ॥ ३१६ ॥
लोभाद्वा ते न जानीयुरस्मान्वा मोह आविशत्।
हीनातिरिक्तमेतेषां भीष्मो वेदितुमर्हति ॥ ३१७ ॥
भीष्म- एषामभ्यधिका मासाः पञ्च च द्वादश क्षपाः।
(अ.५२) त्रयोदशानां वर्षाणामिति मे वर्तते मतिः ॥ ३१८ ॥
सर्वं यथावच्चरितं यद्यदेभिः प्रतिश्रुतम्।
एवमेतद्ध्रुवं ज्ञात्वा ततो बीभत्सुरागतः ॥ ३१९ ॥
तस्माद्यदत्र कल्याणं लोके सद्भिरनुष्ठितम्।
तत्संविधीयतां शीघ्रं मा वो ह्यर्थोऽभ्यगात्परम् ॥ ३२० ॥
सम्प्रवृत्ते तु सङ्ग्रामे भावाभावौ जयाजयौ।
अवश्यमेकं स्पृशतो दृष्टमेतदसंशयम् ॥ ३२१ ॥
तस्माद्युद्धोचितं कर्म कर्म वा धर्मसंहितम्।
क्रियतामाशु राजेन्द्र सम्प्राप्तश्च धनञ्जयः ॥ ३२२ ॥
दुर्योधन- नाहं राज्यं प्रदास्यामि पाण्डवानां पितामह।
युद्धोपचारिकं यत्तु तच्छीघ्रं प्रविधीयताम् ॥ ३२३ ॥
भीष्म- क्षिप्रं बलचतुर्भागं गृह्य गच्छ पुरं प्रति।
ततोऽपरश्चतुर्भागो गाः समादाय गच्छतु ॥ ३२४ ॥
वयं चार्धेन सैन्यस्य प्रतियोत्स्याम पाण्डवम्।
तद्वाक्यं रुरुचे तेषां भीष्मेणोक्तं महात्मना ॥ ३२५ ॥

तथा हि कृतवान्राजा कौरवाणामनन्तरम् ।
भीष्मः प्रस्थाप्य राजानं गोधनं तदनन्तरम् ॥ ३२६ ॥
सेनामुख्यान्व्यवस्थाप्य व्यूहितुं सम्प्रचक्रमे ।
(अ.५३) तथा व्यूढेष्वनीकेषु कौरवेयेषु भारत ।
उपायादर्जुनस्तूर्णं रथघोषेण नादयन् ॥ ३२७ ॥
अर्जुन- एष व्यवस्थितो द्रोणो द्रौणिश्च तदनन्तरम् ।
भीष्मः कृपश्च कर्णश्च महेष्वासाः समागताः ॥ ३२८ ॥
राजानं नात्र पश्यामि गाः समादाय गच्छति ।
उत्सृज्यैतद्रथानीकं गच्छ यत्र सुयोधनः ॥ ३२९ ॥
तत्रैव योत्स्ये वैराटे नास्ति युद्धं निरामिषम् ।
तं जित्वा विनिवर्तिष्ये गाः समादाय वै पुनः ॥ ३३० ॥
एवमुक्तः स वैराटिर्हयान्संयम्य यत्नतः ।
अचोदयत्ततो वाहान्यत्र दुर्योधनो गतः ॥ ३३१ ॥
तथैव गत्वा बीभत्सुर्नाम विश्राव्य चात्मनः ।
शलभैरिव तां सेनां शरैः शीघ्रमवाकिरत् ॥ ३३२ ॥
ततः शङ्खं प्रदध्मौ स द्विषतां लोमहर्षणम् ।
तस्य शङ्खस्य शब्देन रथनेमिस्वनेन च ॥ ३३३ ॥
ऊर्ध्वं पुच्छान्विधुन्वाना रेभमाणाः समन्ततः ।
गावः प्रतिन्यवर्तन्त दिशमास्थाय दक्षिणाम् ॥ ३३४ ॥
(अ.५४) गोषु प्रयातासु जवेन मत्स्यान्
किरीटिनं कृतकार्यं च मत्वा ।
दुर्योधनायाभिमुखं प्रयान्तं
कुरुप्रवीराः सहसा निपेतुः ॥ ३३५ ॥
(अ.६३) तान्विकीर्णपताकेन रथेनादित्यवर्चसा ।
प्रत्युद्ययौ महाराज समन्ताद्वानरध्वजः ॥ ३३६ ॥

ततः कृपश्च कर्णश्च द्रोणश्च रथिनां वरः।
तं महास्त्रैर्महावीर्यं परिवार्य धनञ्जयम् ॥ ३३७ ॥
ववर्षुः शरवर्षाणि पातयन्तो धनञ्जयम्।
ततः प्रहस्य बीभत्सुर्दिव्यमैन्द्रं महारथः ॥ ३३८ ॥
अस्त्रमादित्यसङ्काशं गाण्डीवे समयोजयत्।
शररश्मिरिवादित्यः प्रतस्थे समरे बली ॥ ३३९ ॥
किरीटमाली कौन्तेयः सर्वान्प्राच्छादयत्कुरून्।
नागाश्च रथिनः सर्वे मुमुहुस्तत्र भारत ॥ ३४० ॥
सङ्ग्रामे विमुखाः सर्वे योधास्ते हतचेतसः।
एवं सर्वाणि सैन्यानि भग्नानि भरतर्षभ।
व्यद्रवन्त दिशः सर्वा निराशानि स्वजीविते ॥ ३४१ ॥
(अ.६४) ततः शान्तनवो भीष्मो भरतानां पितामहः।
प्रदक्षिणमुपावृत्य बीभत्सुं समवारयत् ॥ ३४२ ॥
अथ जिष्णुरुपावृत्य क्षुरधारेण कार्मुकम्।
चकर्त भीष्मस्य तदा जातरूपपरिष्कृतम् ॥ ३४३ ॥
निमेषान्तरमात्रेण भीष्मोऽन्यत्कार्मुकं रणे।
समादाय महाबाहुः सज्यं चक्रे महारथः ॥ ३४४ ॥
शरांश्च सुबहून्क्रुद्धो मुमोचाशु धनञ्जये।
अर्जुनोऽपि शरांस्तीक्ष्णान्भीष्माय निशितान्बहून् ॥ ३४५ ॥
चिक्षेप सुमहातेजास्तथा भीष्मश्च पाण्डवे।
अथैनं दशभिर्बाणैः प्रत्यविध्यत्स्तनान्तरे ॥ ३४६ ॥
यतमानं पराक्रान्तं कुन्तीपुत्रो धनञ्जयः।
स पीडितो महाबाहुर्गृहीत्वा रथकूबरम् ॥ ३४७ ॥
गाङ्गेयो युद्धदुर्धर्षस्तस्थौ दीर्घमिवान्तरम्।
तं विसंज्ञमपोवाह संयन्ता रथवाजिनाम्
उपदेशमनुस्मृत्य रक्षमाणो महारथम् ॥ ३४८ ॥

(अ.६५) भीष्मे तु सङ्ग्रामशिरो विहाय
पलायमाने धृतराष्ट्रपुत्रः।
धनञ्जयं शत्रुगणे चरन्तम्
विव्याध भल्लेन ललाटमध्ये ॥ ३४९ ॥

(अ.६६) भीष्मस्ततः शान्तनवो विवृत्य
द्रोणः कृपश्चैव विविंशतिश्च।
ववर्षुरभ्येत्य शरैः समन्ता-
न्मेघा यथा भूधरमम्बुवर्गैः ॥ ३५० ॥

ततोऽस्त्रमस्त्रेण निवार्य तेषां
गाण्डीवधन्वा कुरुपुङ्गवानाम्।
सम्मोहनं शत्रुसहोऽन्यदस्त्रं
प्रादुश्चकारैन्द्रिरपारणीयम् ॥ ३५१ ॥

ततः पुनर्भीमरवं प्रगृह्य
दोर्भ्यां महाशङ्खमुदारघोषम्।
व्यनादयत्स प्रदिशो दिशः खं
भुवं च पार्थो द्विषतां निहन्ता ॥ ३५२ ॥

ते शङ्खनादेन कुरुप्रवीराः
सम्मोहिताः पार्थसमीरितेन।
उत्सृज्य चापानि दुरासदानि
सर्वे तदा शान्तिपरा बभूवुः ॥ ३५३ ॥

तथा विसंज्ञेषु च तेषु पार्थः
स्मृत्वा च वाक्यानि तथोत्तरायाः।
निर्याहि मध्यादिति मत्स्यपुत्र-
मुवाच यावत्कुरवो विसंज्ञाः ॥ ३५४ ॥

रश्मीन्समुत्सृज्य ततो महात्मा
रथादवप्लुत्य विराटपुत्रः।

चस्त्राण्युपादाय महारथानां
तूर्णं पुनः स्वं रथमारुरोह ॥ ३५५ ॥
लब्ध्वा हि संज्ञां तु कुरुप्रवीराः
पार्थं निरीक्ष्याथ सुरेन्द्रकल्पम् ।
रणे विमुक्तं स्थितमेकमाजौ
स धार्तराष्ट्रस्त्वरितं बभाषे ॥ ३५६ ॥
अयं कथं वै भवतो विमुक्त-
स्तथा प्रमथ्नीत यथा न मुच्येत् ।
तमब्रवीच्छान्तनवः प्रहस्य
क्व ते गता बुद्धिरभूत्क्व वीर्यम् ॥ ३५७ ॥
शान्तिं परां प्राप्य यदा स्थितोऽभू-
रुत्सृज्य बाणांश्च धनुर्विचित्रम् ।
रक्षिमं कुरून्याहि कुरुप्रवीर
विजित्य गाश्च प्रतियातु पार्थः ॥ ३५८ ॥
तद्भीष्मवाक्यं हितमीक्ष्य सर्वे
निवर्तनायैव मतो निदध्युः
दुर्योधनस्योत्तमरत्नचित्रम्
चिच्छेद पार्थो मुकुटं शरेण ॥ ३५९ ॥
दृष्ट्वा प्रयातांस्तु कुरून्किरीटी
हृष्टोऽब्रवीत्तत्र स मत्स्यपुत्रम् ।
आवर्तयाश्वान्पशवो जितास्ते
याताः परे याहि पुरं प्रहृष्टः ॥ ३६० ॥
(अ.६७) स शत्रुसेनामवजित्य जिष्णु-
राच्छिद्य सर्वं च धनं कुरुभ्यः ।
श्मशानमागत्य पुनः शमीं ता-
मभ्येत्य तस्थौ शरविक्षताङ्गः ॥ ३६१ ॥

ततः स वह्निप्रतिमो महाकपिः
सहैव भूतैर्दिवमुत्पपात।
तथैव माया विहिता बभूव
ध्वजं च सिंहं युयुजे रथे पुनः ॥ ३६२ ॥
विधाय तच्चायुधमाजिवर्धनं
कुरूत्तमानामिषुधीः शरांस्तथा।
प्रायात्स मत्स्यो नगरं प्रहृष्टः
किरीटिना सारथिना महात्मना ॥ ३६३ ॥
पार्थस्तु कृत्वा परमार्यकर्म
निहत्य शत्रून्द्विषतां निहन्ता।
चकार वेणीं च तथैव भूयो
जग्राह रश्मीन्पुनरुत्तरस्य ॥ ३६४ ॥
विवेश हृष्टो नगरं महामना
बृहन्नलारूपमुपेत्य सारथिः ॥ ३६५ ॥

पन्थानमुपसङ्गम्य फाल्गुनो वाक्यमब्रवीत्।
गच्छन्तु त्वरिताश्चेमे गोपालाः प्रेषितास्त्वया।
नगरे प्रियमाख्यातुं घोषयन्तु च ते जयम् ॥ ३६६ ॥

(अ.६८) धनं चापि विजित्याशु विराटो वाहिनीपतिः।
विवेश नगरं हृष्टश्चतुर्भिः पाण्डवैः सह ॥ ३६७ ॥
उत्तरं परिपप्रच्छ क्व यात इति चाब्रवीत्।
आचख्युस्तस्य तत्सर्वं स्त्रियः कन्याश्च वेश्मनि ॥ ३६८ ॥
अथोत्तरेण प्रहिता दूतास्ते शीघ्रगामिनः।
विराटनगरं प्राप्य विजयं समवेदयन् ॥ ३६९ ॥
ततो विराटो नृपतिः सम्प्रहृष्टतनूरुहः।
आच्छादयित्वा दूतांस्तान्मन्त्रिणं सोऽभ्यचोदयत् ॥ ३७० ॥

राजमार्गाः क्रियन्तां मे पताकाभिरलङ्कृताः।
वादित्राणि च सर्वाणि प्रत्युद्यान्तु सुतं मम ॥ ३७१ ॥
घण्टावान्मानवः शीघ्रं मत्तमारुह्य वारणम्।
शृङ्गाटकेषु सर्वेषु आख्यातु विजयं मम ॥ ३७२ ॥
अथोत्तरः शुभैर्गन्धैर्माल्यैश्च विविधैस्तथा।
अवकीर्यमाणः संहृष्टो नगरं स्वैरमागतः ॥ ३७३ ॥
ततो राज्ञः सुतो ज्येष्ठः प्राविशत्पृथिवीञ्जयः।
सोभिवाद्य पितुः पादौ कङ्कं चाप्युपतिष्ठत ॥ ३७४ ॥
प्रशशंस ततो मत्स्यः शृण्वतः सव्यसाचिनः।
त्वया मे सदृशः पुत्रो न भूतो न भविष्यति ॥ ३७५ ॥
*अवगाढा ह्रियन्तो मे सुतो वातोऽभिवाति माम्।*
यस्त्वं धनमथाजैषीः कुरुभिर्ग्रस्तमाहवे ॥ ३७६ ॥
उत्तर– न मया निर्जिता गावो न मया निर्जिताः परे।
(अ.६९) कृतं तत्सकलं तेन देवपुत्रेण केनचित् ॥ ३७७ ॥
स हि भीतं द्रवन्तं मां देवपुत्रो न्यवर्तयत्।
स चातिष्ठद्रथोपस्थे वज्रसंहननो युवा ॥ ३७८ ॥
विराट– क्व स वीरो महाबाहुर्देवपुत्रो महायशाः ॥ ३७९ ॥
उत्तर– अन्तर्धानं गतस्तत्र देवपुत्रो महाबलः।
स तु श्वो वा परश्वो वा मन्ये प्रादुर्भविष्यति ॥ ३८० ॥
ततः पार्थोऽभ्यनुज्ञातो विराटेन महात्मना।
प्रददौ तानि वासांसि विराटदुहितुः स्वयम् ॥ ३८१ ॥
मन्त्रयित्वा तु कौन्तेय उत्तरेण महात्मना।
इतिकर्तव्यता सर्वा राजन्पार्थे युधिष्ठिरे।
ततस्तथा तद्व्यदधाद्यथावत्पुरुषर्षभ ॥ ३८२ ॥
(अ.७०) ततस्तृतीये दिवसे भ्रातरः पञ्च पाण्डवाः।
स्नाताः शुक्लाम्बरधराः समये चरितव्रताः ॥ ३८३ ॥

विराटस्य सभां गत्वा भूमिपालासनेष्वथ।
निषेदुः पावकप्रख्याः सर्वे धिष्ण्येष्विवाग्नयः॥ ३८४॥
तेषु तत्रोपविष्टेषु विराटः पृथिवीपतिः।
आजगाम सभां कर्तुं राजकार्याणि सर्वशः॥ ३८५॥
अथ मत्स्योऽब्रवीत्कङ्कं देवरूपमिव स्थितम्।
स किलाक्षातिवापस्त्वं सभास्तारो मया वृतः॥ ३८६॥
अथ राजासने कस्मादुपविष्टस्त्वलङ्कृतः।
परिहासेप्सया वाक्यं विराटस्य निशम्य तत्।
स्मयमानोऽर्जुनो राजन्निदं वचनमब्रवीत्॥ ३८७॥

अर्जुन- इन्द्रस्यार्धासनं राजन्नयमारोढुमर्हति।
महर्षिकल्पो राजर्षिः सर्वलोकेषु विश्रुतः।
अयं कुरूणामृषभो धर्मराजो युधिष्ठिरः॥ ३८८॥

विराट- यद्येष राजा कौरव्यः कुन्तीपुत्रो युधिष्ठिरः।
(अ.७१) कतमोऽस्यार्जुनो भ्राता भीमश्च कतमो बली॥ ३८९॥
नकुलः सहदेवो वा द्रौपदी वा यशस्विनी।
यदा द्यूतजिताः पार्था न प्राज्ञायन्त ते क्वचित्॥ ३९०॥

अर्जुन- य एष बल्लवो ब्रूते सूदस्तव नराधिप।
एष भीमो महाराज भीमवेगपराक्रमः॥ ३९१॥
यश्चासीदश्वबन्धस्ते नकुलोऽयं परन्तपः।
गोसङ्ख्यः सहदेवश्च माद्रीपुत्रौ महारथौ॥ ३९२॥
एषा पद्मपलाशाक्षी सुमध्या चारुहासिनी।
सैरन्ध्री द्रौपदी राजन्यस्यार्थे कीचका हताः॥ ३९३॥
अर्जुनोऽहं महाराज व्यक्तं ते श्रोत्रमागतः।
उषिताः स्मो महाराज सुखं तव निवेशने॥ ३९४॥
अज्ञातवासमुषिता गर्भवास इव प्रजाः।
यदार्जुनेन ते वीराः कथिताः पञ्च पाण्डवाः॥ ३९५॥

तदाऽर्जुनस्य वैराटिः कथयामास विक्रमम्।
अनेन विजिता गावो जिताश्च कुरवो युधि ॥ ३९६ ॥
पाण्डवांश्च ततः सर्वान्मत्स्यराजः प्रतापवान्।
धनञ्जयं पुरस्कृत्य दिष्ट्या दिष्ट्येति चाब्रवीत् ॥ ३९७ ॥
दिष्ट्या भवन्तः सम्प्राप्ताः सर्वे कुशलिनो वनात्।
दिष्ट्या सम्पालितं कृच्छ्रमज्ञातं वे दुरात्मभिः ॥ ३९८ ॥
उत्तरां प्रतिगृह्णातु सव्यसाची धनञ्जयः।
अयं ह्यौपयिको भर्ता तस्याः पुरुषसत्तमः ॥ ३९९ ॥
एवमुक्तो धर्मराजः पार्थमैक्षद्धनञ्जयम्।
ईक्षितश्चार्जुनो भ्रात्रा मत्स्यं वचनमब्रवीत् ॥ ४०० ॥
प्रतिगृह्णाम्यहं राजन्स्नुषां दुहितरं तव।
युक्तश्चावां हि सम्बन्धो मत्स्यभारतयोरपि ॥ ४०१ ॥

## अभिमन्युविवाहः

विराट– किमर्थं पाण्डवश्रेष्ठ भार्यां दुहितरं मम।
(अ.७२) प्रतिग्रहीतुं नेमां त्वं मया दत्तामिहेच्छसि ॥ ४०२ ॥
अर्जुन– अन्तःपुरेऽहमुषितः सदा पश्यन्सुतां तव।
रहस्यं च प्रकाशं च विश्वस्तां पितृवन्मयि ॥ ४०३ ॥
आचार्यवच्च मां नित्यं मन्यते दुहिता तव।
वयस्थया तया राजन्सह संवत्सरोषितः ॥ ४०४ ॥
अतिशङ्का भवेत्स्थाने तव लोकस्य वा विभो।
अभिशापादहं भीतो मिथ्यावादात्परन्तप ॥ ४०५ ॥
स्नुषार्थमुत्तरां राजन्प्रतिगृह्णामि ते सुताम्।
स्वस्रीयो वासुदेवस्य साक्षाद्देवशिशुर्यथा ॥ ४०६ ॥
दयितश्चक्रहस्तस्य सर्वास्त्रेषु च कोविदः।
अभिमन्युर्महाबाहुः पुत्रो मम विशाम्पते ॥ ४०७ ॥

जामाता तव युक्तो वै भर्ता च दुहितुस्तव।
विराट- यत्कार्यं मन्यसे पार्थ क्रियतां तदनन्तरम् ॥ ४०८ ॥
सर्वे कामाः समृद्धा मे सम्बन्धी यस्य मेऽर्जुनः।
एवं ब्रुवति राजेन्द्रे कुन्तीपुत्रो युधिष्ठिरः ॥ ४०९ ॥
अन्वशासत्स संयोगं समये मत्स्यपार्थयोः।
ततो मित्रेषु सर्वेषु वासुदेवे च भारत ॥ ४१० ॥
प्रेषयामास कौन्तेयो विराटश्च महीपतिः।
ततस्त्रयोदशे वर्षे निवृत्ते पञ्च पाण्डवाः ॥ ४११ ॥
उपप्लव्ये विराटस्य समपद्यन्त सर्वशः।
अभिमन्युं च बीभत्सुरानिनाय जनार्दनम् ॥ ४१२ ॥
आनर्तेभ्योऽपि दाशार्हानानयामास पाण्डवः।
तानागतानभिप्रेक्ष्य मत्स्यो धर्मभृतां वरः ॥ ४१३ ॥
पूजयामास विधिवत्सभृत्यबलवाहनान्।
ततः प्रत्युपयातेषु पार्थिवेषु ततस्ततः।
विवाहं कारयामास सौभद्रस्य महात्मनः ॥ ४१४ ॥

आदितः श्लोकाः ॥ ४११७ ॥

इति श्रीमहाभारतसारे विराटपर्व समाप्तम्।

# महाभारतसारः

## उद्योगपर्व

नारायणं नमस्कृत्य नरं चैव नरोत्तमम्।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत्॥

### सेनोद्योगे श्रीकृष्णद्रुपदादीनां मन्त्रणम्

वैशम्पायन– कृत्वा विवाहं तु कुरुप्रवीरा-
स्तदाऽभिमन्योर्मुदिताः स्वपक्षाः।
विश्रम्य रात्रावुषसि प्रतीताः
सभां विराटस्य ततोऽभिजग्मुः॥ १॥

ततः कथास्ते समवाययुक्ताः
कृत्वा विचित्राः पुरुषप्रवीराः।
तस्थुर्मुहूर्तं परिचिन्तयन्तः।
कृष्णं नृपास्ते समुदीक्षमाणाः॥ २॥

कथान्तमासाद्य च माधवेन
सङ्घट्टिताः पाण्डवकार्यहेतोः
ते राजसिंहाः सहिता ह्यशृण्वन्
वाक्यं महार्थं सुमहोदयं च॥ ३॥

श्रीकृष्ण– सर्वैर्भवद्भिर्विदितं यथाऽयं
युधिष्ठिरः सौबलेनाक्षवत्याम्।
जितो निकृत्याऽपहृतं च राज्यं
वनप्रवासे समयः कृतश्च॥ ४॥

पाण्डोः सुतैस्तद्व्रतमुग्ररूपं
वर्षाणि षट् सप्त च चीर्णमग्र्यैः।

एवं गते धर्मसुतस्य राज्ञो
दुर्योधनस्यापि च यद्धितं स्यात् ॥ ५ ॥
तच्चिन्तयध्वं कुरुपुङ्गवानां
धर्म्यं च युक्तं च यशस्करं च ।
यत्तु स्वयं पाण्डुसुतैर्विजित्य
समाहृतं भूमिपतीन्प्रपीड्य ॥ ६ ॥
तत्प्रार्थयन्ते पुरुषप्रवीराः
कुन्तीसुता माद्रवतीसुतौ च ।
दुर्योधनस्यापि मतं यथाव-
न्न ज्ञायते किं नु करिष्यतीति ॥ ७ ॥
अज्ञायमाने च मते परस्य
किं स्यात्समारभ्यतमं मतं वः ।
तस्मादितो गच्छतु धर्मशीलः
शुचि. कुलीन. पुरुषोऽप्रमत्त. ॥ ८ ॥
दूतः समर्थः प्रशमाय तेषां
राज्यार्धदानाय युधिष्ठिरस्य ।

बलदेव- (अ.२)

अर्धं हि राज्यस्य विसृज्य वीराः
कुन्तीसुतास्तस्य कृते यतन्ते ॥ ९ ॥
प्रदाय चार्धं धृतराष्ट्रपुत्र.
सुखी सहास्माभिरतीव मोदेत् ।
दुर्योधनस्यापि मतं च वेत्तुं
वक्तुं च वाक्यानि युधिष्ठिरस्य ॥ १० ॥
प्रियं च मे स्याद्यदि तत्र कश्चिद्-
व्रजेच्छमार्थं कुरुपाण्डवानाम् ।
स भीष्ममामन्त्र्य कुरुप्रवीरं
वैचित्रवीर्यं च महानुभावम् ॥ ११ ॥

ब्रवीतु वाक्यं प्रणिपातयुक्तं
कुन्तीसुतस्यार्थकरं यथा स्यात्।
स दीव्यमानः प्रतिदेवनेन
अक्षेषु नित्यं तु पराङ्मुखेषु ॥ १२ ॥
संरम्भमाणो विजितः प्रसह्य
तत्रापराधः शकुनेर्न कश्चित्।
तस्मात्प्रणम्यैव वचो ब्रवीतु
वैचित्र्यवीर्यं बहुसामयुक्तम् ॥ १३ ॥
साम्ना जितोऽर्थोऽर्थकरो भवेत
युद्धेऽनयो भविता नेह सोऽर्थः ॥ १४ ॥

सात्यकि– यादृशः पुरुषस्यात्मा तादृशं सम्प्रभाषते।
(अ.३) यथारूपोऽन्तरात्मा ते तथारूपं प्रभाषसे ॥ १५ ॥
नाभ्यसूयामि ते वाक्यं ब्रुवतो लाङ्गलध्वज।
ये तु शृण्वन्ति ते वाक्यं तानसूयामि माधव ॥ १६ ॥
कथं हि धर्मराजस्य दोषमल्पमपि ब्रुवन्।
लभते परिषन्मध्ये व्याहर्तुमकुतोभयः ॥ १७ ॥
समाहूय महात्मानं जितवन्तोऽक्षकोविदाः।
अनक्षज्ञं यथाश्रद्धं तेषु धर्मजयः कुतः ॥ १८ ॥
यदि कुन्तीसुतं गेहे क्रीडन्तं भ्रातृभिः सह।
अभिगम्य जयेयुस्ते तत्तेषां धर्मतो भवेत् ॥ १९ ॥
कथं प्रणिपतेच्चायमिह कृत्वा पणं परम्।
कथं च धर्मयुक्तास्ते न च राज्यं जिहीर्षवः ॥ २० ॥
निवृत्तवासान्कौन्तेयान्य आहुर्विदिता इति।
अनुनीता हि भीष्मेण द्रोणेन विदुरेण च ॥ २१ ॥
न व्यवस्यन्ति पाण्डूनां प्रदातुं पैतृकं वसु।
ते वयं धृतराष्ट्रस्य पुत्रं शकुनिना सह ॥ २२ ॥

कर्णं चैव निहत्याजावभिषेक्ष्याम पाण्डवम् ।
नाधर्मो विद्यते कश्चिच्छत्रून्हत्वाऽऽततायिनः ।
अधर्म्यमयशस्यं च शात्रवाणां प्रयाचनम् ॥ २३ ॥

द्रुपद– एवमेतन्महाबाहो भविष्यति न संशयः ।
(अ.४) न हि दुर्योधनो राज्यं मधुरेण प्रदास्यति ॥ २४ ॥
अनुवर्त्स्यति तं चापि धृतराष्ट्रः सुतप्रियः ।
भीष्मद्रोणौ च कार्पण्यान्मौर्ख्याद्राधेयसौबलौ ॥ २५ ॥
बलदेवस्य वाक्यं तु मम ज्ञाने न युज्यते ।
न तु वाच्यो मृदुवचो धार्तराष्ट्रः कथञ्चन ॥ २६ ॥
न हि मार्दवसाध्योऽसौ पापबुद्धिर्मतो मम ।
गर्दभे मार्दवं कुर्याद्गोषु तीक्ष्णं समाचरेत् ॥ २७ ॥
मृदु दुर्योधने वाक्यं यो ब्रूयात्पापचेतसि ।
मृदुं वै मन्यते पापो भाषमाणमशक्तिकम् ॥ २८ ॥
जितमर्थं विजानीयादबुधो मार्दवे सति ।
एतच्चैव करिष्यामो यत्नश्च क्रियतामिह ॥ २९ ॥
प्रस्थापयाम मित्रेभ्यो बलान्युद्योजयन्तु नः ।
स च दुर्योधनो नूनं प्रेषयिष्यति सर्वशः ॥ ३० ॥
पूर्वाभिपन्नाः सन्तश्च भजन्ते पूर्वचोदनम् ।
तत्त्वरध्वं नरेन्द्राणां पूर्वमेव प्रचोदने ॥ ३१ ॥
महद्धि कार्यं वोढव्यमिति मे वर्तते मतिः ।
अयं च ब्राह्मणो विद्वान्मम राजन्पुरोहितः ।
प्रेष्यतां धृतराष्ट्राय वाक्यमस्मै प्रदीयताम् ॥ ३२ ॥

वासु– उपपन्नमिदं वाक्यं सोमकानां धुरन्धरे ।
(अ.५) अर्थसिद्धिकरं राज्ञः पाण्डवस्यामितौजसः ॥ ३३ ॥
एतच्च पूर्वं कार्यं नः सुनीतमभिकाङ्क्षताम् ।
किं तु सम्बन्धकं तुल्यमस्माकं कुरुपाण्डुषु ॥ ३४ ॥

ते विवाहार्थमानीता वयं सर्वे तथा भवान् ।
कृते विवाहे मुदिता गमिष्यामो गृहान्प्रति ॥ ३५ ॥
भवान्वृद्धतमो राज्ञां वयसा च श्रुतेन च ।
भवन्तं धृतराष्ट्रश्च सततं बहु मन्यते ॥ ३६ ॥
स भवान्प्रेषयत्वद्य पाण्डवार्थकरं वचः ।
सर्वेषां निश्चितं तन्नः प्रेषयिष्यति यद्भवान् ॥ ३७ ॥
अथ दर्पान्वितो मोहान्न कुर्याद्धृतराष्ट्रजः ।
अन्येषां प्रेषयित्वा च पश्चादस्मान्समाह्वयेः ॥ ३८ ॥
ततः सत्कृत्य वार्ष्णेयं विराटः पृथिवीपतिः ।
गृहात्प्रस्थापयामास सगणं सहबान्धवम् ॥ ३९ ॥
द्वारकां तु गते कृष्णे युधिष्ठिरपुरोगमाः ।
चक्रुः साङ्ग्रामिकं सर्वं विराटश्च महीपतिः ॥ ४० ॥
ततः प्रस्थापयोवृद्धं पाञ्चाल्यः स्वपुरोहितम् ।
कुरुभ्यः प्रेषयामास युधिष्ठिरमते स्थितः ॥ ४१ ॥
द्रुपद- (अ. ६) भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः ।
बुद्धिमत्सु नराः श्रेष्ठा नरेष्वपि द्विजातयः ॥ ४२ ॥
द्विजेषु वैद्याः श्रेयांसो वैद्येषु कृतबुद्धयः ।
कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवादिनः ॥ ४३ ॥
स भवान्कृतबुद्धीनां प्रधान इति मे मतिः ।
कुलेन च विशिष्टोऽसि वयसा च श्रुतेन च ॥ ४४ ॥
विदितं चापि ते सर्वं यथावृत्तः स कौरवः ।
पाण्डवश्च यथावृत्तः कुन्तीपुत्रो युधिष्ठिरः ॥ ४५ ॥
ते तथा वञ्चयित्वा तु धर्मराजं युधिष्ठिरम् ।
न कस्याञ्चिदवस्थायां राज्यं दास्यन्ति वै स्वयम् ॥ ४६ ॥
न च तेभ्यो भयं तेऽस्ति ब्राह्मणो ह्यसि वेदवित् ।
दूतकर्मणि युक्तश्च स्थविरश्च विशेषतः ॥ ४७ ॥

स भवान्पुण्ययोगेन मुहूर्तेन जयेन च।
कौरवेयान्प्रयात्वाशु कौन्तेयस्यार्थसिद्धये ॥ ४८ ॥
तथाऽनुशिष्टः प्रययौ द्रुपदेन महात्मना।
पुरोधा वृत्तसम्पन्नो नगरं नागसाह्वयम् ॥ ४९ ॥

## श्रीकृष्णस्य अर्जुनसारथ्यस्वीकारः

(अ.७) पुरोहितं ते प्रस्थाप्य नगरं नागसाह्वयम्।
दूतान्प्रस्थापयामासुः पार्थिवेभ्यस्ततस्ततः ॥ ५० ॥
गते द्वारवतीं कृष्णे बलदेवे च माधवे।
सर्वमागमयामास पाण्डवानां विचेष्टितम् ॥ ५१ ॥
धृतराष्ट्रात्मजो राजा गूढैः प्रणिहितैश्चरैः।
स श्रुत्वा माधवं यान्तं द्वारकामभ्ययात्पुरीम् ॥ ५२ ॥
तमेव दिवसं चापि कौन्तेयः पाण्डुनन्दनः ॥ ५३ ॥
आनर्तनगरीं रम्यां जगामाशु धनञ्जयः।
ततः शयाने गोविन्दे प्रविवेश सुयोधनः ॥ ५४ ॥
उच्छीर्षतश्च कृष्णस्य निषसाद वरासने।
ततः किरीटी तस्यानु प्रविवेश महामनाः ॥ ५५ ॥
पश्चाच्चैव स कृष्णस्य प्रह्वोऽतिष्ठत्कृताञ्जलिः।
प्रतिबुद्धः स वार्ष्णेयो ददर्शाग्रे किरीटिनम् ॥ ५६ ॥
स तयोः स्वागतं कृत्वा यथावत्प्रतिपूज्य तौ।
तदागमनजं हेतुं पप्रच्छ मधुसूदनः ॥ ५७ ॥
ततो दुर्योधनः कृष्णमुवाच प्रहसन्निव।
विग्रहेऽस्मिन्भवान्साह्यं मम दातुमिहार्हति ॥ ५८ ॥
समं हि भवतः सख्यं मम चैवाऽर्जुनेऽपि च।
तथा सम्बन्धकं तुल्यमस्माकं त्वयि माधव।
अहं चाभिगतः पूर्वं त्वामद्य मधुसूदन ॥ ५९ ॥

## शल्यागमनम्

(अ.८) शल्यः श्रुत्वा तु दूतानां सैन्येन महता वृतः।
अभ्ययात्पाण्डवान्राजन्सह पुत्रैर्महारथैः ॥ ७३ ॥
ततो दुर्योधनः श्रुत्वा महात्मानं महारथम्।
उपायान्तमभिद्रुत्य स्वयमानर्च भारत ॥ ७४ ॥
कारयामास पूजार्थं तस्य दुर्योधनः सभाः।
तत्र माल्यानि मांसानि भक्ष्यं पेयं च सत्कृतम् ॥ ७५ ॥
स ताः सभाः समासाद्य पूज्यमानो यथामरः।
मेनेऽभ्यधिकमात्मानमवमेने पुरन्दरम् ॥ ७६ ॥
सम्प्रहृष्टो यदा शल्यो दिदित्सुरपि जीवितम्।
गूढो दुर्योधनस्तत्र दर्शयामास मातुलम् ॥ ७७ ॥
तं दृष्ट्वा मद्रराजश्च ज्ञात्वा यत्नं च तस्य तम्।
परिष्वज्याऽब्रवीत्प्रीत इष्टोऽर्थो गृह्यतामिति ॥ ७८ ॥

दुर्योधन–सत्यवाग्भव कल्याण वरो वै मम दीयताम्।
सर्वसेनाप्रणेता वै भवान्भवितुमर्हति ॥ ७९ ॥
कृतमित्यब्रवीच्छल्य. किमन्यत्क्रियतामिति।
कृतमित्येव गान्धारिः प्रत्युवाच पुन. पुन. ॥ ८० ॥

शल्य– गच्छ दुर्योधन पुरं स्वकमेव नरर्षभ।
अहं गमिष्ये द्रष्टुं वै युधिष्ठिरमरिन्दमम् ॥ ८१ ॥

दुर्योधन–क्षिप्रमागम्यतां राजन्पाण्डवं वीक्ष्य पार्थिव।
त्वय्यधीनाः स्म राजेन्द्र वरदानं स्मरस्व नः ॥ ८२ ॥
स तथा शल्यमामन्त्र्य पुनरायात्स्वकं पुरम्।
शल्यो जगाम कौन्तेयानाख्यातु कर्म तस्य तत् ॥ ८३ ॥
उपप्लव्यं स गत्वा तु स्कन्धावारं प्रविश्य च।
पाण्डवानथ तान्सर्वाञ्छल्यस्तत्र ददर्श ह ॥ ८४ ॥

आसने चोपविष्टस्तु शल्यः पार्थमुवाच ह।
अरण्यवासाद्दिष्ट्याऽसि विमुक्तो जयतां वर ॥ ८५ ॥

अज्ञातवासं घोरं च वसता दुष्करं कृतम्।
अवाप्स्यसि सुखं राजन्हत्वा शत्रून्परन्तप ॥ ८६ ॥

ततोऽस्याकथयद्राजा दुर्योधनसमागमम्।
तच्च शुश्रूषितं सर्वं वरदानं च भारत ॥ ८७ ॥

युधिष्ठिर- सुकृतं ते कृतं राजन्प्रहृष्टेनान्तरात्मना।
दुर्योधनस्य यद्वीर त्वया वाचा प्रतिश्रुतम् ॥ ८८ ॥

एकं त्विच्छामि भद्रं ते क्रियमाणं महीपते।
राजन्नकर्तव्यमपि कर्तुमर्हसि सत्तम ॥ ८९ ॥

(अ.१८) भवान्कर्णस्य सारथ्यं करिष्यति न संशयः।
तत्र तेजोवधः कार्यः कर्णस्यार्जुनसंस्तवः ॥ ९० ॥

शल्य- एवमेतत्करिष्यामि यथा मां सम्प्रभाषसे।
यच्चान्यदपि शक्ष्यामि तत्करिष्याम्यहं तव ॥ ९१ ॥

ततस्त्वामन्त्र्य कौन्तेयाञ्छल्यो मद्राधिपस्तदा।
जगाम सबलः श्रीमान्दुर्योधनमरिन्दम ॥ ९२ ॥

## हस्तिनापुरमागतस्य द्रुपदपुरोहितस्य वाक्यम्

(अ.१९) य. स पाञ्चालराजेन प्रेषितः कौरवान्प्रति ॥ ९३ ॥

(अ.२०) स च कौरव्यमासाद्य द्रुपदस्य पुरोहितः।
सर्वं कौशल्यमुक्त्वाऽदौ पृष्ट्वा चैवमनामयम् ॥ ९४ ॥

सर्वसेनाप्रणेतॄणां मध्ये वाक्यमुवाच ह।
सर्वैर्भवद्भिर्विदितो राजधर्मः सनातनः ॥ ९५ ॥

वाक्योपादानहेतोस्तु वक्ष्यामि विदिते सति।
धृतराष्ट्रश्च पाण्डुश्च सुतावेकस्य विश्रुतौ ॥ ९६ ॥

तयोः समानं द्रविणं पैतृकं नात्र संशयः।
धृतराष्ट्रस्य ये पुत्राः प्राप्तं तैः पैतृकं वसु ॥ ९७ ॥
पाण्डुपुत्राः कथं नाम न प्राप्ताः पैतृकं वसु।
प्राणान्तिकैरप्युपायैः प्रयतद्भिरनेकशः ॥ ९८ ॥
शेषवन्तो न शकिता नेतुं वै यमसादनम्।
ते सर्वं पृष्ठतः कृत्वा तत्सर्वं पूर्वकिल्बिषम् ॥ ९९ ॥
साम्नैव कुरुभिः सार्धमिच्छन्ति कुरुपुङ्गवाः।
न हि ते विग्रहं वीराः कुर्वन्ति कुरुभिः सह ॥ १०० ॥
अविनाशेन लोकस्य काङ्क्षन्ते पाण्डवाः स्वकम्।
यश्चापि धार्तराष्ट्रस्य हेतुः स्याद्विग्रहं प्रति ॥ १०१ ॥
स च हेतुर्न मन्तव्यो बलीयांसस्तथा हि ते।
ते भवन्तो यथाधर्मं यथासमयमेव च।
प्रयच्छन्तु प्रदातव्यं मा वः कालोऽत्यगादयम् ॥ १०२ ॥
(अ.२१) तस्य तद्वचनं श्रुत्वा प्रज्ञावृद्धो महाद्युतिः।
सम्पूज्यैनं यथाकालं भीष्मो वचनमब्रवीत् ॥ १०३ ॥
दिष्ट्या कुशलिनः सर्वे सह दामोदरेण ते।
दिष्ट्या न युद्धमनसः पाण्डवाः सह बान्धवैः ॥ १०४ ॥
असंशयं क्लेशितास्ते वने चेह च पाण्डवाः।
प्राप्ताश्च धर्मतः सर्वं पितुर्धनमसंशयम् ॥ १०५ ॥
भीष्मे ब्रुवति तद्वाक्यं धृष्टमाक्षिप्य मन्युना।
दुर्योधनं समालोक्य कर्णो वचनमब्रवीत् ॥ १०६ ॥
यदि काङ्क्षन्ति ते राज्यं पितृपैतामहं पुनः।
यथाप्रतिज्ञं कालं तं चरन्तु वनमाश्रिताः ॥ १०७ ॥
अथ ते धर्ममुत्सृज्य युद्धमिच्छन्ति पाण्डवाः।
आसाद्येमान्कुरुश्रेष्ठान्स्मरिष्यन्ति वचो मम ॥ १०८ ॥

भीष्म- किं नु राधेय वाचा ते कर्म तत्स्मर्तुमर्हसि।
एक एव यदा पार्थः षड्रथाञ्जितवान्युधि ॥ १०९ ॥
बहुशो जीयमानस्य कर्म दृष्टं तदैव ते।
न चेदेवं करिष्यामो यदयं ब्राह्मणोऽब्रवीत् ॥ ११० ॥
ध्रुवं युधि हतास्तेन भक्षयिष्याम पांसुकान्।
धृतराष्ट्रस्ततो भीष्ममनुमान्य प्रसाद्य च ॥ १११ ॥
अवभर्त्स्य च राधेयमिदं वचनमब्रवीत्।
चिन्तयित्वा तु पार्थेभ्यः प्रेषयिष्यामि सञ्जयम् ॥ ११२ ॥
स भवान्प्रतियात्वद्य पाण्डवानेव मा चिरम्।
स तं सत्कृत्य कौरव्यः प्रेषयामास पाण्डवान्।
सभामध्ये समाहूय सञ्जयं वाक्यमब्रवीत् ॥ ११३ ॥

## धृतराष्ट्रप्रेषितस्य सञ्जयस्य पाण्डवैः संवादः

धृत-
(अ.२२)

प्राप्तानाहुः सञ्जय पाण्डुपुत्रा
उपप्लव्ये तान्विजानीहि गत्वा।
अजातशत्रुं च सभाजयेथा
दिष्ट्याऽऽनघ स्थानमुपस्थितस्त्वम् ॥ ११४ ॥
समानीतान्पाण्डवान्सृञ्जयांश्च
जनार्दनं युयुधानं विराटम्।
अनामयं मद्वचनेन पृच्छेः
सर्वांस्तथा द्रौपदेयांश्च पञ्च ॥ ११५ ॥
यद्यत्तत्र प्राप्तकालं परेभ्य-
स्त्वं मन्येथा भारतानां हितं च।
तद्भाषेथाः सञ्जय राजमध्ये
न मूर्च्छयेद्यन्न च युद्धहेतुः ॥ ११६ ॥

(अ.२३) राज्ञस्तु वचनं श्रुत्वा धृतराष्ट्रस्य सञ्जयः।
उपप्लव्यं ययौ द्रष्टुं पाण्डवानमितौजसः ॥ ११७ ॥
स तु राजानमासाद्य कुन्तीपुत्रं युधिष्ठिरम्।
अभिवाद्य ततः पूर्वं सूतपुत्रोऽभ्यभाषत ॥ ११८ ॥

(अ.२४) यन्मां ब्रवीद्धृतराष्ट्रो निशाया-
मजातशत्रो वचनं पिता ते।
सहामात्यः सहपुत्रश्च राजन्
समेत्य तां वाचमिमां निबोध ॥ ११९ ॥

युधि- (अ.२५) समागताः पाण्डवाः सृञ्जयाश्च
जनार्दनो युयुधानो विराटः।
यत्ते वाक्यं धृतराष्ट्रानुदिष्टं
गावल्गणे ब्रूहि तत्सूतपुत्र ॥ १२० ॥

सञ्जय- शमं राजा धृतराष्ट्रोऽभिनन्द-
न्नयोजयत्त्वरमाणो रथं मे।
सभ्रातृपुत्रस्वजनस्य राज-
स्तद्रोचतां पाण्डवानां शमोऽस्तु ॥ १२१ ॥
सर्वक्षयो दृश्यते यत्र कृत्स्नः
पापोदयो निरयोऽभावसंस्थः।
कस्तत्र कुर्याज्जातु कर्म प्रजानन्
पराजयो यत्र समो जयश्च ॥ १२२ ॥
ते चेत्कुरूननुशिष्याथ पार्था
निर्णीय सर्वान्द्विषतो निगृह्य।
समं वस्तज्जीवितं मृत्युना स्या-
द्यज्जीवध्वं ज्ञातिवधे न साधु ॥ १२३ ॥
सोऽहं जये चैव पराजये च
निःश्रेयसं नाधिगच्छामि किञ्चिन्।

कथं हि नीचा इव दौष्कुलेया
निर्धर्मार्थं कर्म कुर्युश्च पार्थाः ॥ १२४ ॥
एतद्राज्ञो भीष्मपुरोगमस्य
मतं यद्वः शान्तिरिहोत्तमा स्यात् ॥ १२५ ॥

युधि- (अ.२९)
कां नु वाचं सञ्जय मे शृणोषि
युद्धैषिणीं येन युद्धाद्बिभेषि ।
अयुद्धं वै तात युद्धाद्गरीयः
कस्तल्लब्ध्वा जातु युद्ध्येत सूत ॥ १२६ ॥
कुतो युद्धं जातु नरोऽवगच्छेत्
को देवशप्तो हि वृणीत युद्धम् ।
सुखैषिणः कर्म कुर्वन्ति पार्था
धर्मादहीनं यच्च लोकस्य पथ्यम् ॥ १२७ ॥
आशंसते वै धृतराष्ट्रः सपुत्रो
महाराज्यमसपत्नं पृथिव्याम् ।
तस्मिञ्छमः केवलं नोपलभ्यः
सर्वं स्वकं मन्यते मद्गतेऽर्थम् ॥ १२८ ॥
जानासि त्वं क्लेशमस्मासु वृत्तं
त्वां पूजयन्सञ्जयाहं क्षमेयम् ।
यच्चास्माकं कौरवैर्भूतपूर्वं
या नो वृत्तिर्धार्तराष्ट्रे तदाऽऽसीत् ॥ १२९॥
अद्यापि तत्तत्र तथैव वर्ततां
शान्तिं गमिष्यामि यथा त्वमात्थ ।
इन्द्रप्रस्थे भवतु ममैव राज्यं
सुयोधनो यच्छतु भारताग्र्यः ॥ १३० ॥

सञ्जय- (अ.२७)
धर्मनित्या पाण्डव ते विचेष्टा
लोके श्रुता दृश्यते चापि पार्थ ।

महाथ्राव जीवितं चाप्यनित्यं
सम्पश्य त्वं पाण्डव मा व्यनीनशः ॥ १३१ ॥
न चेद्भाग कुरवोऽन्यत्र युद्धात्
प्रयच्छेरंस्तुभ्यमजातशत्रो ।
भैक्षचर्यामन्धकवृष्णिराज्ये
श्रेयो मन्ये न तु युद्धेन राज्यम् ॥ १३२ ॥
कामा मनुष्यं प्रसजन्त एते
धर्मस्य ये विघ्नमूलं नरेन्द्र ।
पूर्वं नरस्तान्मतिमान्प्रणिघ्नन्
लोके प्रशंसा लभतेऽनवद्याम् ॥ १३३ ॥
निबन्धनी ह्यर्थतृष्णेह पार्थ
तामिच्छतां बाध्यते धर्म एव ।
धर्मं तु यः प्रवृणीते स बुद्धः
कामे गृध्नो हीयतेऽर्थानुरोधात् ॥ १३४ ॥
नाधर्मे ते धीयते पार्थ बुद्धि-
र्न संरम्भात्कर्म चकर्थ पापम् ।
आत्थ किं तत्कारणं यस्य हेतो-
प्रज्ञाविरुद्धं कर्म चिकीर्षसीदम् ॥ १३५ ॥
लब्ध्वाऽपीमां पृथिवीं सागरान्तां
जरामृत्यू नैव हि त्वं प्रजह्या ।
प्रियाप्रिये सुखदुःखे च राज-
न्नेव विद्वान्नैव युद्धं कुरु त्वम् ॥ १३६ ॥

युधि-
(अ.२८)

असंशयं सञ्जय सत्यमेत-
द्धर्मो वरः कर्मणां यत्त्वमात्थ ।
ज्ञात्वा तु मां सञ्जय गर्हयेस्त्वं
यदि धर्मं यद्यधर्मं चरेयम् ॥ १३७ ॥

यत्राधर्मो धर्मरूपाणि धत्ते
धर्मः कृत्स्नो दृश्यतेऽधर्मरूपः।
बिभ्रद्धर्मो धर्मरूपं तथा च
विद्वांसस्तं सम्प्रपश्यन्ति बुद्धया ॥ १३८ ॥
एवं तथैवापदि लिङ्गमेत-
द्धर्माधर्मौ नित्यवृत्ती भजेताम्।
आद्यं लिङ्गं यस्य तस्य प्रमाण-
मापद्धर्मं सञ्जय तं निबोध ॥ १३९ ॥
लुप्तायां तु प्रकृतौ येन कर्म
निष्पादयेत्तत्परीप्सेद्विहीनः।
प्रकृतिस्थश्चापदि वर्तमान
उभौ गर्ह्यौ भवतः सञ्जयैतौ ॥ १४० ॥
यदि ह्यहं विसृजन्साम गर्ह्यो
नियुद्धयमानो यदि जह्यां स्वधर्मम्।
महायशाः केशवस्तद्ब्रवीतु
वासुदेवस्तूभयोरर्थकामः ॥ १४१ ॥

वासुदेव—
(अ.२९)

अविनाशं सञ्जय पाण्डवाना-
मिच्छाम्येषां भूतिमहं प्रियं च।
तथा राज्ञो धृतराष्ट्रस्य सूत
समाशंसे बहुपुत्रस्य वृद्धिम् ॥ १४२ ॥
कामो हि मे सञ्जय नित्यमेव
नान्यद्ब्रूयां तान्प्रति शाम्यतेति।
राज्ञश्च हि प्रियमेतच्छृणोमि
मन्ये चैतत्पाण्डवाना समक्षम् ॥ १४३ ॥
सुदुष्करस्तत्र शमो हि नून
प्रदर्शितः सञ्जय पाण्डवेन।

यस्मिन्वृद्धो धृतराष्ट्रः सपुत्रः
कस्मादेषां कलहो नावमूर्च्छेत् ॥ १४४ ॥
न त्वं धर्मं विचरं सञ्जयेह
मत्तश्च जानासि युधिष्ठिराच्च ।
स कस्मात्त्वं जानतां ज्ञानवान्सन्
व्यायच्छसे सञ्जय कौरवार्थे ॥ १४५ ॥
सुयोधनो मन्युमयो महाद्रुमः
स्कंधः कर्णः शकुनिस्तस्य शाखा ।
दुःशासनः पुष्पफले समृद्धे
मूलं राजा धृतराष्ट्रोऽमनीषी ॥ १४६ ॥
युधिष्ठिरो धर्ममयो महाद्रुमः
स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखा ।
माद्रीपुत्रौ पुष्पफले समृद्धे
मूलं त्वहं ब्रह्म च ब्राह्मणाश्च ॥ १४७ ॥
वनं राजा धृतराष्ट्रः सपुत्रो
व्याघ्रास्ते वै सञ्जय पाण्डुपुत्राः ।
मा वनं छिन्धि सव्याघ्रं
मा व्याघ्रानीनशन्वनात् ॥ १४८ ॥
निर्वनो वध्यते व्याघ्रो निर्व्याघ्रं छिद्यते वनम् ।
तस्माद्व्याघ्रो वनं रक्षेद्वनं व्याघ्रं च पालयेत् ॥ १४९ ॥
लताधर्मा धार्तराष्ट्राः शालाः सञ्जय पाण्डवाः ।
न लता वर्धते जातु महाद्रुममनाश्रिता ॥ १५० ॥
स्थिताः शुश्रूषितुं पार्थाः स्थिता योद्धुमरिन्दमाः ।
यत्कृत्यं धार्तराष्ट्रस्य तत्करोतु नराधिपः ॥ १५१ ॥
स्थिताः शमे महात्मानः पाण्डवा धर्मचारिणः ।
योधाः समर्थास्तद्विद्वन्नाचक्षीथा यथातथम् ॥ १५२ ॥

सञ्जय- आमन्त्रये त्वां नरदेवदेव
(अ.३०) गच्छाम्यहं पाण्डव स्वस्ति तेऽस्तु।
कच्चिन्न वाचा वृजिनं हि किञ्चि
दुच्चारितं मे मनसोऽभिषङ्गात् ॥ १५३ ॥

युधि- अनुज्ञातः सञ्जय स्वस्ति गच्छ
न नः स्मरस्यप्रियं जातु विद्वन्।
विद्मश्च त्वां ते च वयं च सर्वे
शुद्धात्मानं मध्यगतं सभास्थम् ॥ १५४ ॥

(अ ३१) गावल्गणे कुरून्गत्वा धृतराष्ट्रं महाबलम्।
अभिवाद्योपसङ्गृह्य तत पृच्छेरनामयम् ॥ १५५ ॥
ब्रूयाश्चैनं त्वमासीनं कुरुभिः परिवारितम्।
तवैव राजन्वीर्येण सुखं जीवन्ति पाण्डवाः ॥ १५६ ॥
तव प्रसादाद्बालास्ते प्राप्ता राज्यमरिन्दम।
राज्ये तान्स्थापयित्वाऽग्रे नोपेक्षस्व विनश्यतः ॥ १५७ ॥
अथ दुर्योधनं ब्रूया राजपुत्रममर्षणम्।
यन्नः प्रव्राजये· सौम्य अजिनैः प्रतिवासितान् ॥ १५८ ॥
तद्दुःखमतिनिक्षाम मावधीष्म कुरूनिति।
यथोचितं स्वकं भागं लभेमहि परन्तप ॥ १५९ ॥
शान्तिरेव भवेद्राजन्प्रीतिश्चैव परस्परम्।
अविस्थलं वृकस्थल माकन्दीं वारणावतम् ॥ १६० ॥
अवसानं भवत्वत्र किञ्चिदेकं च पञ्चमम्।
भ्रातृणां देहि पञ्चानां पञ्च ग्रामान्सुयोधन ॥ १६१ ॥
शान्तिर्नोऽस्तु महाप्राज्ञ ज्ञातिभि· सह सञ्जय।
भ्राता भ्रातरमन्वेतु पिता पुत्रेण युज्यताम् ॥ १६२ ॥
स्मयमाना· समायान्तु पाञ्चाला· कुरुभिः सह।
अलमेव शमायास्मि तथा युद्धाय सञ्जय।
धर्मार्थयोरलं चाहं मृदवे दारुणाय च ॥ १६३ ॥

## संजयप्रत्यागमनं विदुरनीतिश्च

(अ.३२) अनुज्ञातः पाण्डवेन प्रययौ सञ्जयस्तदा।
शासनं धृतराष्ट्रस्य सर्वं कृत्वा महात्मनः॥ १६४॥
सम्प्राप्य हास्तिनपुरं शीघ्रमेव प्रविश्य च।
अन्तःपुरं समास्थाय द्वाःस्थं वचनमब्रवीत्॥ १६५॥
आचक्ष्व धृतराष्ट्राय द्वाःस्थ मां समुपागतम्।
सकाशात्पाण्डुपुत्राणां सञ्जयं मा चिरं कृथाः॥ १६६॥

ततः प्रविश्यानुमते नृपस्य
महद्वेश्म प्राज्ञशूरार्यगुप्तम्।
सिंहासनस्थं पार्थिवमाससाद
वैचित्रवीर्यं प्राञ्जलिः सूतपुत्रः॥ १६७॥

सञ्जय- सञ्जयोऽहं भूमिपते नमस्ते
प्राप्तोऽस्मि गत्वा नरदेव पाण्डवान्।
अभिवाद्य त्वां पाण्डुपुत्रो मनस्वी
युधिष्ठिरः कुशलं चान्वपृच्छत्॥ १६८॥
सहामात्यः कुशली पाण्डुपुत्रो
बुभूषते यच्च तेऽग्रेऽत्मनोऽभूत्।
निर्णिक्तधर्मार्थकरो मनस्वी
बहुश्रुतो दृष्टिमाञ्शीलवांश्च॥ १६९॥
अजातशत्रुस्तु विहाय पापं
जीर्णां त्वचं सर्प इवासमर्थाम्।
विरोचतेऽहार्यवृत्तेन वीरो
युधिष्ठिरस्त्वयि पापं विसृज्य॥ १७०॥
स त्वां गर्हे भारतानां विरोधा-
दन्तो नूनं भविताऽयं प्रजानाम्।

नो चेदिदं तव कर्मापराधात्
कुरुन्दहेत्कृष्णवर्त्मेव कक्षम् ॥ १७१ ॥
अनाप्तानां सङ्ग्रहात्त्वं नरेन्द्र
तथाऽऽप्तानां निग्रहाच्चैव राजन्।
भूमिं स्फीतां दुर्बलत्वादनन्ता-
मशक्तस्त्वं रक्षितुं कौरवेय ॥ १७२ ॥

धृतराष्ट्र- अनुज्ञातोऽस्यावसथं परेहि
प्रपद्यस्व शयनं सूतपुत्र।
प्रातः श्रोतारः कुरवः सभाया-
मजातशत्रोर्वचनं त्वयोक्तम् ॥ १७३ ॥

(अ.३३) द्वाःस्थं प्राह महाप्राज्ञो धृतराष्ट्रो महीपतिः।
विदुरं द्रष्टुमिच्छामि तमिहानय मा चिरम् ॥ १७४ ॥
ततः प्रविश्य विदुरो धृतराष्ट्रनिवेशनम्।
अब्रवीत्प्राञ्जलिर्वाक्यं चिन्तयानं नराधिपम् ॥ १७५ ॥
विदुरोऽहं महाप्राज्ञ सम्प्राप्तस्तव शासनात्।
यदि किञ्चन कर्तव्यमयमस्मि प्रशाधि माम् ॥ १७६ ॥

धृत- सञ्जयो विदुर प्राप्तो गर्हयित्वा च मां गतः।
तन्मे दहति गात्राणि तदकार्षीत्प्रजागरम् ॥ १७७ ॥
जाग्रतो दह्यमानस्य श्रेयो यदनुपश्यसि।
तद्ब्रूहि त्वं हि नस्तात धर्मार्थकुशलो ह्यसि ॥ १७८ ॥

विदुर- अभियुक्तं बलवता दुर्बलं हीनसाधनम्।
हृतस्वं कामिनं चोरमाविशन्ति प्रजागराः ॥ १७९ ॥
कच्चिदेतैर्महादोषैर्न स्पृष्टोऽसि नराधिप।
कच्चिच्च परवित्तेषु गृध्यन्न परितप्यसे ॥ १८० ॥

धृत- श्रोतुमिच्छामि ते धर्म्यं परं नैःश्रेयसं वचः।
अस्मिन्राजर्षिवंशे हि त्वमेकः प्राज्ञसंमतः ॥ १८१ ॥

विदुर– निषेवते प्रशस्तानि निन्दितानि न सेवते।
अनास्तिकः श्रद्धधान एतत्पण्डितलक्षणम् ॥ १८२ ॥
क्रोधो हर्षश्च दर्पश्च ह्रीः स्तम्भो मान्यमानिता।
यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते ॥ १८३ ॥
यस्य कृत्यं न जानन्ति मन्त्रं वा मन्त्रितं परे।
कृतमेवाऽस्य जानन्ति स वै पण्डित उच्यते ॥ १८४ ॥
क्षिप्रं विजानाति चिरं शृणोति
विज्ञाय चार्थं भजते न कामात्।
नासम्पृष्टो व्युपयुङ्क्ते परार्थे
तत्प्रज्ञानं प्रथमं पण्डितस्य ॥ १८५ ॥
नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम्।
आपत्सु च न मुह्यन्ति नराः पण्डितबुद्धयः ॥ १८६ ॥
निश्चित्य यः प्रक्रमते नान्तर्वसति कर्मणः।
अवन्ध्यकालो वश्यात्मा स वै पण्डित उच्यते ॥ १८७ ॥
न हृष्यत्यात्मसम्माने नावमानेन तप्यते।
गाङ्गो ह्रद इवाऽक्षोभ्यो यः स पण्डित उच्यते ॥ १८८ ॥
श्रुतं प्रज्ञानुगं यस्य प्रज्ञा चैव श्रुतानुगा।
असम्भिन्नार्यमर्यादः पण्डिताख्यां लभेत सः ॥ १८९ ॥
अश्रुतश्च समुन्नद्धो दरिद्रश्च महामनाः।
अर्थांश्चाकर्मणा प्रेप्सुर्मूढ इत्युच्यते बुधैः ॥ १९० ॥
स्वमर्थं यः परित्यज्य परार्थमनुतिष्ठति।
मिथ्याचरति मित्रार्थे यश्च मूढः स उच्यते ॥ १९१ ॥
अनाहूतः प्रविशति अपृष्टो बहु भाषते।
अविश्वस्ते विश्वसिति मूढचेता नराधमः ॥ १९२ ॥
परं क्षिपति दोषेण वर्तमानः स्वयं तथा।
यश्च क्रुध्यत्यनीशानः स च मूढतमो नरः ॥ १९३ ॥

अशिष्यं शास्ति यो राजन्यश्च शून्यमुपासते।
कदर्यं भजते यश्च तमाहुर्मूढचेतसम् ॥ १९४ ॥
एकः सम्पन्नमश्नाति वस्ते वासश्च शोभनम्।
योऽसंविभज्य भृत्येभ्यः को नृशंसतरस्ततः ॥ १९५ ॥
एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् ॥ १९६ ॥
एकं विषरसो हन्ति शस्त्रेणैकश्च वध्यते।
सराष्ट्रं सप्रजं हन्ति राजानं मन्त्रविप्लवः ॥ १९७ ॥
एकः स्वादु न भुञ्जीत एकश्चार्थान्न चिन्तयेत्।
एको न गच्छेदध्वानं नैकः सुप्तेषु जागृयात् ॥ १९८ ॥
शान्तिखड्गः करे यस्य किं करिष्यति दुर्जनः।
अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ॥ १९९ ॥
एको धर्मः परं श्रेयः क्षमैका शान्तिरुत्तमा।
विद्यैका परमा तृप्तिरहिंसैका सुखावहा ॥ २०० ॥
द्वावम्भसि निवेष्टव्यौ गले बद्ध्वा दृढां शिलाम्।
धनवन्तमदातारं दरिद्रं चातपस्विनम् ॥ २०१ ॥
द्वाविमौ पुरुषव्याघ्र सूर्यमण्डलभेदिनौ।
परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ॥ २०२ ॥
हरणं च परस्वानां परदाराभिमर्शनम्।
सुहृदश्च परित्यागस्त्रयो दोषाः क्षयावहाः ॥ २०३ ॥
भक्तं च भजमानं च तवास्मीति च वादिनम्।
त्रीनेताञ्छरणं प्राप्तान्विषमेऽपि न सन्त्यजेत् ॥ २०४ ॥

चत्वारि राज्ञा तु महाबलेन
वर्ज्यान्याहुः पण्डितस्तानि विद्यात्।
अल्पप्रज्ञैः सह मन्त्रं न कुर्या-
न्न दीर्घसूत्रै रभसैश्चारणैश्च ॥ २०५ ॥

पञ्चाग्नयो मनुष्येण परिचर्या प्रयत्नतः।
पिता माताऽग्निरात्मा च गुरुश्च भरतर्षभ ॥ २०६ ॥
पञ्चेन्द्रियस्य मर्त्यस्य छिद्रं चेदेकमिन्द्रियम्।
ततोऽस्य स्रवति प्रज्ञा दृतेः पात्रादिवोदकम् ॥ २०७ ॥
षड्दोषाः पुरुषेणेह हातव्या भूतिमिच्छता।
निद्रा तन्द्री भयं क्रोध आलस्यं दीर्घसूत्रता ॥ २०८ ॥
षडिमान्पुरुषो जह्याद्भिन्नां नावमिवार्णवे।
अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥ २०९ ॥
अरक्षितारं राजानं भार्यां चाप्रियवादिनीम्।
ग्रामकामं च गोपालं वनकामं च नापितम् ॥ २१० ॥
षडेव तु गुणाः पुंसा न हातव्याः कदाचन।
सत्यं दानमनालस्यमनसूया धृतिः क्षमा ॥ २११ ॥

अर्थागमो नित्यमरोगिता च
प्रिया च भार्या प्रियवादिनी च।
वश्यश्च पुत्रोऽर्थकरी च विद्या
षड्जीवलोकस्य सुखानि राजन् ॥ २१२ ॥

षडिमे षट्सु जीवन्ति सप्तमो नोपलभ्यते।
चौराः प्रमत्ते जीवन्ति व्याधितेषु चिकित्सकाः ॥ २१३ ॥
प्रमदाः कामयानेषु यजमानेषु याजकाः।
राजा विवदमानेषु नित्यं मूर्खेषु पण्डिताः ॥ २१४ ॥
षडिमानि विनश्यन्ति मुहूर्तमनवेक्षणात्।
गावः सेवा कृषिर्भार्या विद्या वृषलसङ्गतिः ॥ २१५ ॥
षडेते ह्यवमन्यन्ते नित्यं पूर्वोपकारिणम्।
आचार्यं शिक्षिताः शिष्याः कृतदाराश्च मातरम् ॥ २१६ ॥
नारीं विगतकामास्तु कृतार्थाश्च प्रयोजकम्।
नावं निस्तीर्णकान्तारा आतुराश्च चिकित्सकम् ॥ २१७ ॥

आरोग्यमानृण्यमविप्रवासः
सद्भिर्मनुष्यैः सह सम्प्रयोगः।
स्वप्रत्यया वृत्तिरभीतवासः
षड्जीवलोकस्य सुखानि राजन् ॥ २१८ ॥
ईर्षुर्घृणी नसन्तुष्टः क्रोधनो नित्यशङ्कितः।
परभाग्योपजीवी च षडेते नित्यदुःखिताः ॥ २१९ ॥
(अ.३४) शुभं वा यदि वा पापं द्वेष्यं वा यदि वा प्रियम्।
अपृष्टस्तस्य तद्ब्रूयाद्यस्य नेच्छेत्पराभवम् ॥ २२० ॥
न राज्यं प्राप्तमित्येव वर्तितव्यमसाम्प्रतम्।
श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम् ॥ २२१ ॥
भक्ष्योत्तमप्रतिच्छन्नं मत्स्यो बडिशमायसम्।
लोभाभिपाती ग्रसते नानुबन्धमवेक्षते ॥ २२२ ॥
यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत्।
हितं च परिणामे यत्तदाद्यं भूतिमिच्छता ॥ २२३ ॥
वनस्पतेरपक्वानि फलानि प्रचिनोति यः।
स नाप्नोति रसं तेभ्यो बीजं चास्य विनश्यति ॥ २२४ ॥
यस्तु पक्वमुपादत्ते काले परिणतं फलम्।
फलाद्रसं स लभते बीजाच्चैव फलं पुनः ॥ २२५ ॥
पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत्।
मालाकार इवारामे न यथाङ्गारकारकः ॥ २२६ ॥
अप्युन्मत्तात्प्रलपतो बालाच्च परिजल्पतः।
सर्वतः सारमादद्यादश्मभ्य इव काञ्चनम् ॥ २२७ ॥
गन्धेन गावः पश्यन्ति वेदैः पश्यन्ति ब्राह्मणाः।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥ २२८ ॥
सत्येन रक्ष्यते धर्मो विद्या योगेन रक्ष्यते।
मृजया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते ॥ २२९ ॥

मानेन रक्ष्यते धान्यमश्वान्रक्षत्यनुक्रमः।
अभीक्ष्णदर्शनं गाश्च स्त्रियो रक्ष्याः कुचेलतः ॥ २३० ॥
न कुलं वृत्तहीनस्य प्रमाणमिति मे मतिः।
अन्तेष्वपि हि जातानां वृत्तमेव विशिष्यते ॥ २३१ ॥
जिता सभा वस्त्रवता मिष्टाशा गोमता जिता।
अध्वा जितो यानवता सर्वं शीलवता जितम् ॥ २३२ ॥
शीलं प्रधानं पुरुषे तद्यस्येह प्रणश्यति।
न तस्य जीवितेनार्थो न धनेन न बन्धुभिः ॥ २३३ ॥
आढ्यानां मांसपरमं मध्यानां गोरसोत्तरम्।
तैलोत्तरं दरिद्राणां भोजनं भरतर्षभ ॥ २३४ ॥
प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते।
जीर्यन्त्यपि हि काष्ठानि दरिद्राणां महीपते ॥ २३५ ॥
अवृत्तिर्भयमन्त्यानां मध्यानां मरणाद्भयम्।
उत्तमानां तु मर्त्यानामवमानात्परं भयम् ॥ २३६ ॥
आक्रोशपरिवादाभ्यां विहिंसन्त्यबुधा बुधान्।
वक्ता पापमुपादत्ते क्षममाणो विमुच्यते ॥ २३७ ॥
हिंसा बलमसाधूनां राज्ञां दण्डविधिर्बलम्।
शुश्रूषा तु बलं स्त्रीणां क्षमा गुणवतां बलम् ॥ २३८ ॥
रोहते सायकैर्विद्धं वनं परशुना हतम्।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥ २३९ ॥
(अ.३५) यथा यथा हि पुरुषः कल्याणे कुरुते मनः।
तथा तथाऽस्य सर्वार्थाः सिध्यन्ते नात्रसंशयः ॥ २४० ॥
श्रीर्मङ्गलात्प्रभवति प्रागल्भ्यात्सम्प्रवर्धते।
दाक्ष्यात्तु कुरुते मूलं संयमात्प्रतितिष्ठति ॥ २४१ ॥
इज्याध्ययनदानानि तपः सत्यं क्षमा घृणा।
अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥ २४२ ॥

तत्र पूर्वचतुर्वर्गो दम्भार्थमपि सेव्यते।
उत्तरश्च चतुर्वर्गो नामहात्मसु तिष्ठति ॥ २४३ ॥

न सा सभा यत्र न सन्ति वृद्धा
न ते वृद्धा ये न वदन्ति धर्मम्।
नासौ धर्मो यत्र न सत्यमस्ति
न तत्सत्यं यच्छलेनाभ्युपेतम् ॥ २४४ ॥

दिवसेनैव तत्कुर्याद्येन रात्रौ सुखं वसेत्।
अष्टमासेन तत्कुर्याद्येन वर्षाः सुखं वसेत् ॥ २४५ ॥
पूर्वे वयसि तत्कुर्याद्येन वृद्धः सुखं वसेत्।
यावज्जीवेन तत्कुर्याद्येन प्रेत्य सुखं वसेत् ॥ २४६ ॥
ऋषीणां च नदीनां च कुलानां च महात्मनाम्।
प्रभवो नाधिगन्तव्यः स्त्रीणां दुश्चरितस्य च ॥ २४७ ॥
सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥ २४८ ॥
(अ.३९) आक्रुश्यमानो नाक्रोशेन्मन्युरेव तितिक्षतः।
आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति ॥ २४९ ॥
भावमिच्छति सर्वस्य नाभावे कुरुते मनः।
सत्यवादी मृदुर्दान्तो यः स उत्तमपूरुषः ॥ २५० ॥
नानर्थकं सान्त्वयति प्रतिज्ञाय ददाति च।
रन्ध्रं परस्य जानाति यः स मध्यमपूरुषः ॥ २५१ ॥
न श्रद्दधाति कल्याणं परेभ्योऽप्यात्मशङ्कितः।
निराकरोति मित्राणि यो वै सोऽधमपूरुषः ॥ २५२ ॥
वृत्तं यत्नेन संरक्षेद्वित्तमेति च याति च।
अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥ २५३ ॥
अकस्मादेव कुप्यन्ति प्रसीदन्त्यनिमित्ततः।
शीलमेतदसाधूनामभ्रं पारिप्लवं यथा ॥ २५४ ॥

ब्राह्मणेषु च ये शूराः स्त्रीषु ज्ञातिषु गोषु च।
वृन्तादिव फलं पक्कं धृतराष्ट्र पतन्ति ते ॥ २५५ ॥
महानप्येकजो वृक्षो बलवान्सुप्रतिष्ठितः।
प्रसह्य एव वातेन सस्कन्धो मर्दितुं क्षणात् ॥ २५६ ॥
अथ ये सहिता वृक्षाः सङ्घशः सुप्रतिष्ठिताः।
ते हि शीघ्रतमान्वातान्सहन्तेऽन्योन्यसंश्रयात् ॥ २५७ ॥

धृत- (अ.३७) शतायुरुक्तः पुरुषः सर्ववेदेषु वै यदा।
नाप्नोत्यथ च तत्सर्वमायुः केनेह हेतुना ॥ २५८ ॥

विदुर- अतिमानोऽतिवादश्च तथाऽत्यागो नराधिप।
क्रोधश्चात्मविधित्सा च मित्रद्रोहश्च तानि षट् ॥ २५९ ॥
एत एवासयस्तीक्ष्णाः कृन्तन्त्यायूंषि देहिनाम्।
द्यूतमेतत्पुराकल्पे दृष्टं वैरकरं नृणाम् ॥ २६० ॥
तस्माद्द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान्।
सन्नियच्छति यो वेगमुत्थितं क्रोधहर्षयोः।
स श्रियो भाजनं राजन्यश्चापत्सु न मुह्यति ॥ २६१ ॥

(अ.३८) अपकृत्य बुद्धिमतो दूरस्थोऽस्मीति नाश्वसेत्।
दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति हिंसितः ॥ २६२ ॥

(अ.३९) समृद्धा गुणतः केचिद्भवन्ति धनतोऽपरे।
धनवृद्धान्गुणैर्हीनान्धृतराष्ट्र विवर्जय ॥ २६३ ॥
अनिर्वेदः श्रियो मूलं लाभस्य च शुभस्य च।
महान्भवत्यनिर्विण्णः सुखं चानन्त्यमश्नुते ॥ २६४ ॥
दुःखार्तेषु प्रमत्तेषु नास्तिकेष्वलसेषु च।
न श्रीर्वसत्यदान्तेषु ये चोत्साहविवर्जिताः ॥ २६५ ॥
अत्यार्यमतिदातारमतिशूरमतिव्रतम्।
प्रज्ञाभिमानिनं चैव श्रीर्भयान्नोपसर्पति ॥ २६६ ॥

न तत्परस्य सन्दध्यात्प्रतिकूलं यदात्मनः।
सङ्ग्रहेणैष धर्मः स्यात्कामादन्यः प्रवर्तते ॥ २६७ ॥
अक्रोधेन जयेत्क्रोधमसाधुं साधुना जयेत्।
जयेत्कदर्यं दानेन जयेत्सत्येन चानृतम् ॥ २६८ ॥
अभिवादनशीलस्य नित्यं वृद्धोपसेविनः।
चत्वारि सम्प्रवर्धन्ते कीर्तिरायुर्यशो बलम् ॥ २६९ ॥
न स्वप्नेन जयेन्निद्रां न कामेन जयेत्स्त्रियः।
नेन्धनेन जयेदग्निं न पानेन सुरां जयेत् ॥ २७० ॥
यस्य दानजितं मित्रं शत्रवो युधि निर्जिताः।
अन्नपानजिता दाराः सफलं तस्य जीवितम् ॥ २७१ ॥
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः।
नालमेकस्य तत्सर्वमिति पश्यन्न मुह्यति ॥ २७२ ॥
(अ.४०) असूयैकपदं मृत्युरतिवादः श्रियो वधः।
अशुश्रूषा त्वरा श्लाघा विद्यायाः शत्रवस्त्रयः ॥ २७३ ॥
आलस्यं मदमोहौ च चापलं गोष्ठिरेव च।
स्तब्धता चाभिमानित्वं तथाऽत्यागित्वमेव च ॥ २७४ ॥
एते वै सप्त दोषाः स्युः सदा विद्यार्थिनां मताः।
सुखार्थिनः कुतो विद्या नास्ति विद्यार्थिनः सुखम् ॥ २७५ ॥
सुखार्थी वा त्यजेद्विद्यां विद्यार्थी वा त्यजेत्सुखम्।
कामक्रोधग्राहवतीं पञ्चेन्द्रियजलां नदीम्।
नावं धृतिमयीं कृत्वा जन्मदुर्गाणि सन्तर ॥ २७६ ॥
प्रज्ञावृद्धं धर्मवृद्धं स्वबन्धुं
विद्यावृद्धं वयसा चापि वृद्धम्।
कार्याकार्ये पूजयित्वा प्रसाद्य
यः संपृच्छेन्न स मुह्येत्कदाचित् ॥ २७७ ॥

## संजयेन पाण्डवसन्देशकथनं, भीष्मादीनां दुर्योधनायोपदेशः

(अ.४७) तस्यां रजन्यां व्युष्टायां राजानः सर्व एव ते।
सभामाविविशुर्हृष्टाः सूतस्योपदिदृक्षया ॥ २७८॥
आसनस्थेषु सर्वेषु तेषु राजसु भारत।
द्वाःस्थो निवेदयामास सूतपुत्रमुपस्थितम् ॥ २७९ ॥
उपेयाय स तु क्षिप्रं रथात्प्रस्कन्द्य कुण्डली।
प्रविवेश सभां पूर्णां महीपालैर्महात्मभिः ॥ २८० ॥

सञ्जय- यथाऽहं धृतराष्ट्रेण शिष्टः पूर्वमितो गतः।
अभुवं पाण्डवान्गत्वा तन्निबोधत पार्थिवाः ॥ २८१ ॥

धृतराष्ट्र- (अ.४८)
पृच्छामि त्वां सञ्जय राजमध्ये
किमब्रवीद्वाक्यमदीनसत्त्वः।
धनञ्जयस्तात युधां प्रणेता
दुरात्मनां जीवितच्छिन्महात्मा ॥ २८२ ॥

सञ्जय-
दुर्योधनो वाचमिमां शृणोतु
यदब्रवीदर्जुनो योत्स्यमानः।
न चेद्राज्यं मुञ्चति धार्तराष्ट्रो
निर्वृत्तोऽर्थः सकलः पाण्डवानाम् ॥ २८३ ॥
मा तत्कार्षीः पाण्डवस्यार्थहेतो-
रुपैहि युद्धं यदि मन्यसे त्वम्।
यदा रथं हेममणिप्रकाशं
श्वेताश्वयुक्तं वानरकेतुमुग्रम् ॥ २८४ ॥
दृष्ट्वा ममाप्यास्थितं केशवेन
तदा तप्स्यत्यकृतात्मा स मन्दः।
यदा द्रष्टा ज्यामुखाद्बाणसङ्घान्
गाण्डीवमुक्तानापततः शिताग्रान् ॥ २८५ ॥

हयान्गजान्वर्मिणश्चाददानां-
स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत्।
वधे धृतो वेगवतः प्रमुञ्च-
न्नाहं प्रजाः किंचिदिहावशिष्ये ॥ २८६ ॥
शान्तिं लप्स्ये परमो ह्येष भावः
स्थिरो मम ब्रूहि गावल्गणे तान्।
ये वैजय्याः समरे सूत लब्ध्वा
देवानपीन्द्रप्रमुखान्समेतान् ॥ २८७ ॥
तैर्मन्यते कलहं सम्प्रसह्य
स धार्तराष्ट्रः पश्यत मोहमस्य।
वृद्धो भीष्मः शान्तनवः कृपश्च
द्रोणः सपुत्रो विदुरश्च धीमान् ॥ २८८ ॥
एते सर्वे यद्वदन्ते तदस्तु
आयुष्मन्तः कुरवः सन्तु सर्वे ॥ २८९ ॥

(अ.४९) समवेतेषु सर्वेषु तेषु राजसु भारत।
दुर्योधनमिदं वाक्यं भीष्मः शान्तनवोऽब्रवीत् ॥ २९० ॥
अर्थाच्च तात धर्माच्च तव बुद्धिरुपप्लुता।
त्रयाणामेव च मतं त्वमेकोऽनुमन्यसे ॥ २९१ ॥
रामेण चैव शस्तस्य कर्णस्य भरतर्षभ।
दुर्जातेः सूतपुत्रस्य शकुनेः सौबलस्य च।
तथा क्षुद्रस्य पापस्य भ्रातुर्दुःशासनस्य च ॥ २९२ ॥

कर्ण– नैवमायुष्मता वाच्यं यन्मामात्थ पितामह।
अहं हि पाण्डवान्सर्वान्हनिष्यामि रणे स्थितान् ॥ २९३ ॥
कर्णस्य तु वचः श्रुत्वा भीष्मः शान्तनवः पुनः।
धृतराष्ट्रं महाराज सम्भाष्येदं वचोऽब्रवीत् ॥ २९४ ॥

यदयं कत्थते नित्यं हन्ताऽहं पाण्डवानिति ।
नायं कलाऽपि सम्पूर्णा पाण्डवानां महात्मनाम् ॥ २९५ ॥
एतमाश्रित्य पुत्रस्ते मन्दबुद्धिः सुयोधनः ।
अवामन्यत तान्वीरान्देवपुत्रानरिन्दमान् ॥ २९६ ॥
गन्धर्वैर्घोषयात्रायां ह्रियते यत्सुतस्तव ।
क तदा सूतपुत्रोऽभूय इदानीं वृषायते ॥ २९७ ॥
भीष्मस्य तु वचः श्रुत्वा भारद्वाजो महामनाः ।
धृतराष्ट्रमुवाचेदं राजमध्येऽभिपूजयन् ॥ २९८ ॥
यदाह भरतश्रेष्ठो भीष्मस्तत्क्रियतां नृप ।
यद्वाक्यमर्जुनेनोक्तं सञ्जयेन निवेदितम् ॥ २९९ ॥
सर्वं तदपि जानामि करिष्यति च पाण्डवः ।
न ह्यस्य त्रिषु लोकेषु सदृशोऽस्ति धनुर्धरः ॥ ३०० ॥

धृत– भीमसेनाद्धि मे भूयो भयं सञ्जायते महत् ।
(अ.५१) क्रुद्धादमर्षणात्तात व्याघ्रादिव महारुरोः ॥ ३०१ ॥
जागर्मि रात्रयः सर्वा दीर्घमुष्णं च निःश्वसन् ।
भीतो वृकोदरात्तात सिंहात्पशुरिवापरः ॥ ३०२ ॥
अमर्षणश्च कौन्तेयो दृढवैरश्च पाण्डवः ।
अनर्महासी सोन्मादस्तिर्यक्प्रेक्षी महास्वनः ।
मन्दानां मम पुत्राणां युद्धेनान्तं करिष्यति ॥ ३०३ ॥
(अ.५२) यस्य वै नानृता वाचः कदाचिदनुशुश्रुम ।
त्रैलोक्यमपि तस्य स्याद्योद्धा यस्य धनञ्जयः ॥ ३०४ ॥
तस्यैव च न पश्यामि युधि गाण्डीवधन्वनः ।
अनिशं चिन्तयानोऽपि यः प्रतीयाद्रथेन तम् ॥ ३०५ ॥
अस्यतः कर्णिनालीकान्मार्गणान्हृदयच्छिदः ।
प्रत्येता न समः कश्चिद्युधि गाण्डीवधन्वनः ॥ ३०६ ॥

यथा कक्षं महानग्निः प्रदहेत्सर्वतश्चरन्।
महार्चिरनिलोद्धूतस्तद्वद्धक्ष्यति मामकान्॥ ३०७॥

(अ.५३) तैरयुद्धं साधु मन्ये कुरवस्तन्निबोधत।
युद्धे विनाशः कृत्स्नस्य कुलस्य भविता ध्रुवम्॥ ३०८॥
एषा मे परमा बुद्धिर्यया शाम्यति मे मनः।
यदि त्वयुद्धमिष्टं वो वयं शान्त्यै यतामहे॥ ३०९॥
न तु नः क्लिश्यमानानामुपेक्षेत युधिष्ठिरः।
जुगुप्सति ह्यधर्मेण मामेवोद्दिश्य कारणम्॥ ३१०॥

दुर्योधन– न भेतव्यं महाराज न शोच्या भवता वयम्।
(अ.५५) समर्थाः स्म परान्जेतुं बलिनः समरे विभो॥ ३११॥
अक्षौहिण्यो हि मे राजन्दशैका च समाहृताः।
न्यूनाः परेषां सप्तैव कस्मान्मे स्यात्पराभवः॥ ३१२॥
बलं त्रिगुणतो हीनं योध्यं प्राह बृहस्पतिः।
परेभ्यस्त्रिगुणा चेयं मम राजन्ननीकिनी॥ २१३॥
गुणहीनं परेषां च बहु पश्यामि भारत।
गुणोदयं बहुगुणमात्मनश्च विशाम्पते॥ ३१४॥
एतत्सर्वं समाज्ञाय बलाग्र्यं मम भारत।
न्यूनतां पाण्डवानां च न मोहं गन्तुमर्हसि॥ ३१५॥

धृत– दुर्योधन निवर्तस्व युद्धाद्भरतसत्तम।
(अ.५८) न हि युद्धं प्रशंसन्ति सर्वावस्थमरिन्दम॥ ३१६॥
अलमर्धं पृथिव्यास्ते सहामात्यस्य जीवितुम्।
प्रयच्छ पाण्डुपुत्राणां यथोचितमरिन्दम॥ ३१७॥

दुर्योधन– अहं च तात कर्णश्च भ्राता दुःशासनश्च मे।
एते वयं हनिष्यामः पाण्डवान्समरे त्रयः॥ ३१८॥
अहं हि पाण्डवान्हत्वा प्रशास्ता पृथिवीमिमाम्।
मां वा हत्वा पाण्डुपुत्रा भोक्तारः पृथिवीमिमाम्॥ ३१९॥

त्यक्तं मे जीवितं राज्यं धनं सर्वं च पार्थिव ।
न जातु पाण्डवैः सार्धं वसेयमहमच्युत ॥ ३२० ॥

धृतराष्ट्र- निर्दग्धं भीमसेनेन सैन्यं रथहयद्विपम् ।
गतिमक्रोधिं प्रेक्ष्य स्मर्तासि वचनस्य मे ॥ ३२१ ॥
महावनमिव छिन्नं यदा द्रक्ष्यसि पातितम् ।
बलं कुरूणां भीमेन तदा स्मर्तासि मे वचः ॥ ३२२ ॥
एतावदुक्त्वा राजा तु सर्वांस्तान्पृथिवीपतीन् ।
अनुभाष्य महाराज पुनः पप्रच्छ सञ्जयम् ॥ ३२३ ॥

(अ.६१) तथा तु पृच्छन्तमतीव पार्थ
वैचित्रवीर्यं तमचिन्तयित्वा ।
उवाच कर्णो धृतराष्ट्रपुत्रं
प्रहर्षयन्संसदि कौरवाणाम् ॥ ३२४ ॥
मिथ्या प्रतिज्ञाय मया यदस्त्रं
रामाद्धृतं ब्रह्ममयं पुरस्तात् ।
तदस्ति पात्रं मम नावशेषं
तस्मात्समर्थोऽस्मि ममैव भारः ॥ ३२५ ॥
पितामहस्तिष्ठतु ते समीपे
द्रोणश्च सर्वे च नरेन्द्रमुख्याः ।
यथाप्रधानेन बलेन गत्वा
पार्थान्हनिष्यामि ममैष भारः ॥ ३२६ ॥
एवं ब्रुवन्तं तमुवाच भीष्मः
किं कत्थसे कालपरीतबुद्धे ।
यां चापि शक्तिं त्रिदशाधिपस्ते
ददौ महात्मा भगवान्महेन्द्रः ॥ ३२७ ॥
भस्मीकृतां तां समरे विशीर्णां
चक्राहतां द्रक्ष्यसि केशवेन ।

बाणस्य भौमस्य च कर्ण हन्ता
किरीटिनं रक्षति वासुदेवः ॥ ३२८ ॥
यस्त्वादृशानां च वरीयसां च
हन्ता रिपूणां तुमुले प्रगाढे ॥ ३२९ ॥

कर्ण– असंशयं वृष्णिपतिर्यथोक्त-
स्तथा च भूयांश्च ततो महात्मा।
अहं यदुक्तः परुषं तु किञ्चित्
पितामहस्तस्य फलं शृणोतु ॥ ३३० ॥
न्यस्यामि शस्त्राणि न जातु सङ्ख्ये
पितामहो द्रक्ष्यति मां सभायाम्।
त्वयि प्रशान्ते तु मम प्रभावं
द्रक्ष्यन्ति सर्वे भुवि भूमिपालाः ॥ ३३१ ॥
इत्येवमुक्त्वा स महाधनुष्मान्
हित्वा सभां स्वं भवनं जगाम।
भीष्मस्तु दुर्योधनमेव राजन्
मध्ये कुरूणां प्रहसन्नुवाच ॥ ३३२ ॥
यदैव रामे भगवत्यनिन्द्ये
ब्रह्म ब्रुवाणः कृतवांस्तदस्त्रम्।
तदैव धर्मश्च तपश्च नष्टं
वैकर्तनस्याधमपूरुषस्य ॥ ३३३ ॥

दुर्यो– सदृशानां मनुष्येषु सर्वेषां तुल्यजन्मनाम्।
(अ.६१) कथमेकान्ततस्तेषां पार्थानां मन्यसे जयम् ॥ ३३४ ॥
नाहं भवति न द्रोणे न कृपे न च बाल्हिके।
अन्येषु च नरेन्द्रेषु पराक्रम्य समारभे ॥ ३३५ ॥

विदुर– शकुनीनामिहार्थाय पाशं भूमावयोजयत्।
(अ.६४) कश्चिच्छाकुनिकस्तात पूर्वेषामिति शुश्रुम ॥ ३३६ ॥

तस्मिंस्तौ शकुनौ बद्धौ युगपत्सहचारिणौ।
तावुपादाय तं पाशं जग्मतुः खचरावुभौ ॥ ३३७ ॥
तौ विहायसमाक्रान्तौ दृष्ट्वा शाकुनिकस्तदा।
अन्वधावदनिर्विण्णो येन येन स्म गच्छतः ॥ ३३८ ॥
तथा तमनुधावन्तं मृगयुं शकुनार्थिनम्।
आश्रमस्थो मुनिः कश्चिद्ददर्शाथ कृताह्निकः ॥ ३३९ ॥
तावन्तरिक्षगौ शीघ्रमनुयान्तं महीचरम्।
श्लोकेनानेन कौरव्य पप्रच्छ स मुनिस्तदा ॥ ३४० ॥
विचित्रमिदमाश्चर्यं मृगहन्प्रतिभाति मे।
प्लवमानौ हि खचरौ पदातिरनुधावसि ॥ ३४१ ॥
शाकुनिक- पाशमेकमुभावेतौ सहितौ हरतो मम।
यत्र वै विवदिष्येते तत्र मे वशमेष्यतः ॥ ३४२ ॥
विदुर- तौ विवादमनुप्राप्तौ शकुनौ मृत्युसन्धितौ।
विगृह्य च सुदुर्बुद्धी पृथिव्यां सन्निपेततुः ॥ ३४३ ॥
तौ युध्यमानौ संरब्धौ मृत्युपाशवशानुगौ।
उपसृत्यापरिज्ञातो जग्राह मृगहा तदा ॥ ३४४ ॥
एवं ये ज्ञातयोऽर्थेषु मिथो गच्छन्ति विग्रहम्।
तेऽमित्रवशमायान्ति शकुनाविव विग्रहात् ॥ ३४५ ॥
सम्भोजनं सङ्कथनं सम्प्रश्नोऽथ समागमः।
एतानि ज्ञातिकार्याणि न विरोधः कदाचन ॥ ३४६ ॥
धृत- दुर्योधन विजानीहि यत्त्वां वक्ष्यामि पुत्रक।
(अ ६५) उत्पथं मन्यसे मार्गमनभिज्ञ इवाध्वगः ॥ ३४७ ॥
तिष्ठ तात सतां वाक्ये सुहृदामर्थवादिनाम्।
वृद्धं शान्तनवं भीष्मं तितिक्षस्व पितामहम् ॥ ३४८ ॥
यत्तद्विराटनगरे सह भ्रातृभिरग्रतः।
उत्सृज्य गाः सुसन्त्रस्तं बलं ते समदीर्यत ॥ ३४९ ॥

अर्जुनस्तत्तथाऽकार्षीत्किं पुनः सर्व एव ते ।
स भ्रातॄनभिजानीहि वृत्त्या तं प्रतिपादय ॥ ३५० ॥
(अ.६७) दुर्योधने धार्तराष्ट्रे तद्वचो नाभिनन्दति ।
तूष्णींभूतेषु सर्वेषु समुत्तस्थुर्नरर्षभाः ॥ ३५१ ॥

## श्रीकृष्णपाण्डवमन्त्रणम्

(अ.७२) सञ्जये प्रतियाते तु धर्मराजो युधिष्ठिरः ।
अभ्यभाषत दाशार्हमृषभं सर्वसात्त्वताम् ॥ ३५२ ॥
श्रुतं ते धार्तराष्ट्रस्य सपुत्रस्य चिकीर्षितम् ।
एतद्धि सकलं कृष्ण सञ्जयो मां यदब्रवीत् ॥ ३५३ ॥
अप्रदानेन राज्यस्य शान्तिमस्मासु मार्गति ।
लुब्धः पापेन मनसा चरन्नसममात्मनः ॥ ३५४ ॥
सुयोधनमते तिष्ठन्राजाऽस्मासु जनार्दन ।
मिथ्या चरति लुब्धः सञ्चरन्हि प्रियमात्मनः ॥ ३५५ ॥
इतो दुःखतरं किं नु यदहं मातरं ततः ।
संविधातुं न शक्नोमि मित्राणां वा जनार्दन ॥ ३५६ ॥
अधनाद्धि निवर्तन्ते ज्ञातयः सुहृदो द्विजाः ।
अपुष्पादफलाद्वृक्षाद्यथा कृष्ण पतत्रिणः ॥ ३५७ ॥
धनमाहुः परं धर्मं धने सर्वं प्रतिष्ठितम् ।
जीवन्ति धनिनो लोके मृता ये त्वधना नराः ॥ ३५८ ॥
ते वयं न श्रियं हातुमलं न्यायेन केनचित् ।
अत्र नो यतमानानां वधश्चेदपि साधु तत् ॥ ३५९ ॥
तत्र नः प्रथमः कल्पो यद्वयं ते च माधव ।
प्रशान्ताः शमभूताश्च श्रियं तामश्नुवीमहि ॥ ३६० ॥
तत्रैषा परमा काष्ठा रौद्रकर्मक्षयोदया ।
यद्वयं कौरवान्हत्वा तानि राष्ट्राण्यवाप्नुमः ॥ ३६१ ॥

न चापि वैरं वैरेण केशव व्युपशाम्यति।
हविषाऽग्निर्यथा कृष्ण भूय एवाभिवर्धते ॥ ३६२ ॥
तत्र किं मन्यसे कृष्ण प्राप्तकालमनन्तरम्।
कथमर्थाच्च धर्माच्च न हीयेम हि माधव ॥ ३६३ ॥
ईदृशेऽत्यर्थकृच्छ्रेऽस्मिन्कमन्यं मधुसूदन।
उपसम्प्रष्टुमर्हामि त्वामृते पुरुषोत्तम ॥ ३६४ ॥
एवमुक्तः प्रत्युवाच धर्मराजं जनार्दनः।
उभयोरेव वामर्थे यास्यामि कुरुसंसदम् ॥ ३६५ ॥

युधि- न ममैतन्मतं कृष्ण यत्त्वं यायाः कुरून्प्रति।
सुयोधनः सूक्तमपि न करिष्यति ते वचः ॥ ३६६ ॥

श्रीभग- जानाम्येतां महाराज धार्तराष्ट्रस्य पापताम्।
अवाच्यास्तु भविष्यामः सर्वलोके महीक्षिताम् ॥ ३६७ ॥
न जातु गमनं पार्थ भवेत्तत्र निरर्थकम्।
अर्थप्राप्तिः कदाचित्स्यादन्ततो वाऽप्यवाच्यता ॥ ३६८ ॥

युधि- यत्तुभ्यं रोचते कृष्ण स्वस्ति प्राप्नुहि कौरवान्।
कृतार्थं स्वस्तिमन्तं त्वां द्रक्ष्यामि पुनरागतम् ॥ ३६९ ॥
अस्मान्वेत्थ परान्वेत्थ वेत्थार्थान्वेत्थ भाषितुम्।
यद्यदस्मद्धितं कृष्ण तत्तद्वाच्यः सुयोधनः ॥ ३७० ॥

श्रीभग- सञ्जयस्य श्रुतं वाक्यं भवतश्च श्रुतं मया।
(अ.७२) सर्वं जानाम्यभिप्रायं तेषां च भवतश्च यः ॥ ३७१ ॥
यावच्च मार्दवेनैतान्राजन्नुपचरिष्यसि।
तावदेते हरिष्यन्ति तव राज्यमरिन्दम ॥ ३७२ ॥
यत्त्वामुपधिना राजन्द्यूते वञ्चितवांस्तदा।
न चापत्रपते तेन नृशंसः स्वेन कर्मणा ॥ ३७३ ॥
तथाशीलसमाचारे राजन्मा प्रणयं कृथाः।
यात्वा चाहं कुरून्सर्वान्युष्मदर्थमहापयन् ॥ ३७४ ॥

यतिष्ये प्रशमं कर्तुं लक्षयिष्ये च चेष्टितम्।
कौरवाणां प्रवृत्तिं च गत्वा युद्धाधिकारिकाम्॥ ३७५॥
निशम्य विनिवर्तिष्ये जयाय तव भारत।
सर्वथा युद्धमेवाहमाशंसामि परैः सह।
निमित्तानि हि सर्वाणि तथा प्रादुर्भवन्ति मे॥ ३७६॥

भीम- (अ.७४) यथा यथैव शान्तिः स्यात्कुरूणां मधुसूदन।
तथा तथैव भाषेथा मा स्म युद्धेन भीषयेः॥ ३७७॥
अपि दुर्योधनं कृष्ण सर्वे वयमधश्चराः।
नीचैर्भूत्वाऽनुयास्यामो मा स्म नो भरताऽनशन्॥ ३७८॥

श्रीभग- (अ.७५) त्वमन्यदा भीमसेन युद्धमेव प्रशंससि।
यथाभिनन्दिनः क्रूरान्धार्तराष्ट्रान्निममर्दिषुः॥ ३७९॥
तस्य ते प्रशमे बुद्धिर्ध्रियतेऽद्य परन्तप।
इदं मे महदाश्चर्यं पर्वतस्येव सर्पणम्॥ ३८०॥
यदीदृशं प्रभाषेथा भीमसेनासमं वचः।
स दृष्ट्वा स्वानि कर्माणि कुले जन्म च भारत॥ ३८१॥
उत्तिष्ठस्व विषादं मा कृथा वीर स्थिरो भव।
न चैतदनुरूपं ते यत्ते ग्लानिररिन्दम।
यदोजसा न लभते क्षत्रियो न तदश्नुते॥ ३८२॥

भीम- (अ.७६) अन्यथा मां चिकीर्षन्तमन्यथा मन्यसेऽच्युत।
तस्मादनभिरूपाभिर्वाग्भिर्मा त्वं समर्छसि।
न हि त्वं नाभिजानासि मम विक्रममच्युत॥ ३८३॥
न मे सीदन्ति मज्जानो न ममोद्वेपते मनः।
सर्वलोकादभिक्रुद्धान्न भयं विद्यते मम॥ ३८४॥
किं तु सौहृदमेवैतत्कृपया मधुसूदन।
सर्वांस्तितिक्षे सङ्क्लेशान्मा स्म नो भरता नशन्॥ ३८५॥

श्रीभग– भावं जिज्ञासमानोऽहं प्रणयादिदमब्रुवम् ।
(अ.७७) न चाक्षेपान्न पाण्डित्यान्न क्रोधान्न विवक्षया ॥ ३८६ ॥
अस्मिन्युद्धे भीमसेन त्वयि भारः समाहितः ।
तस्मादाशङ्कमानोऽहं वृकोदर मतिं तव ।
गदतः क्लीबया वाचा तेजस्ते समदीदिपम् ॥ ३८७ ॥

अर्जुन– उक्तं युधिष्ठिरेणैव यावद्वाच्यं जनार्दन ।
(अ.७८) तव वाक्यं तु मे श्रुत्वा प्रतिभाति परन्तप ॥ ३८८ ॥
नैव प्रशममत्र त्वं मन्यसे सुकरं प्रभो ।
स तथा कृष्ण वर्तस्व यथा शर्म भवेत्परैः ॥ ३८९ ॥
अथवा मन्यसे ज्यायान्वधस्तेषामनन्तरम् ।
तदेव क्रियतामाशु न विचार्यमतस्त्वया ॥ ३९० ॥
तस्माद्यन्मन्यसे युक्तं पाण्डवानां हितं च यत् ।
तथाऽऽशु कुरु वार्ष्णेय यन्नः कार्यमनन्तरम् ॥ ३९१ ॥

नकुल– उक्तं बहुविधं वाक्यं धर्मराजेन माधव ।
(अ.८०) यत्प्राप्तकालं मन्येथास्तत्कुर्याः पुरुषोत्तम ॥ ३९२ ॥
तस्मिंस्तस्मिन्निमित्ते हि मतं भवति केशव ।
प्राप्तकालं मनुष्येण क्षमं कार्यमरिन्दम ॥ ३९३ ॥
अन्यथा चिन्तितो ह्यर्थः पुनर्भवति सोऽन्यथा ।
अनित्यमतयो लोके नराः पुरुषसत्तम ॥ ३९४ ॥
अन्यथा बुद्धयो ह्यासन्नस्मासु वनवासिषु ।
अदृश्येष्वन्यथा कृष्ण दृश्येषु पुनरन्यथा ॥ ३९५ ॥
स भवान्गमनादेव साधयिष्यत्यसंशयम् ।
इममर्थं महाबाहो धर्मराजस्य केवलम् ॥ ३९६ ॥
श्रोता चार्थस्य विदुरस्त्वं च वक्ता जनार्दन ।
कमिवार्थं निवर्तन्तं स्थापयेतां न वर्त्मनि ॥ ३९७ ॥

सहदेव– यदेतत्कथितं राज्ञा धर्म एप सनातनः।
(अ.८१) यथा च युद्धमेव स्यात्तथा कार्यमरिन्दम ॥ ३९८ ॥
यदि प्रशममिच्छेयुः कुरवः पाण्डवैः सह।
तथापि युद्धं दाशार्ह योजयेथाः सहैव तैः ॥ ३९९ ॥
कथं नु दृष्ट्वा पाञ्चालीं तथा कृष्ण सभागताम्।
अवधेन प्रशाम्येत मम मन्युः सुयोधने ॥ ४०० ॥
सात्यकि–सत्यमाह महाबाहो सहदेवो महामतिः।
दुर्योधनवधे शान्तिस्तस्य कोपस्य मे भवेत् ॥ ४०१ ॥
(अ.८२) राज्ञस्तु वचनं श्रुत्वा धर्मार्थसहितं हितम्।
कृष्णा दाशार्हमासीनमब्रवीच्छोककर्शिता ॥ ४०२ ॥
अप्रदानेन राज्यस्य यदि कृष्ण सुयोधनः।
सन्धिमिच्छेन्न कर्तव्यं तत्र गत्वा कथञ्चन ॥ ४०३ ॥
साम्ना दानेन वा कृष्ण ये न शाम्यन्ति शत्रवः।
योक्तव्यस्तेषु दण्डः स्याज्जीवितं परिरक्षता ॥ ४०४ ॥
क्षत्रियेण हि हन्तव्यः क्षत्रियो लोभमास्थितः।
यथाऽवध्ये वध्यमाने भवेद्दोषो जनार्दन ॥ ४०५ ॥
स वध्यस्यावधे दृष्ट इति धर्मविदो विदुः।
यथा त्वां न स्पृशेदेष दोषः कृष्ण तथा कुरु ॥ ४०६ ॥
सुता द्रुपदराजस्य वेदिमध्यात्समुत्थिता।
धृष्टद्युम्नस्य भगिनी तव कृष्ण प्रिया सखी ॥ ४०७ ॥
आजमीढकुलं प्राप्ता स्नुषा पाण्डोर्महात्मनः।
महिषी पाण्डुपुत्राणां पञ्चेन्द्रसमवर्चसाम् ॥ ४०८ ॥
साऽहं केशग्रहं प्राप्ता परिक्लिष्टा सभां गता।
पश्यतां पाण्डुपुत्राणां त्वयि जीवति केशव ॥ ४०९ ॥
इत्युक्त्वा मृदुसंहारं वृजिनाग्रं सुदर्शनम्।
केशपक्षं वरारोहा गृह्य वामेन पाणिना ॥ ४१० ॥

पद्माक्षी पुण्डरीकाक्षमुपेत्य गजगामिनी ।
अश्रुपूर्णेक्षणा कृष्णा कृष्णं वचनमब्रवीत् ॥ ४११ ॥
अयं ते पुण्डरीकाक्ष दुःशासनकरोद्धृतः ।
स्मर्तव्यः सर्वकार्येषु परेषां सन्धिमिच्छता ॥ ४१२ ॥
दुःशासनभुजं श्यामं सञ्छिन्नं पांसुगुण्ठितम् ।
यद्यहं तु न पश्यामि का शान्तिर्हृदयस्य मे ॥ ४१३ ॥
तामुवाच महाबाहुः केशवः परिसान्त्वयन् ।
अचिराद्द्रक्ष्यसे कृष्णे रुदतीर्भरतस्त्रियः ॥ ४१४ ॥
धार्तराष्ट्राः कालपक्वा न चेच्छृण्वन्ति मे वचः ।
शेष्यन्ते निहता भूमौ श्वसृगालादनीकृताः ॥ ४१५ ॥
चलेद्धि हिमवाञ्शैलो मेदिनी शतधा फलेत् ।
द्यौः पतेच्च सनक्षत्रा न मे मोघं वचो भवेत् ॥ ४१६ ॥
सत्यं ते प्रतिजानामि कृष्णे बाष्पो निगृह्यताम् ।
हतामित्राञ्श्रिया युक्तानचिराद्द्रक्ष्यसे पतीन् ॥ ४१७ ॥

## भगवद्यानम्

(अ.८३) ततो व्यपेततमसि सूर्ये विमलवद्गते ।
मैत्रे मुहूर्ते सम्प्राप्ते मृद्वर्चिषि दिवाकरे ॥ ४१८ ॥
कौमुदे मासि रेवत्यां शरदन्ते हिमागमे ।
आरुरोह रथं शौरिर्विमानमिव कामगम् ।
ततः सात्यकिमारोप्य प्रययौ पुरुषोत्तमः ॥ ४१९ ॥

(अ.८४) वृकस्थलं समासाद्य केशवः परवीरहा ।
प्रकीर्णरश्मावादित्ये व्योम्नि वै लोहितायति ॥ ४२० ॥
अवतीर्य रथात्तूर्णं कृत्वा शौचं यथाविधि ।
रथमोचनमादिश्य सन्ध्यामुपविवेश ह ॥ ४२१ ॥

सुमृष्टं भोजयित्वा च ब्राह्मणांस्तत्र केशवः।
भुक्त्वा च सह तैः सर्वैरवसत्तां क्षपां सुखम् ॥ ४२२ ॥
(अ.८५) तथा दूतैः समाज्ञाय प्रयान्तं मधुसूदनम्।
धृतराष्ट्रोऽब्रवीद्भीष्ममर्चयित्वा महाभुजम् ॥ ४२३ ॥
उपायास्यति दाशार्हः पाण्डवार्थे पराक्रमी।
स नो मान्यश्च पूज्यश्च सर्वथा मधुसूदनः ॥ ४२४ ॥
सभाः पथि विधीयन्तां सर्वकामसमन्विताः।
ततो देशेषु देशेषु रमणीयेषु भागशः ॥ ४२५ ॥
सर्वरत्नसमाकीर्णाः सभाश्चक्रुरनेकशः।
गुणवन्त्यन्नपानानि भोज्यानि विविधानि च ॥ ४२६ ॥
माल्यानि च सुगन्धीनि तानि राजा ददौ ततः।
विशेषतश्च वासार्थं सभां ग्रामे वृकस्थले ॥ ४२७ ॥
विदधे कौरवो राजा बहुरत्नां मनोरमाम्।
ताः सभाः केशवः सर्वा रत्नानि विविधानि च।
असमीक्ष्यैव दाशार्ह उपायात्कुरुसद्म तत् ॥ ४२८ ॥
धृत- उपप्लव्यादिह क्षत्तरुपायातो जनार्दनः।
(अ.८६) वृकस्थले निवसति स च प्रातरिहैष्यति ॥ ४२९ ॥
तस्मै पूजां प्रयोक्ष्यामि दाशार्हाय महात्मने।
एकवर्णैः सुकल्पाङ्गैर्बाह्लिजातैर्हयोत्तमैः ॥ ४३० ॥
चतुर्युक्तान्रथांस्तस्मै रौक्मान्दास्यामि षोडश।
दिवा रात्रौ च भात्येष सुतेजा विमलो मणिः ॥ ४३१ ॥
तमप्यस्मै प्रदास्यामि तमर्हति हि केशवः।
यावन्ति वाहनान्यस्य यावन्तः पुरुषाश्च ते।
ततोऽष्टगुणमप्यस्मै भोज्यं दास्याम्यहं सदा ॥ ४३२ ॥
विदुर- *यत्त्वमिच्छसि कृष्णाय राजन्नतिथये बहु।*
(अ.८७) एतदन्यच्च दाशार्हः पृथिवीमपि चार्हति ॥ ४३३ ॥

ततो दुर्योधनमिदं धृतराष्ट्रोऽब्रवीद्वचः।
मैवं वोचः प्रजापाल नैष धर्मः सनातनः ॥ ४४७ ॥

दूतश्च हि हृषीकेशः सम्बन्धी च प्रियश्च नः।
अपापः कौरवेयेषु स कथं बन्धमर्हति ॥ ४४८ ॥

भीष्म– परीतस्तव पुत्रोऽयं धृतराष्ट्र सुमन्दधीः।
वृणोत्यनर्थं नेवार्थं याच्यमानः सुहृज्जनैः ॥ ४४९ ॥

पापस्यास्य नृशंसस्य त्यक्तधर्मस्य दुर्मतेः।
नोत्सहेऽनर्थसंयुक्ताः श्रोतुं वाचः कथञ्चन ॥ ४५० ॥

इत्युक्त्वा भरतश्रेष्ठो वृद्धः परममन्युमान्।
उत्थाय तस्मात्प्रातिष्ठद्भीष्मः सत्यपराक्रमः ॥ ४५१ ॥

(अ.८९) प्रातरुत्थाय कृष्णस्तु कृतवान्सर्वमाह्निकम्।
ब्राह्मणैरभ्यनुज्ञातः प्रययौ नगरं प्रति ॥ ४५२ ॥

स गृहं धृतराष्ट्रस्य प्राविशच्छत्रुकर्शनः।
अभ्यागच्छति दाशार्हे प्रज्ञाचक्षुर्नराधिपः ॥ ४५३ ॥

सहैव द्रोणभीष्माभ्यामुदतिष्ठन्महायशाः।
तेषु धर्मानुपूर्वीं तां प्रयुज्य मधुसूदनः ॥ ४५४ ॥

यथावयः समीयाय राजभिः सह माधवः।
तत्रासीदूर्जितं मृष्टं काञ्चनं महदासनम् ॥ ४५५ ॥

शासनाद्धृतराष्ट्रस्य तत्रोपाविशदच्युतः।
कृतातिथ्यस्तु गोविन्दः सर्वान्परिहसन्कुरून् ॥ ४५६ ॥

आस्ते साम्बन्धिकं कुर्वन्कुरुभिः परिवारितः।
राजानं समनुज्ञाप्य निरक्रामदरिन्दमः ॥ ४५७ ॥

विदुरावसथं रम्यमुपातिष्ठत माधवः।
तस्य सर्वं सविस्तारं पाण्डवानां विचेष्टितम्।
क्षत्तुराचष्ट दाशार्हः सर्वं प्रत्यक्षदर्शिवान् ॥ ४५८ ॥

न तु त्व धर्ममुद्दिश्य तस्य वा प्रियकारणात्।
एतद्दित्ससि कृष्णाय सत्येनात्मानमालभे ॥ ४३४ ॥
मायैषा सत्यमेवैतच्छद्मैतद्भूरिदक्षिण।
जानामि त्वन्मतं राजन्गूढं बाह्येन कर्मणा ॥ ४३५ ॥
पञ्च पञ्चैव लिप्सन्ति ग्रामकान्पाण्डवा नृप।
न च दित्ससि तेभ्यस्तांस्तच्छद्मं न करिष्यसि ॥ ४३६ ॥
अर्थेन तु महाबाहुं वार्ष्णेयं त्वं जिहीर्षसि।
अनेन चाप्युपायेन पाण्डवेभ्यो विभेत्स्यसि ॥ ४३७ ॥
न च वित्तेन शक्योऽसौ नोद्यमेन न गर्हया।
अन्यो धनञ्जयात्कर्तुमेतत्तत्त्वं ब्रवीमि ते ॥ ४३८ ॥
शममिच्छति दाशार्हस्तव दुर्योधनस्य च।
पाण्डवाना च राजेन्द्र तदस्य वचनं कुरु ॥ ४३९ ॥
पितासि राजन्पुत्रास्ते वृद्धस्त्वं शिशवः परे।
वर्तस्व पितृवत्तेषु वर्तन्ते ते हि पुत्रवत् ॥ ४४० ॥

दुर्यो- यदाह विदुरः कृष्णे सर्वं तत्सत्यमच्युते।
(अ.८८) अनुरक्तो ह्यसंहार्यः पार्थान्प्रति जनार्दनः ॥ ४४१ ॥
यत्तत्सत्कारसंयुक्तं देयं वसु जनार्दने।
अनेकरूपं राजेन्द्र न तद्देयं कदाचन ॥ ४४२ ॥
देशः कालस्तथाऽयुक्तो न हि नार्हति केशवः।
मंस्यत्यधोक्षजो राजन्भयादर्चति मामिति ॥ ४४३ ॥
अवमानश्च यत्र स्यात्क्षत्रियस्य विशाम्पते।
न तत्कुर्याद्बुधः कार्यमिति मे निश्चिता मतिः ॥ ४४४ ॥
इदं तु सुमहत्कार्यं शृणु मे यत्समर्थितम्।
परायणं पाण्डवानां नियच्छामि जनार्दनम् ॥ ४४५ ॥
तस्मिन्बद्धे भविष्यन्ति वृष्णयः पृथिवी तथा।
पाण्डवाश्च विधेया मे स च प्रातरिहैष्यति ॥ ४४६ ॥

ततो दुर्योधनमिदं धृतराष्ट्रोऽब्रवीद्वच·।
मैवं वोच· प्रजापाल नैष धर्मः सनातनः ॥ ४४७ ॥

दूतश्च हि हृषीकेश· सम्बन्धी च प्रियश्च नः।
अपापः कौरवेयेषु स कथं बन्धमर्हति ॥ ४४८ ॥

भीष्म– परीतस्तव पुत्रोऽयं धृतराष्ट्र सुमन्दधीः।
वृणोत्यनर्थं नैवार्थं याच्यमानः सुहृज्जनैः ॥ ४४९ ॥

पापस्यास्य नृशंसस्य त्यक्तधर्मस्य दुर्मतेः।
नोत्सहेऽनर्थसंयुक्ताः श्रोतुं वाच· कथञ्चन ॥ ४५० ॥

इत्युक्त्वा भरतश्रेष्ठो वृद्ध· परममन्युमान्।
उत्थाय तस्मात्प्रातिष्ठद्भीष्मः सत्यपराक्रमः ॥ ४५१ ॥

(अ.८९) प्रातरुत्थाय कृष्णस्तु कृतवान्सर्वमाह्निकम्।
ब्राह्मणैरभ्यनुज्ञातः प्रययौ नगरं प्रति ॥ ४५२ ॥
स गृहं धृतराष्ट्रस्य प्राविशच्छत्रुकर्शन·।
अभ्यागच्छति दाशार्हे प्रज्ञाचक्षुर्नराधिप· ॥ ४५३ ॥
सहैव द्रोणभीष्माभ्यामुदतिष्ठन्महायशाः।
तेषु धर्मानुपूर्वीं तां प्रयुज्य मधुसूदन· ॥ ४५४ ॥
यथावयः समीयाय राजभि· सह माधव·।
तत्रासीदूर्जितं मृष्टं काञ्चनं महदासनम् ॥ ४५५ ॥
शासनाद्धृतराष्ट्रस्य तत्रोपाविशदच्युतः।
कृतातिथ्यस्तु गोविन्द· सर्वान्परिहसन्कुरून् ॥ ४५६ ॥
आस्ते साम्बन्धिकं कुर्वन्कुरुभि· परिवारित·।
राजानं समनुज्ञाप्य निरक्रामदरिन्दम· ॥ ४५७ ॥
विदुरावसथं रम्यमुपातिष्ठत माधवः।
तस्य सर्वं सविस्तारं पाण्डवानां विचेष्टितम्।
क्षत्तुराचष्ट दाशार्ह· सर्वं प्रत्यक्षदर्शिवान् ॥ ४५८ ॥

(अ.९०) अथोपगम्य विदुरमपराह्णे जनार्दनः।
पितृष्वसारं स पृथामभ्यगच्छदरिन्दमः ॥ ४५९ ॥
सा दृष्ट्वा कृष्णमायान्तं प्रसन्नादित्यवर्चसम्।
कण्ठे गृहीत्वा प्राक्रोशत्स्मरन्ती तनयान्पृथा ॥ ४६० ॥
सा शोकार्ता च हृष्टा च दृष्ट्वा गोविन्दमागतम्।
नानाविधानि दुःखानि सर्वाण्येवान्वकीर्तयत् ॥ ४६१ ॥
न मां माधव वैधव्यं नार्थनाशो न वैरता।
तथा शोकाय दहति यथा पुत्रैर्विनाभवः ॥ ४६२ ॥
तत आश्वासयामास पुत्राधिभिरभिप्लुताम्।
पितृष्वसारं शोचन्तीं शौरिः पार्थसखः पृथाम् ॥ ४६३ ॥

वासुदेव– अभिवादयन्ति भवतीं पाण्डवाः सह कृष्णया।
आत्मानं च कुशलिनं निवेद्याहुरनामयम् ॥ ४६४ ॥
अरोगान्सर्वसिद्धार्थान्क्षिप्रं द्रक्ष्यसि पाण्डवान्।
ईश्वरान्सर्वलोकस्य हतामित्राञ्श्रियावृतान् ॥ ४६५ ॥
एवमाश्वासिता कुन्ती प्रत्युवाच जनार्दनम्।
पुत्राधिभिरभिध्वस्ता निगृह्याऽबुद्धिजं तमः ॥ ४६६ ॥

कुन्ती– त्वं त्राता त्वं महद्ब्रह्म त्वयि सर्वं प्रतिष्ठितम्।
यथैवात्थ तथैवैतत्त्वयि सत्यं भविष्यति ॥ ४६७ ॥

(अ.९१) पृथामामन्त्र्य गोविन्दः कृत्वा चाभिप्रदक्षिणम्।
दुर्योधनगृहं शौरिरभ्यगच्छदरिन्दमः ॥ ४६८ ॥
तत्र जाम्बूनदमयं पर्यङ्कं सुपरिष्कृतम्।
विविधास्तरणास्तीर्णमभ्युपाविशदच्युतः ॥ ४६९ ॥
ततो दुर्योधनो राजा वार्ष्णेयं जयतां वरम्।
न्यमन्त्रयद्भोजनेन नाभ्यनन्दच्च केशवः ॥ ४७० ॥
ततो दुर्योधनः कृष्णमब्रवीत्कुरुसंसदि।
कस्मादन्नानि पानानि वासांसि शयनानि च ॥ ४७१ ॥

त्वदर्थमुपनीतानि नाग्रहीस्त्वं जनार्दन।
स एवमुक्तो गोविन्दः प्रत्युवाच महामनाः ॥ ४७२ ॥
कृतार्था भुञ्जते दूताः पूजां गृह्णन्ति चैव ह।
कृतार्थं मां सहामात्यं समर्चिष्यसि भारत ॥ ४७३ ॥
नाहं कामान्न संरम्भान्न द्वेषान्नार्थकारणात्।
न हेतुवादाल्लोभाद्वा धर्मं जह्यां कथञ्चन ॥ ४७४ ॥
सम्प्रीतिभोज्यान्यन्नानि आपद्भोज्यानि वा पुनः।
न च सम्प्रीयसे राजन्न चैवापद्गता वयम् ॥ ४७५ ॥
अकस्माद्द्वेक्षि वै राजञ्जन्मप्रभृति पाण्डवान्।
धर्मे स्थिताः पाण्डवेयाः कस्तान्किं वक्तुमर्हति ॥ ४७६ ॥
यस्तान्द्वेष्टि स मां द्वेष्टि यस्ताननु स मामनु।
ऐकात्म्यं मां गतं विद्धि पाण्डवैर्धर्मचारिभिः ॥ ४७७ ॥
सर्वमेतन्न भोक्तव्यमन्नं दुष्टाभिसंहितम्।
क्षत्तुरेकस्य भोक्तव्यमिति मे धीयते मतिः ॥ ४७८ ॥
एवमुक्त्वा महाबाहुर्दुर्योधनममर्षणम्।
निवेशाय ययौ वेश्म विदुरस्य महात्मनः ॥ ४७९ ॥
ततः क्षत्ताऽन्नपानानि शुचीनि गुणवन्ति च।
उपाहरदनेकानि केशवाय महात्मने ॥ ४८० ॥
(अ ९२) तं भुक्तवन्तमाश्वस्तं निशायां विदुरोऽब्रवीत्।
नेदं सम्यग्व्यवसितं केशवागमनं तव ॥ ४८१ ॥
अर्थधर्मातिगो मन्दः संरम्भी च जनार्दन।
मानघ्नो मानकामश्च वृद्धानां शासनातिगः ॥ ४८२ ॥
धर्मशास्त्रातिगो मूढो दुरात्मा प्रग्रहं गतः।
अनेयः श्रेयसां मन्दो धार्तराष्ट्रो जनार्दन ॥ ४८३ ॥
यत्र सूक्तं दुरुक्तं च समं स्यान्मधुसूदन।
न तत्र प्रलपेत्प्राज्ञो बधिरेष्विव गायनः ॥ ४८४ ॥

सोऽयं बलस्थो मूढश्च न करिष्यति ते वचः।
तस्मिन्निरर्थकं वाक्यमुक्तं सम्पत्स्यते तव ॥ ४८५ ॥
तेषां समुपविष्टानां सर्वेषां पापचेतसाम्।
तव मध्यावतरणं मम कृष्ण न रोचते ॥ ४८६ ॥
या मे प्रीतिः पाण्डवेषु भूयः सा त्वयि माधव।
प्रेम्णा च बहुमानाच्च सौहृदाच्च ब्रवीम्यहम् ॥ ४८७ ॥

श्रीभग– दौरात्म्यं धार्तराष्ट्रस्य क्षत्रियाणां च वैरताम्।
(अ.९३) सर्वमेतदहं जानन्क्षत्तः प्राप्तोऽद्य कौरवान् ॥ ४८८ ॥
पर्यस्तां पृथिवीं सर्वां साश्वां सरथकुञ्जराम्।
यो मोचयेन्मृत्युपाशात्प्राप्नुयाद्धर्ममुत्तमम् ॥ ४८९ ॥
धर्मकार्यं यतञ्छक्त्या नो चेत्प्राप्नोति मानवः।
प्राप्तो भवति तत्पुण्यमत्र मे नास्ति संशयः ॥ ४९० ॥
सोऽहं यतिष्ये प्रशमं क्षत्तः कर्तुममायया।
कुरूणां सृञ्जयानां च सङ्ग्रामे विनशिष्यताम् ॥ ४९१ ॥
ज्ञातीनां हि मिथो भेदे यन्मित्रं नाभिपद्यते।
सर्वयत्नेन माध्यस्थं न तन्मित्रं विदुर्बुधाः ॥ ४९२ ॥
न मां ब्रूयुरधर्मिष्ठा मूढा ह्यसुहृदस्तथा।
शक्तो नावारयत्कृष्णः संरब्धान्कुरुपाण्डवान् ॥ ४९३ ॥
मम धर्मार्थयुक्तं हि श्रुत्वा वाक्यमनामयम्।
न चेदादास्यते बालो दिष्टस्य वशमेष्यति ॥ ४९४ ॥

(अ.९४) तथा कथयतोरेव तयोर्बुद्धिमतोस्तदा।
शिवा नक्षत्रसम्पन्ना सा व्यतीयाय शर्वरी ॥ ४९५ ॥
तत उत्थाय दाशार्ह ऋषभः सर्वसात्वताम्।
सर्वमावश्यकं चक्रे प्रातःकार्यं जनार्दनः ॥ ४९६ ॥
अथ दुर्योधनः कृष्णं शकुनिश्चापि सौबलः।
सन्ध्यां तिष्ठन्तमभ्येत्य दाशार्हमपराजितम् ॥ ४९७ ॥

आचक्षेतां तु कृष्णस्य धृतराष्ट्रं सभागतम् ।
कुरूंश्च भीष्मप्रमुखान्राज्ञः सर्वांश्च पार्थिवान् ॥ ४९८ ॥
त्वामर्थयन्ते गोविन्द दिवि शक्रमिवामराः ।
तावभ्यनन्दद्गोविन्दः साम्ना परमवल्गुना ॥ ४९९ ॥
ततो रथेन शुभ्रेण महता किङ्किणीकिना ।
हयोत्तमयुजा शीघ्रमुपातिष्ठत दारुकः ॥ ५०० ॥
आतिष्ठत रथं शौरिः सर्वयादवनन्दनः ।
अन्वारुरोह दाशार्हं विदुरः सर्वधर्मवित् ॥ ५०१ ॥
सात्यकिः कृतवर्मा च वृष्णीनां चापरे रथाः ।
पृष्ठतोऽनुययुः कृष्णं गजैरश्वै रथैरपि ॥ ५०२ ॥
आसाद्य तु सभाद्वारमृषभः सर्वसात्वताम् ।
अवतीर्य रथाच्छौरिः प्रविवेश सभां ततः ॥ ५०३ ॥
पाणौ गृहीत्वा विदुरं सात्यकिं च महायशाः ।
धृतराष्ट्रं पुरस्कृत्य भीष्मद्रोणादयस्ततः ॥ ५०४ ॥
आसनेभ्योऽचलन्सर्वे पूजयन्तो जनार्दनम् ।
आसनं सर्वतोभद्रं जाम्बूनदपरिष्कृतम् ॥ ५०५ ॥
कृष्णार्थे कल्पितं तत्र धृतराष्ट्रस्य शासनात् ।
तत्र केशवमानर्चुः सम्यगभ्यागतं सभाम् ।
राजानः पार्थिवाः सर्वे कुरवश्च जनार्दनम् ॥ ५०६ ॥

## सन्धिविचारः

(अ.९५) तेष्वासीनेषु सर्वेषु तूष्णींभूतेषु राजसु ।
धृतराष्ट्रमभिप्रेक्ष्य समभाषत माधवः ॥ ५०७ ॥
कुरूणां पाण्डवानां च शमः स्यादिति भारत ।
अप्रणाशेन वीराणामेतद्याचितुमागतः ॥ ५०८ ॥

इदं ह्यद्य कुलं श्रेष्ठं सर्वराजसु पार्थिव।
श्रुतवृत्तोपसम्पन्नं सर्वैः समुदितं गुणैः ॥ ५०९ ॥
तस्मिन्नेवंविधे राजन्कुले महति तिष्ठति।
त्वन्निमित्तं विशेषेण नेह युक्तमसाम्प्रतम् ॥ ५१० ॥
ते पुत्रास्तव कौरव्य दुर्योधनपुरोगमाः।
धर्मार्थौ पृष्ठतः कृत्वा प्रचरन्ति नृशंसवत् ॥ ५११ ॥
अशिष्टा गतमर्यादा लोभेन हृतचेतसः।
स्वेषु बन्धुषु मुख्येषु तद्वेत्थ पुरुषर्षभ ॥ ५१२ ॥
सेयमापन्महाघोरा कुरुष्वेव समुत्थिता।
उपेक्ष्यमाणा कौरव्य पृथिवीं घातयिष्यति ॥ ५१३ ॥
त्वय्यधीनः शमो राजन्मयि चैव विशाम्पते।
पुत्रान्स्थापय कौरव्य स्थापयिष्याम्यहं परान् ॥ ५१४ ॥
एतैर्हि सहितः सर्वैः पाण्डवैः स्वैश्च भारत।
अन्यान्विजेष्यसे शत्रूनेष स्वार्थस्तवाखिलः ॥ ५१५ ॥
शिवेनेमे भूमिपालाः समागम्य परस्परम्।
सह भुक्त्वा च पीत्वा च प्रतियान्तु यथागृहम् ॥ ५१६ ॥
आहुस्त्वां पाण्डवा राजन्नभिवाद्य प्रसाद्य च।
भवतः शासनाद्दुःखमनुभूतं सहानुगैः ॥ ५१७ ॥
स्थाता नः समये तस्मिन्पितेति कृतनिश्चयाः।
नाहास्म समयं तात तच्च नो ब्राह्मणा विदुः ॥ ५१८ ॥
तस्मिन्नः समये तिष्ठ स्थितानां भरतर्षभ।
नित्यं सङ्क्लेशिता राजन्स्वराज्यांशं लभेमहि ॥ ५१९ ॥
ते सत्यमानुधर्म्यं च न्याय्यं च भरतर्षभ।
शक्यं किमन्यद्वक्तुं ते दानादन्यज्जनेश्वर ॥ ५२० ॥
पित्र्यं तेभ्यः प्रदायांशं पाण्डवेभ्यो यथोचितम्।
ततः सपुत्रः सिद्धार्थो भुङ्क्ष्व भोगान्परंतप ॥ ५२१ ॥

अहं तु तव तेषां च श्रेय इच्छामि भारत।
धर्मादर्थात्सुखाच्चैव मा राजन्नीनशः प्रजाः॥ ५२२॥
लोभेऽतिप्रसृतान्पुत्रान्निगृह्णीष्व विशाम्पते।
स्थिताः शुश्रूषितुं पार्थाः स्थिता योद्धुमरिन्दमाः।
यत्ते पथ्यतमं राजंस्तस्मिंस्तिष्ठ परन्तप॥ ५२३॥
(अ.१२४) ततोऽभ्यावृत्य वार्ष्णेयो दुर्योधनममर्षणम्।
अब्रवीन्मधुरां वाचं सर्वधर्मार्थतत्त्ववित्॥ ५२४॥
दुर्योधन निबोधेदं मद्वाक्यं कुरुसत्तम।
सन्धत्स्व पुरुषव्याघ्र पाण्डवैर्भरतर्षभ॥ ५२५॥
तद्धितं च प्रियं चैव धृतराष्ट्रस्य धीमतः।
श्रुत्वा यः सुहृदां शास्त्रं मर्त्यो न प्रतिपद्यते॥ ५२६॥
विपाकान्ते दहत्येनं किंपाकमिव भक्षितम्।
जन्मप्रभृति कौन्तेया नित्यं विनिकृतास्त्वया॥ ५२७॥
न च ते जातु कुप्यन्ति धर्मात्मानो हि पाण्डवाः।
*आत्मानं तक्षति ह्येष वनं परशुना यथा॥ ५२८॥*
यः सम्यग्वर्तमानेषु मिथ्या राजन्प्रवर्तते।
अयं भीष्मस्तथा द्रोणः कर्णश्चायं तथा कृपः॥ ५२९॥
अशक्ताः सर्व एवैते प्रतियोद्धुं धनञ्जयम्।
मद्द्वितीयं पुनः पार्थं कः प्रार्थयितुमर्हति॥ ५३०॥
पश्य पुत्रांस्तथा भ्रातॄञ्ज्ञातीन्सम्बन्धिनस्तथा।
त्वत्कृते न विनश्येयुरिमे भरतसत्तमाः॥ ५३१॥
अस्तु शेषं कौरवाणां मा पराभूदिदं कुलम्।
कुलघ्न इति नोच्येथा नष्टकीर्तिर्नराधिप॥ ५३२॥
त्वामेव स्थापयिष्यन्ति यौवराज्ये महारथाः।
महाराज्येऽपि पितरं धृतराष्ट्रं जनेश्वरम्॥ ५३३॥

मा तात श्रियमायान्तीमवमंस्थाः समुद्यताम्।
अर्धं प्रदाय पार्थेभ्यो महतीं श्रियमाप्नुहि ॥ ५३४ ॥
पाण्डवैः संशमं कृत्वा कृत्वा च सुहृदां वचः।
सम्प्रीयमाणो मित्रैश्च चिरं भद्राण्यवाप्स्यसि ॥ ५३५ ॥
(अ.१२५) ततः शान्तनवो भीष्मो दुर्योधनममर्षणम्।
केशवस्य वचः श्रुत्वा प्रोवाच भरतर्षभ ॥ ५३६ ॥
धर्म्यमर्थ्यं महाबाहुराह त्वां तात केशवः।
तदर्थमभिपद्यस्व मा राजन्नीनशः प्रजाः ॥ ५३७ ॥
अथ द्रोणोऽब्रवीत्तत्र दुर्योधनमिदं वचः।
अनुतिष्ठ महाप्राज्ञ कृष्णभीष्मौ यदूचतुः ॥ ५३८ ॥
ये त्वां प्रोत्साहयन्त्येते नैते कृत्याय कर्हिचित्।
वैरं परेषां ग्रीवायां प्रतिमोक्ष्यन्ति संयुगे ॥ ५३९ ॥
तस्मिन्वाक्यान्तरे वाक्यं क्षत्तापि विदुरोऽब्रवीत्।
दुर्योधन न शोचामि त्वामहं भरतर्षभ ॥ ५४० ॥
इमौ तु वृद्धौ शोचामि गान्धारीं पितरं च ते।
यावनाथौ चरिष्येते त्वया नाथेन दुर्हृदा ॥ ५४१ ॥
हतमित्रौ हतामात्यौ लूनपक्षाविवाण्डजौ।
अथ दुर्योधनं राजा धृतराष्ट्रोऽभ्यभाषत ॥ ५४२ ॥
दुर्योधन निबोधेदं शौरिणोक्तं महात्मना।
अनेन हि सहायेन कृष्णेनाक्लिष्टकर्मणा ॥ ५४३ ॥
इष्टान्सर्वानभिप्रायान्प्राप्स्यामः सर्वराजसु।
सुसंहतः केशवेन तात गच्छ युधिष्ठिरम् ॥ ५४४ ॥
चर स्वस्त्ययनं कृत्स्नं भरतानामनामयम्।
वासुदेवेन तीर्थेन तात गच्छस्व संशमम् ॥ ५४५ ॥
कालप्राप्तमिदं मन्ये मा त्वं दुर्योधनातिगाः।
शमं चेद्याचमानं त्वं प्रत्याख्यास्यसि केशवम्।
त्वदर्थमभिजल्पन्तं न तवास्त्यपराभवः ॥ ५४६ ॥

(अ.१२७) श्रुत्वा दुर्योधनो वाक्यमप्रियं कुरुसंसदि।
प्रत्युवाच महाबाहुं वासुदेवं यशस्विनम् ॥ ५४७ ॥
भवान्क्षत्ता च राजा वाऽप्याचार्यो वा पितामहः।
मामेव परिगर्हन्ते नान्यं कञ्चन पार्थिवम् ॥ ५४८ ॥
न चाहं कञ्चिदत्यर्थमपराधमरिन्दम।
विचिन्तयन्प्रपश्यामि सुसूक्ष्ममपि केशव ॥ ५४९ ॥
प्रियाभ्युपगते द्यूते पाण्डवा मधुसूदन।
जिताः शकुनिना राज्यं तत्र किं मम दुष्कृतम् ॥ ५५० ॥
किमस्माभिः कृतं तेषां कस्मिन्वा पुनरागसि।
धार्तराष्ट्राञ्जिघांसन्ति पाण्डवाः सृञ्जयैः सह ॥ ५५१ ॥
न चापि वयमुग्रेण कर्मणा वचनेन वा।
प्रभ्रष्टाः प्रणमामेह भयादपि शतक्रतुम् ॥ ५५२ ॥
मुख्यश्चैवैष नो धर्मः क्षत्रियाणां जनार्दन।
यच्छयीमहि सङ्ग्रामे शरतल्पगता वयम् ॥ ५५३ ॥
उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषम्।
अप्यपर्वणि भज्येत न नमेदिह कर्हिचित् ॥ ५५४ ॥
इति मातङ्गवचनं परीप्सन्ति हितेप्सवः।
अप्रदेयं पुरा दत्तं राज्यं परवतो मम ॥ ५५५ ॥
अज्ञानाद्वा भयाद्वाऽपि मयि बाले जनार्दन।
न तदद्य पुनर्लभ्यं पाण्डवैर्वृष्णिनन्दन ॥ ५५६ ॥
ध्रियमाणे महाबाहो मयि सम्प्रति केशव।
यावद्धि तीक्ष्णया सूच्या विध्येदग्रेण केशव।
तावदप्यपरित्याज्यं भूमेर्नः पाण्डवान्प्रति ॥ ५५७ ॥
(अ.१२८) ततः प्रहस्य दाशार्हः क्रोधपर्याकुलेक्षणः।
दुर्योधनमिदं वाक्यमुवाच कुरुसंसदि ॥ ५५८ ॥

लप्स्यसे वीरशयनं काममेतदवाप्स्यसि ।
स्थिरो भव सहामात्यो विमर्दो भविता महान् ॥ ५५९ ॥
यच्चैवं मन्यसे मूढ न मे कश्चिद्व्यतिक्रमः ।
पाण्डवेष्विति तत्सर्वं निबोधत नराधिपाः ॥ ५६० ॥
श्रिया सन्तप्यमानेन पाण्डवानां महात्मनाम् ।
त्वया दुर्मन्त्रितं द्यूतं सौबलेन च भारत ॥ ५६१ ॥
कश्चान्यो भ्रातृभार्यां वै विप्रकर्तुं तथाऽर्हति ।
आनीय च सभां व्यक्तं यथोक्ता द्रौपदी त्वया ॥ ५६२ ॥
सह मात्रा प्रदग्धुं तान्बालकान्वारणावते ।
आस्थितः परमं यत्नं न समृद्धं च तत्तव ॥ ५६३ ॥
विषेण सर्पबन्धैश्च यतिताः पाण्डवास्त्वया ।
सर्वोपायैर्विनाशाय न समृद्धं च तत्तव ॥ ५६४ ॥
एवंबुद्धिः पाण्डवेषु मिथ्यावृत्तिः सदा भवान् ।
कथं ते नापराधोऽस्ति पाण्डवेषु महात्मसु ॥ ५६५ ॥
यच्चैभ्यो याचमानेभ्यः पित्र्यमंशं न दित्ससि ।
तच्च पाप प्रदाताऽसि भ्रष्टैश्वर्यो निपातितः ॥ ५६६ ॥
मातापितृभ्यां भीष्मेण द्रोणेन विदुरेण च ।
शाम्येति मुहुरुक्तोऽसि न च शाम्यसि पार्थिव ॥ ५६७ ॥
एवं ब्रुवति दाशार्हे दुर्योधनममर्षणम् ।
दुःशासन इदं वाक्यमब्रवीत्कुरुसंसदि ॥ ५६८ ॥
न चेत्सन्धास्यसे राजन्स्वेन कामेन पाण्डवैः ।
बद्ध्वा किल त्वां दास्यन्ति कुन्तीपुत्राय कौरवाः ॥ ५६९ ॥
भ्रातुरेतद्वचः श्रुत्वा धार्तराष्ट्रः सुयोधनः ।
क्रुद्धः प्रातिष्ठतोत्थाय महानाग इव श्वसन् ॥ ५७० ॥
अशिष्टवदमर्यादो मानी मान्यावमानिता ।
तं प्रस्थितमभिप्रेक्ष्य भ्रातरो मनुजर्षभम् ॥ ५७१ ॥

अनुजग्मुः सहामात्या राजानश्चापि सर्वशः।
सभायामुत्थितं क्रुद्धं प्रस्थितं भ्रातृभिः सह ॥ ५७२ ॥
दुर्योधनमभिप्रेक्ष्य भीष्मः शान्तनवोऽब्रवीत्।
कालपक्वमिदं मन्ये सर्वं क्षत्रं जनार्दन ॥ ५७३ ॥
सर्वे ह्यनुसृता मोहात्पार्थिवाः सह मन्त्रिभिः।
भीष्मस्याथ वचः श्रुत्वा दाशार्हः पुष्करेक्षणः ॥ ५७४ ॥
भीष्मद्रोणमुखान्सर्वानभ्यभाषत वीर्यवान्।
कंसमेकं परित्यज्य कुलार्थे सर्वयादवाः ॥ ५७५ ॥
संभूय सुखमेधन्ते भारतान्धकवृष्णयः।
व्यूढे देवासुरे युद्धेऽभ्युद्यतेष्वायुधेषु च ॥ ५७६ ॥
अस्मिन्युद्धे सुसंक्रुद्धा हनिष्यन्ति परस्परम् ॥ ५७७ ॥
इति मत्वाऽब्रवीद्धर्मं परमेष्ठी प्रजापतिः।
वरुणाय प्रयच्छैतान्बद्ध्वा दैतेयदानवान् ॥ ५७८ ॥
एवमुक्तस्ततो धर्मो नियोगात्परमेष्ठिनः।
वरुणाय ददौ सर्वान्बद्ध्वा दैतेयदानवान् ॥ ५७९ ॥
तथा दुर्योधनं कर्णं शकुनिं चापि सौबलम्।
बद्ध्वा दुःशासनं चापि पाण्डवेभ्यः प्रयच्छथ ॥ ५८० ॥
राजन्दुर्योधनं बद्ध्वा ततः संशाम्य पाण्डवैः।
त्वत्कृते न विनश्येयुः क्षत्रियाः क्षत्रियर्षभ ॥ ५८१ ॥
(अ.१२९) कृष्णस्य तु वचः श्रुत्वा धृतराष्ट्रो जनेश्वरः।
विदुरं सर्वधर्मज्ञं त्वरमाणोऽभ्यभाषत ॥ ५८२ ॥
गच्छ तात महाप्राज्ञां गान्धारीं दीर्घदर्शिनीम्।
आनयेह तया सार्धमनुनेष्यामि दुर्मतिम् ॥ ५८३ ॥
राज्ञस्तु वचनं श्रुत्वा विदुरो दीर्घदर्शिनीम्।
आनयामास गान्धारीं धृतराष्ट्रस्य शासनात् ॥ ५८४ ॥

शासनाद्धृतराष्ट्रस्य दुर्योधनममर्षणम्।
मातुश्च वचनात्क्षत्ता सभां प्रावेशयत्पुनः ॥ ५८५ ॥
तं प्रविष्टमभिप्रेक्ष्य पुत्रमुत्पथमास्थितम्।
विगर्हमाणा गान्धारी शमार्थं वाक्यमब्रवीत् ॥ ५८६ ॥
दुर्योधन यदाह त्वां पिता भरतसत्तम।
भीष्मो द्रोणः कृपः क्षत्ता सुहृदां कुरु तद्वचः ॥ ५८७ ॥
न हि राज्यं महाप्राज्ञ स्वेन कामेन शक्यते।
अवाप्तुं रक्षितुं वापि भोक्तुं भरतसत्तम ॥ ५८८ ॥
न ह्यवश्येन्द्रियो राज्यमश्नीयाद्दीर्घमन्तरम्।
विजितात्मा तु मेधावी स राज्यमभिपालयेत् ॥ ५८९ ॥
कामक्रोधौ हि पुरुषमर्थेभ्यो व्यपकर्षतः।
तौ तु शत्रू विनिर्जित्य राजा विजयते महीम् ॥ ५९० ॥
प्रपद्यस्व महाबाहुं कृष्णमक्लिष्टकारिणम्।
प्रसन्नो हि सुखाय स्यादुभयोरेव केशवः ॥ ५९१ ॥
न युद्धे तात कल्याणं न धर्मार्थौ कुतः सुखम्।
न चापि विजयो नित्यं मा युद्धे चेत आधिथाः ॥ ५९२ ॥
प्रयच्छ पाण्डुपुत्राणां यथोचितमरिन्दम।
यदीच्छसि सहामात्यो भोक्तुमर्धं प्रदीयताम् ॥ ५९३ ॥
अमर्षवशमापन्नो मा कुरूंस्तात जीघनः।
एषा हि पृथिवी कृत्स्ना मागमत्त्वत्कृते वधम् ॥ ५९४ ॥
यच्च त्वं मन्यसे मूढ भीष्मद्रोणकृपादयः।
योत्स्यन्ते सर्वशक्त्येति नैतदद्योपपद्यते ॥ ५९५ ॥
समं हि राज्यं प्रीतिश्च स्थानं हि विदितात्मनाम्।
पाण्डवेष्वथ युष्मासु धर्मस्त्वभ्यधिकस्ततः ॥ ५९६ ॥
राजपिण्डभयादेते यदि हास्यन्ति जीवितम्।
न हि शक्ष्यन्ति राजानं युधिष्ठिरमुदीक्षितुम् ॥ ५९७ ॥

न लोभादर्थसम्पत्तिर्नराणामिह दृश्यते।
तदलं तात लोभेन प्रशाम्य भरतर्षभ ॥ ५९८ ॥
(अ.१४९) एवमुक्ते तु गान्धार्यां धृतराष्ट्रो जनेश्वरः।
दुर्योधनमुवाचेदं राजमध्ये जनाधिप ॥ ५९९ ॥
दुर्योधन निबोधेदं यत्त्वां वक्ष्यामि पुत्रक।
तथा तत्कुरु भद्रं ते यद्यस्ति पितृगौरवम् ॥ ६०० ॥
प्रतीपः पृथिवीपालस्त्रिषु लोकेषु विश्रुतः।
तस्य पार्थिवसिंहस्य राज्यं धर्मेण शासतः ॥ ६०१ ॥
त्रयः प्रजज्ञिरे पुत्रा देवकल्पा यशस्विनः।
देवापिरभवच्छ्रेष्ठो बाह्लीकस्तदनन्तरम् ॥ ६०२ ॥
तृतीयः शान्तनुस्तात धृतिमान्मे पितामहः।
देवापिस्तु महातेजास्त्वग्दोषी राजसत्तमः ॥ ६०३ ॥
अथ कालस्य पर्याये वृद्धो नृपतिसत्तमः।
सम्भारानभिषेकार्थं कारयामास शास्त्रतः ॥ ६०४ ॥
तं ब्राह्मणाश्च वृद्धाश्च पौरजानपदैः सह।
सर्वे निवारयामासुर्देवापेरभिषेचनम् ॥ ६०५ ॥
एवं वदान्यो धर्मज्ञः सत्यसन्धश्च सोऽभवत्।
प्रियः प्रजानामपि संस्त्वग्दोषेण प्रदूषितः ॥ ६०६ ॥
हीनाङ्गं पृथिवीपालं नाभिनन्दन्ति देवताः।
इति कृत्वा नृपश्रेष्ठं प्रत्यषेधन्द्विजर्षभाः ॥ ६०७ ॥
तथैवाहं मतिमता परिचिन्त्येह पाण्डुना।
ज्येष्ठः प्रभ्रंशितो राज्याद्धीनाङ्ग इति भारत ॥ ६०८ ॥
पाण्डुस्तु राज्यं सम्प्राप्तः कनीयानपि सन्नृप।
विनाशे तस्य पुत्राणामिदं राज्यमरिन्दम ॥ ६०९ ॥
मय्यभागिनि राज्याय कथं त्वं राज्यमिच्छसि।
अराजपुत्रो ह्यस्वामी परस्वं हर्तुमिच्छसि ॥ ६१० ॥

प्रयच्छ राज्यार्धमपेतमोहः
सवाहनं त्वं सपरिच्छदं च।
ततोऽवशेषं तव जीवितस्य
सहानुजस्यैव भवेन्नरेन्द्र ॥ ६११ ॥

(अ.१३०) ततः सभाया निर्गम्य मन्त्रयामास कौरवः।
सौबलेन मताक्षेण राज्ञा शकुनिना सह ॥ ६१२ ॥
दुर्योधनस्य कर्णस्य शकुनेः सौबलस्य च।
दुःशासनचतुर्थानामिदमासीद्विचेष्टितम् ॥ ६१३ ॥
पुराऽयमस्मान्गृह्णाति क्षिप्रकारी जनार्दनः।
वयमेव हृषीकेशं निगृह्णीम बलादिव ॥ ६१४ ॥
श्रुत्वा गृहीतं वार्ष्णेयं पाण्डवा हतचेतसः।
निरुत्साहा भविष्यन्ति भग्नदंष्ट्रा इवोरगाः ॥ ६१५ ॥
तेषां पापमभिप्रायं पापानां दुष्टचेतसाम्।
इङ्गितज्ञः कविः क्षिप्रमन्वबुध्यत सात्यकिः ॥ ६१६ ॥
अब्रवीत्कृतवर्माणं क्षिप्रं योजय वाहिनीम्।
व्यूढानीकः सभाद्वारमुपतिष्ठस्व दंशितः ॥ ६१७ ॥
यावदाख्याम्यहं चैतत्कृष्णायाक्लिष्टकारिणे।
स प्रविश्य सभां वीर सिंहो गिरिगुहामिव ॥ ६१८ ॥
आचष्ट तमभिप्रायं केशवाय महात्मने।
धृतराष्ट्रं ततश्चैव विदुरं चान्वभाषत ॥ ६१९ ॥
इमं हि पुण्डरीकाक्षं जिघृक्षन्त्यल्पचेतसः।
पटेनाग्निं प्रज्वलितं यथा बाला यथा जडाः ॥ ६२० ॥
एतच्छ्रुत्वा तु विदुरं धृतराष्ट्रोऽभ्यभाषत।
क्षिप्रमानय तं पापं राज्यलुब्धं सुयोधनम् ॥ ६२१ ॥
ततो दुर्योधनं क्षत्ता पुनः प्रावेशयत्सभाम्।
अथ दुर्योधनं राजा धृतराष्ट्रोऽभ्यभाषत ॥ ६२२ ॥

नृशंस पापभूयिष्ठ क्षुद्रकर्मसहायवान्।
त्वमिमं पुण्डरीकाक्षमप्रधृष्यं दुरासदम् ॥ ६२३ ॥

पापैः सहायैः संहत्य निग्रहीतुं किलेच्छसि।
दुर्ग्राह्यः पाणिना वायुर्दुस्पर्शः पाणिना शशी ॥ ६२४ ॥

दुर्धरा पृथिवी मूर्ध्ना दुर्ग्राह्यः केशवो बलात्।
इत्युक्ते धृतराष्ट्रेण क्षत्ताऽपि विदुरोऽब्रवीत् ॥ ६२५ ॥

दुर्योधन निबोधेदं वचनं मम साम्प्रतम्।
आशीविषमिव क्रुद्धं तेजोराशिमनिन्दितम् ॥ ६२६ ॥

प्रधर्षयन्महाबाहुं कृष्णमक्लिष्टकारिणम्।
पतङ्गोऽग्निमिवासाद्य सामात्यो न भविष्यसि ॥ ६२७ ॥

(अ.१३१) धृतराष्ट्रो महाराजः पुनरेवाऽभ्यभाषत।
यावद्बलं मे पुत्रेषु पश्यतस्ते जनार्दन ॥ ६२८ ॥

प्रत्यक्षं ते न ते किञ्चित्परोक्षं शत्रुकर्शन।
कुरूणां शममिच्छन्तं यतमानं च केशव ॥ ६२९ ॥

विदित्वैतामवस्थां मे नाभिशङ्कितुमर्हसि।
ततोऽब्रवीन्महाबाहुर्धृतराष्ट्रं जनार्दनः ॥ ६३० ॥

द्रोणं पितामहं भीष्मं क्षत्तारं बाह्लिकं कृपम्।
प्रत्यक्षमेतद्भवतां यद्वृत्तं कुरुसंसदि ॥ ६३१ ॥

यथा चाशिष्टवन्मन्दो रोषादद्य समुत्थितः।
वदत्यनीशमात्मानं धृतराष्ट्रो महीपतिः ॥ ६३२ ॥

आपृच्छे भवतः सर्वान्गमिष्यामि युधिष्ठिरम्।
ततो रथेन शुभ्रेण महता किङ्किणीकिना।
कुरूणां पश्यतां द्रष्टुं स्वसारं स पितुर्ययौ ॥ ६३३ ॥

## विदुलापुत्रानुशासनम्

(अ.१३२) प्रविश्याथ गृहं तस्याश्चरणावभिवाद्य च।
आचख्यौ तत्समासेन यद्वृत्तं कुरुसंसदि ॥ ६३४ ॥

वासुदेव– कालपक्वमिदं सर्वं सुयोधनवशानुगम्।
आपृच्छे भवतीं शीघ्रं प्रयास्ये पाण्डवान्प्रति ॥ ६३५ ॥
किं वाच्याः पाण्डवेयास्ते भवत्या वचनान्मया।
तद्ब्रूहि त्वं महाप्राज्ञे शुश्रूषे वचनं तव ॥ ६३६ ॥

कुन्ती– ब्रूयाः केशव राजानं धर्मात्मानं युधिष्ठिरम्।
भूयांस्ते हीयते धर्मो मा पुत्रक वृथा कृथाः ॥ ६३७ ॥
श्रोत्रियस्येव ते राजन्मन्दकस्याविपश्चितः।
अनुवाकहता बुद्धिर्धर्ममेवैकमीक्षते ॥ ६३८ ॥
अङ्गावेक्षस्व धर्मं त्वं यथा सृष्टः स्वयंभुवा।
बाहुभ्यां क्षत्रियाः सृष्टा बाहुवीर्योपजीविनः ॥ ६३९ ॥
क्रूराय कर्मणे नित्यं प्रजानां परिपालने।
यं हि धर्मं चरन्तीह प्रजा राज्ञा सुरक्षिताः ॥ ६४० ॥
चतुर्थं तस्य धर्मस्य राजा विन्देत भारत।
दण्डनीत्यां यदा राजा सम्यक्कार्त्स्न्येन वर्तते ॥ ६४१ ॥
तदा कृतयुगं नाम कालः श्रेष्ठः प्रवर्तते।
कालो वा कारणं राज्ञो राजा वा कालकारणम् ॥ ६४२ ॥
इति ते संशयो मा भूद्राजा कालस्य कारणम्।
राजधर्मानवेक्षस्व पितृपैतामहोचितान् ॥ ६४३ ॥
नैतद्राजर्षिवृत्तं हि यत्र त्वं स्थातुमिच्छसि।
ब्राह्मणः प्रचरेद्भैक्ष्यं क्षत्रियः परिपालयेत् ॥ ६४४ ॥
वैश्यो धनार्जनं कुर्याच्छूद्रः परिचरेच्च तान्।
भैक्षं विप्रतिषिद्धं ते कृषिर्नैवोपपद्यते ॥ ६४५ ॥

क्षत्रियोऽसि क्षतात्त्राता बाहुवीर्योपजीविता।
पित्र्यमंशं महाबाहो निमग्नं पुनरुद्धर ॥ ६४६ ॥

साम्ना भेदेन दानेन दण्डेनाथ नयेन वा।
इतो दुःखतरं किं नु यदहं हीनबान्धवा ॥ ६४७ ॥

पर्यपिण्डमुदीक्षे यै त्वां सूत्वाऽमित्रनन्दन।
युद्ध्यस्व राजधर्मेण मा निमज्जीः पितामहान्।
मा गमः क्षीणपुण्यस्त्वं सानुजः पापिकां गतिम् ॥ ६४८ ॥

(अ.१३३) अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
विदुलायाश्च संवादं पुत्रस्य च परन्तप ॥ ६४९ ॥

विदुला नाम राजन्या जगर्हे पुत्रमौरसम्।
निर्जितं सिन्धुराजेन शयानं दीनचेतसम् ॥ ६५० ॥

विदुला– अनन्दन मया जात द्विषतां हर्षवर्धन।
न मया त्वं न पित्रा च जातः क्वाभ्यागतो ह्यसि ॥ ६५१ ॥

त्वमेवं प्रेतवच्छेषे कस्माद्वज्रहतो यथा।
उत्तिष्ठ हे कापुरुष मा स्वाप्सीः शत्रुनिर्जितः ॥ ६५२ ॥

माऽस्तंगमस्त्वं कृपणो विश्रूयस्व स्वकर्मणा।
अलातं तिन्दुकस्येव मुहूर्तमपि हि ज्वल ॥ ६५३ ॥

मा तुषाग्निरिवानर्चिर्धूमायस्व जिजीविषुः।
मुहूर्तं ज्वलितं श्रेयो न च धूमायितं चिरम् ॥ ६५४ ॥

यस्य वृत्तं न जल्पन्ति मानवा महदद्भुतम्।
राशिवर्धनमात्रं स नैव स्त्री न पुनः पुमान् ६५५ ॥

दाने तपसि सत्ये च यस्य नोच्चरितं यशः।
विद्यायामर्थलाभे वा मातुरुच्चार एव सः ॥ ६५६ ॥

एतावानेव पुरुषो यदमर्षी यदक्षमी।
क्षमावान्निरमर्षश्च नैव स्त्री न पुनः पुमान् ॥ ६५७ ॥

सन्तोषो वै श्रियं हन्ति तथाऽनुक्रोश एव च।
अनुत्थानभये चोभे निरीहो नाश्नुते महत्॥ ६५८॥
आयसं हृदयं कृत्वा मृगयस्व पुनः स्वकम्।
परं विषहते यस्मात्तस्मात्पुरुष उच्यते॥ ६५९॥
स्वबाहुबलमाश्रित्य योऽभ्युज्जीवति मानवः।
स लोके लभते कीर्तिं परत्र च शुभां गतिम्॥ ६६०॥
(अ.१३४) इन्द्रो वृत्रवधेनैव महेन्द्रः समपद्यत।
माहेन्द्रं च गृहं लेभे लोकानां चेश्वरोऽभवत्॥ ६६१॥
नाम विश्राव्य वै सङ्ख्ये शत्रूनाहूय दंशितान्।
सेनाग्रं चापि विद्राव्य हत्वा वा पुरुषं वरम्॥ ६६२॥
यदैव लभते वीरः सुयुद्धेन महद्यशः।
*तदैव प्रव्यथन्तेऽस्य शत्रवो विनमन्ति च॥ ६६३॥*
जहि शत्रून्रणे राजन्स्वधर्ममनुपालय।
पूर्वैः पूर्वतरैः प्रोक्तं परैः परतरैरपि॥ ६६४॥
यो वै कश्चिदिहाजातः क्षत्रियः क्षत्रकर्मवित्।
भयाद्वृत्तिसमीक्षो वा न नमेदिह कस्यचित्॥ ६६५॥
(अ.१३५) पुत्र नात्माऽवमन्तव्यः पूर्वाभिरसमृद्धिभिः।
अभूत्वा हि भवन्त्यर्था भूत्वा नश्यन्ति चापरे॥ ६६६॥
उत्थातव्यं जागृतव्यं योक्तव्यं भूतिकर्मसु।
भविष्यतीत्येव मनः कृत्वा सततमव्यथैः॥ ६६७॥
(अ.१३६) सदश्व इव स क्षिप्तः प्रणुन्नो वाक्यसायकैः।
तच्चकार तथा सर्वं यथावदनुशासनम्॥ ६६८॥
(अ.१३७) एतद्धनञ्जयो वाच्यो नित्योद्युक्तो वृकोदरः।
यदर्थं क्षत्रिया सूते तस्य कालोऽयमागतः॥ ६६९॥
सर्वधर्मविशेषज्ञां स्नुषां पाण्डोर्महात्मनः।
ब्रूया माधव कल्याणीं कृष्ण कृष्णां यशस्विनीम्॥ ६७०॥

युक्तमेतन्महाभागे कुले जाते यशस्विनि।
यन्मे पुत्रेषु सर्वेषु यथावत्त्वमवर्तिथाः ॥ ६७१ ॥
माद्रीपुत्रौ च वक्तव्यौ क्षत्रधर्मरतावुभौ।
विक्रमेणार्जितान्भोगान्वृणीतं जीवितादपि ॥ ६७२ ॥
विक्रमाधिगता ह्यर्थाः क्षत्रधर्मेण जीवतः।
मनो मनुष्यस्य सदा प्रीणन्ति पुरुषोत्तम ॥ ६७३ ॥
न राज्यहरणं दुःखं द्यूते चापि पराजयः।
प्रव्राजनं सुतानां वा न मे तद्दुःखकारणम् ॥ ६७४ ॥
यत्र सा बृहती श्यामा सभायां रुदती तदा।
अश्रौषीत्परुषा वाचस्तन्मे दुःखतरं महत् ॥ ६७५ ॥
दुःशासनश्च यद्भीमं कटुकान्यभ्यभाषत।
पश्यतां कुरुवीराणां तच्च संस्मारयेः पुनः ॥ ६७६ ॥
पाण्डवान्कुशलं पृच्छेः सपुत्रान्कृष्णया सह।
मां च कुशलिनीं ब्रूयास्तेषु भूयो जनार्दन ॥ ६७७ ॥
अरिष्टं गच्छ पन्थानं पुत्रान्मे प्रतिपालय।
अभिवाद्याथ तां कृष्णः कृत्वा चापि प्रदक्षिणम् ॥ ६७८ ॥
निश्चक्राम महाबाहुः सिंहखेलगतिस्ततः।
आरोप्याथ रथे कर्णं प्रायात्सात्यकिना सह।
मन्त्रयामास च तदा कर्णेन सुचिरं सह ॥ ६७९ ॥

## कर्णोपनिवादः

वासु- उपासितास्ते राधेय ब्राह्मणा वेदपारगाः।
(अ.१४०) तत्त्वार्थं परिपृष्टाश्च नियतेनानसूयया ॥ ६८० ॥
त्वमेव कर्ण जानासि वेदवादान्सनातनान्।
त्वमेव धर्मशास्त्रेषु सूक्ष्मेषु परिनिष्ठितः ॥ ६८१ ॥

कानीनश्च सहोढश्च कन्यायां यश्च जायते।
वोढारं पितरं तस्य प्राहुः शास्त्रविदो जनाः ॥ ६८२ ॥
सोऽसि कर्ण तथा जातः पाण्डोः पुत्रोऽसि धर्मतः।
निग्रहाद्धर्मशास्त्राणामेहि राजा भविष्यसि ॥ ६८३ ॥
पितृपक्षे च ते पार्था मातृपक्षे च वृष्णयः।
द्वौ पक्षावभिजानीहि त्वमेतौ पुरुषर्षभ ॥ ६८४ ॥
मया सार्धमितो यातमद्य त्वां तात पाण्डवाः।
अभिजानन्तु कौन्तेयं पूर्वजातं युधिष्ठिरात् ॥ ६८५ ॥
पादौ तव ग्रहीष्यन्ति भ्रातरः पञ्च पाण्डवाः।
द्रौपदेयास्तथा पञ्च सौभद्रश्चापराजितः ॥ ६८६ ॥
षष्ठे त्वां च तथा काले द्रौपद्युपगमिष्यति।
अहं च त्वाऽभिषेक्ष्यामि राजानं पृथिवीपतिम् ॥ ६८७ ॥
युवराजोऽस्तु ते राजा धर्मपुत्रो युधिष्ठिरः।
स त्वं परिवृतः पार्थैर्नक्षत्रैरिव चन्द्रमाः ॥ ६८८ ॥
प्रशाधि राज्यं कौन्तेय कुन्तीं च प्रतिनन्दय।
मित्राणि ते प्रहृष्यन्तु व्यथन्तु रिपवस्तथा।
सौभ्रात्रं चापि तेऽद्यास्तु भ्रातृभिः सह पाण्डवैः ॥ ६८९ ॥

कर्ण– असंशयं सौहृदान्मे प्रणयाच्चात्थ केशव।
(अ.१४१) सख्येन चैव वार्ष्णेय श्रेयस्कामतयैव च ॥ ६९० ॥
सर्वं चैवाभिजानामि पाण्डोः पुत्रोऽस्मि धर्मतः।
निग्रहाद्धर्मशास्त्राणां यथा त्वं कृष्ण मन्यसे ॥ ६९१ ॥
कन्या गर्भं समाधत्त भास्करान्मां जनार्दन।
आदित्यवचनाच्चैव जातं मां सा व्यसर्जयत् ॥ ६९२ ॥
सूतो हि मामधिरथो दृष्ट्वैवाभ्यानयद्गृहान्।
राधायाश्चैव मां प्रादात्सौहार्दान्मधुसूदन ॥ ६९३ ॥

मत्स्नेहाच्चैव राधायां सद्य क्षीरमवातरत्।
सा मे मूत्रं पुरीषं च प्रतिजग्राह माधव ॥ ६९४ ॥
तस्याः पिण्डव्यपनयं कुर्यादस्मद्विध कथम्।
धर्मविद्धर्मशास्त्राणां श्रवणे सततं रत ॥ ६९५ ॥
तथा माममिजानाति सूतश्चाधिरथ सुतम्।
पितरं चाभिजानामि तमहं सौहृदात्सदा ॥ ६९६ ॥
स हि मे जातकर्मादि कारयामास माधव।
शास्त्रदृष्टेन विधिना पुत्रप्रीत्या जनार्दन ॥ ६९७ ॥
नाम मे वसुषेणेति कारयामास वै द्विजै।
भार्याश्चोढा मम प्राप्ते यौवने तत्परिग्रहात् ॥ ६९८ ॥
तासु पुत्राश्च पौत्राश्च मम जाता जनार्दन।
तासु मे हृदयं कृष्ण सञ्जातं कामबन्धनम् ॥ ६९९ ॥
न पृथिव्या सकलया न सुवर्णस्य राशिभि ।
हर्षाद्भयाद्वा गोविन्द मिथ्या कर्तुं तदुत्सहे ॥ ७०० ॥
धृतराष्ट्रकुले कृष्ण दुर्योधनसमाश्रयात्।
मया त्रयोदशसमा भुक्तं राज्यमकण्टकम् ॥ ७०१ ॥
मां च कृष्ण समासाद्य कृत शस्त्रसमुद्यम।
दुर्योधनेन वार्ष्णेय विग्रहश्चापि पाण्डवै ॥ ७०२ ॥
वधाद्बन्धाद्भयाद्वाऽपि लोभाद्वाऽपि जनार्दन।
अनृतं नोत्सहे कर्तुं धार्तराष्ट्रस्य धीमत ॥ ७०३ ॥
असंशयं हितार्थाय ब्रूयास्त्वं मधुसूदन।
सर्वं च पाण्डवा कुर्युस्त्वद्वशित्वान्न संशय ॥ ७०४ ॥
मन्त्रस्य नियमं कुर्यास्त्वमत्र मधुसूदन।
एतदत्र हितं मन्ये सर्वयादवनन्दन ॥ ७०५ ॥
यदि जानाति मां राजा धर्मात्मा संयतेन्द्रिय ।
कुन्त्या प्रथमजं पुत्रं न स राज्यं ग्रहीष्यति ॥ ७०६ ॥

प्राप्य चापि महद्राज्यं तदहं मधुसूदन।
स्फीतं दुर्योधनायैव सम्प्रदद्यामरिन्दम ॥ ७०७ ॥
यद्बुधमहं कृष्ण कटुकानि स्म पाण्डवान्।
प्रियार्थं धार्तराष्ट्रस्य तेन तप्ये ह्यकर्मणा ॥ ७०८ ॥
समुपानय कौन्तेयं युद्धाय मम केशव।
मन्त्रसंवरणं कुर्वन्नित्यमेव परन्तप ॥ ७०९ ॥

कृष्ण– उपस्थितविनाशेयं नूनमद्य वसुन्धरा।
(अ.१४३) यथा हि मे वचः कर्ण नोपैति हृदयं तव ॥ ७१० ॥
सर्वेषां तात भूतानां विनाशे प्रत्युपस्थिते।
अनयो नयसङ्काशो हृदयान्नापसर्पति ॥ ७११ ॥

कर्ण– अपि त्वां कृष्ण पश्याम जीवन्तोऽस्मान्महारणात्।
समुत्तीर्णा महाबाहो वीरक्षत्रविनाशनात् ॥ ७१२ ॥
अथवा सङ्गमः कृष्ण स्वर्गे नो भविता ध्रुवम्।
तत्रेदानीं समेष्यामः पुनः सार्धं त्वयाऽनघ ॥ ७१३ ॥
इत्युक्त्वा माधवं कर्णः परिष्वज्य च पीडितम्।
विसर्जितः केशवेन रथोपस्थादवातरत् ॥ ७१४ ॥
ततः शीघ्रतरं प्रायात्केशवः सहसात्यकिः।
पुनरुच्चारयन्वाणीं याहि याहीति सारथिम् ॥ ७१५ ॥

(अ.१४४) असिद्धानुनये कृष्णे कुरुभ्यः पाण्डवान्गते।
अभिगम्य पृथां क्षत्ता शनैः शोचन्निवाब्रवीत् ॥ ७१६ ॥
असाम्ना केशवे याते समुद्योक्ष्यन्ति पाण्डवाः।
ततः कुरूणामनयो भविता वीरनाशनः ॥ ७१७ ॥
चिन्तयन्न लभे निद्रामहःसु च निशासु च।
श्रुत्वा नु कुन्ती तद्वाक्यमर्थकामेन भाषितम् ॥ ७१८ ॥
सा निःश्वसन्ती दुःखार्ता मनसा विममर्श ह।
नाचार्यः कामवाञ्छिष्यैर्द्रोणो युध्येत जातुचित् ॥ ७१९ ॥

पाण्डवेषु कथं हार्दं कुर्याश्च च पितामहः।
अयं त्वेको वृथादृष्टिर्धार्तराष्ट्रस्य दुर्मतेः ॥ ७२० ॥
मोहानुवर्ती सततं पापो द्वेष्टि च पाण्डवान्।
महत्यनर्थे निर्वन्धी वलवांश्च विशेषतः ॥ ७२१ ॥
कर्णः सदा पाण्डवानां तन्मे दहति सम्प्रति।
आशंसे त्वद्य कर्णस्य मनोऽहं पाण्डवान्प्रति ॥ ७२२ ॥
प्रसादयितुमासाद्य दर्शयन्ती यथातथम्।
इति कुन्ती विनिश्चित्य कार्यनिश्चयमुत्तमम् ॥ ७२३ ॥
कार्यार्थमभिनिश्चित्य ययौ भागीरथीं प्रति।
आत्मजस्य ततस्तस्य घृणिनः सत्यसङ्गिनः ॥ ७२४ ॥
प्राङ्मुखस्योर्ध्ववाहोः सा पर्यतिष्ठत पृष्ठतः।
जप्यावसानं कार्यार्थं प्रतीक्षन्ती तपस्विनी ॥ ७२५ ॥
आपृष्ठतापाज्जप्त्वा स परिवृत्य यतव्रतः।
दृष्ट्वा कुन्तीमुपातिष्ठदभिवाद्य कृताञ्जलिः ॥ ७२६ ॥
यथान्यायं महातेजा मानी धर्मभृतां वरः।
उत्स्मयन्प्रणतः प्राह कुन्तीं वैकर्तनो वृषः ॥ ७२७ ॥
(अ.१४५) राधेयोऽहमाधिरथिः कर्णस्त्वामभिवादये।
प्राप्ता किमर्थं भवती ब्रूहि किं करवाणि ते ॥ ७२८ ॥
कुन्ती- कौन्तेयस्त्वं न राधेयो न तवाधिरथः पिता।
नासि सूतकुले जातः कर्ण तद्विद्धि मे वचः ॥ ७२९ ॥
कानीनस्त्वं मया जातः पूर्वजः कुक्षिणा धृतः।
कुन्तिराजस्य भवने पार्थस्त्वमसि पुत्रक ॥ ७३० ॥
प्रकाशकर्मा तपनो योऽयं देवो विरोचनः।
अजीजनत्त्वां मय्येष कर्ण शस्त्रभृतां वरम् ॥ ७३१ ॥
स त्वं भ्रातृनसम्बुध्य मोहाद्यदुपसेवसे।
धार्तराष्ट्रान्न तद्युक्तं त्वयि पुत्र विशेषतः ॥ ७३२ ॥

एतद्धर्मफलं पुत्र नराणां धर्मनिश्चये।
यत्पश्यन्त्यस्य पितरो माता चाप्येकदर्शिनी ॥ ७३३ ॥
कर्णार्जुनौ वै भवेतां यथा रामजनार्दनौ।
असाध्यं किं नु लोके स्याद्युवयोः संहितात्मनोः ॥ ७३४ ॥
उपपन्नो गुणैः सर्वैर्ज्येष्ठः श्रेष्ठेषु बन्धुषु।
सूतपुत्रेति मा शब्दः पार्थस्त्वमसि वीर्यवान् ॥ ७३५ ॥
कर्ण– अकरोन्मयि यत्पापं भवती सुमहात्ययम्।
(अ.१४६) अपाकीर्णोऽस्मि यन्मातस्तद्यशःकीर्तिनाशनम् ॥ ७३६ ॥
अहं चेत्क्षत्रियो जातो न प्राप्तः क्षत्रसत्क्रियाम्।
त्वत्कृते किं नु पापीयः शत्रुः कुर्यान्ममाहितम् ॥ ७३७ ॥
क्रियाकाले त्वनुक्रोशमकृत्वा त्वमिमं मम।
हीनसंस्कारसमयमद्य मां समचूचुदः ॥ ७३८ ॥
न वै मम हितं पूर्वं मातृवच्चेष्टितं त्वया।
सा मां सम्बोधयस्यद्य केवलात्महितैषिणी ॥ ७३९ ॥
सर्वकामैः संविभक्तः पूजितश्च यथासुखम्।
अहं वै धार्तराष्ट्राणां कुर्यां तदफलं कथम् ॥ ७४० ॥
धृतराष्ट्रस्य पुत्राणामर्थे योत्स्यामि ते सुतैः।
बलं च शक्तिं चास्थाय न वै त्वय्यनृतं वदे ॥ ७४१ ॥
आनृशंस्यमथो वृत्तं रक्षन्सत्पुरुषोचितम्।
अतोऽर्थकरमप्येतन्न करोम्यद्य ते वचः ॥ ७४२ ॥
न च तेऽयं समारम्भो मयि मोघो भविष्यति।
वध्यान्विषह्यान्सङ्ग्रामे न हनिष्यामि ते सुतान् ॥ ७४३ ॥
युधिष्ठिरं च भीमं च यमौ चैवार्जुनादृते।
न ते जातु न शिष्यन्ति पुत्राः पञ्च यशस्विनि ॥ ७४४ ॥
निरर्जुनाः सकर्णा वा सार्जुना वा हते मयि।
इति कर्णवचः श्रुत्वा कुन्ती दुःखात्प्रवेपती ॥ ७४५ ॥

उवाच पुत्रमाश्लिष्य कर्णं धैर्यादकम्पनम्।
त्वया चतुर्णां भ्रातॄणामभयं शत्रुकर्शन ॥ ७४६ ॥
दत्तं तत्प्रतिजानीहि सङ्गरप्रतिमोचनम्।
अनामयं स्वस्ति चेति पृथाऽथो कर्णमब्रवीत्।
तां कर्णोऽथ तथेत्युक्त्वा ततस्तौ जग्मतुः पृथक् ॥ ७४७ ॥

## कौरवपाण्डवसेनानिवेशः

(अ.१४७) आगम्य हास्तिनपुरादुपप्लव्यमरिन्दमः।
पाण्डवानां यथावृत्तं केशवः सर्वमुक्तवान् ॥ ७४८ ॥
मया नागपुरं गत्वा सभायां धृतराष्ट्रजः।
तथ्यं पथ्यं हितं चोक्तो न च गृह्णाति दुर्मतिः ॥ ७४९ ॥
(अ.१५०) दण्डं चतुर्थं पश्यामि तेषु पापेषु नान्यथा।
निर्याताश्च विनाशाय कुरुक्षेत्रं नराधिपाः ॥ ७५० ॥
न ते राज्यं प्रयच्छन्ति विना युद्धेन पाण्डव।
विनाशहेतवः सर्वे प्रत्युपस्थितमृत्यवः ॥ ७५१ ॥
(अ.१५१) युज्यतां वाहिनी साधु वधसाध्या हि मे मताः।
एवमुक्ते तु कृष्णेन सम्प्राहृष्यन्नरोत्तमाः ॥ ७५२ ॥
तेषां प्रहृष्टमनसां नादः समभवन्महान्।
योग इत्यथ सैन्यानां त्वरतां सम्प्रधावताम् ॥ ७५३ ॥
ततः शब्दः समभवत्समुद्रस्येव पर्वणि।
हृष्टानां संप्रयातानां घोषो दिवमिवास्पृशत् ॥ ७५४ ॥
प्रहृष्टा दंशिता योधाः परानीकविदारणाः।
तेषां मध्ये ययौ राजा कुन्तीपुत्रो युधिष्ठिरः ॥ ७५५
शकटापणवेशाश्च यानयुग्यं च सर्वशः।
कोशं यन्त्रायुधं चैव ये च वैद्याश्चिकित्सकाः ॥ ७५६ ॥

फल्गु यच्च बलं किञ्चिद्यच्चापि कृशदुर्बलम् ।
तत्सङ्गृह्य ययौ राजा ये चापि परिचारकाः ॥ ७५७ ॥
उपप्लव्ये तु पाञ्चाली द्रौपदी सत्यवादिनी ।
सह स्त्रीभिर्निववृते दासीदाससमावृता ॥ ७५८ ॥
कृत्वा मूलप्रतीकारं गुल्मैः स्थावरजङ्गमैः ।
स्कन्धावारेण महता प्रययुः पाण्डुनन्दनाः ॥ ७५९ ॥
आसाद्य तु कुरुक्षेत्रं व्यूढानीकाः प्रहारिणः ।
पाण्डवाः समदृश्यन्त नर्दन्तो वृषभा इव ॥ ७६० ॥
(अ.१५२) ततो देशे समे स्निग्धे प्रभूतयवसेन्धने ।
निवेशयामास तदा सेनां राजा युधिष्ठिरः ॥ ७६१ ॥
विद्राव्य शतशो गुल्मान्धार्तराष्ट्रस्य सैनिकान् ।
पर्यक्रामत्समन्ताच्च पार्थेन सह केशवः ॥ ७६२ ॥
शिबिरं मापयामास धृष्टद्युम्नश्च पार्षतः ।
आसाद्य सरितं पुण्यां कुरुक्षेत्रे हिरण्वतीम् ॥ ७६३ ॥
खानयामास परिखां केशवस्तत्र भारत ।
गुप्त्यर्थमपि चादिश्य बलं तत्र न्यवेशयत् ॥ ७६४ ॥
विधिर्यः शिबिरस्यासीत्पाण्डवानां महात्मनाम् ।
तद्विधानि नरेन्द्राणां कारयामास केशवः ॥ ७६५ ॥
प्रभूततरकाष्ठानि दुराधर्षतराणि च ।
भक्ष्यभोज्यान्नपानानि शतशोऽथ सहस्रशः ॥ ७६६ ॥
तत्रासञ्छिल्पिनः प्राज्ञाः शतशो दत्तवेतनाः ।
सर्वोपकरणैर्युक्ता वैद्याः शास्त्रविशारदाः ॥ ७६७ ॥
ज्याधनुर्वर्मशस्त्राणां तथैव मधुसर्पिषोः ।
ससर्जरसपांसूनां राशयः पर्वतोपमाः ॥ ७६८ ॥
बहूदकं सुयवसं तुषाङ्गारसमन्वितम् ।
शिबिरे शिबिरे राजा सञ्चकार युधिष्ठिरः ॥ ७६९ ॥

निर्विघ्नान्पाण्डवांस्तत्र ज्ञात्वा मित्राणि भारत।
अभिसस्रुर्यथादेशं सबलाः सहवाहनाः॥ ७७० ॥
(अ.१५३) प्रतियाते तु दाशार्हे राजा दुर्योधनस्तदा।
कर्णं दुःशासनं चैव शकुनिं चाब्रवीदिदम्॥ ७७१ ॥
अकृतेनैव कार्येण गतः पार्थानधोक्षजः।
स एनान्मन्युनाऽविष्टो ध्रुवं धक्ष्यत्यसंशयम्॥ ७७२ ॥
भविता विग्रहः सोऽयं तुमुलो लोमहर्षणः।
तस्मात्साङ्ग्रामिकं सर्वं कारयध्वमतन्द्रिताः॥ ७७३ ॥
शिबिराणि कुरुक्षेत्रे क्रियन्तां वसुधाधिपाः।
प्रयाणं घुष्यतामद्य श्वोभूत इति मा चिरम्॥ ७७४ ॥
(अ.१५५) व्युष्टायां वै रजन्यां हि राजा दुर्योधनस्ततः।
व्यभजत्तान्यनीकानि दश चैकं च भारत॥ ७७५ ॥
तत्र दुर्योधनो राजा शूरान्बुद्धिमतो नरान्।
प्रसमीक्ष्य महाबाहुश्चक्रे सेनापतींस्तदा॥ ७७६ ॥
कृपं द्रोणं च शल्यं च सैन्धवं च जयद्रथम्।
सुदक्षिणं च काम्बोजं कृतवर्माणमेव च॥ ७७७ ॥
द्रोणपुत्रं च कर्णं च भूरिश्रवसमेव च।
शकुनिं सौबलं चैव बाल्हीकं च महाबलम्॥ ७७८ ॥
(अ.१५६) ततः शान्तनवं भीष्मं प्राञ्जलिर्धृतराष्ट्रजः।
सह सर्वैर्महीपालैरिदं वचनमब्रवीत्॥ ७७९ ॥
ऋते सेनाप्रणेतारं पृतना सुमहत्यपि।
दीर्यते युद्धमासाद्य पिपीलिकपुटं यथा॥ ७८० ॥
न हि जातु द्वयोर्बुद्धिः समा भवति कर्हिचित्।
शौर्यं च बलनेतॄणां स्पर्धते च परस्परम्॥ ७८१ ॥
श्रूयते च महाप्राज्ञ हैहयानमितौजसः।
अभ्ययुर्ब्राह्मणाः सर्वे समुच्छ्रितकुशध्वजाः॥ ७८२ ॥

तानभ्ययुस्तदा वैश्याः शूद्राश्चैव पितामह।
एकतस्तु त्रयो वर्णा एकतः क्षत्रियर्षभाः ॥ ७८३ ॥
ततो युद्धेष्वभज्यन्त त्रयो वर्णाः पुनः पुनः।
क्षत्रियाश्च जयन्त्येव बहुलं चैकतो बलम् ॥ ७८४ ॥
ततस्ते क्षत्रियानेव पप्रच्छुर्द्विजसत्तमाः।
तेभ्यः शशंसुर्धर्मज्ञा याथातथ्यं पितामह ॥ ७८५ ॥
वयमेकस्य शृण्वाना महाबुद्धिमतो रणे।
भवन्तस्तु पृथक्सर्वे स्वबुद्धिवशवर्तिनः ॥ ७८६ ॥
ततस्ते ब्राह्मणाश्चक्रुरेकं सेनापतिं द्विजम्।
नये सुकुशलं शूरमजयन्क्षत्रियांस्ततः ॥ ७८७ ॥
एवं ये कुशलं शूरं हितेप्सितमकल्मषम्।
सेनापतिं प्रकुर्वन्ति ते जयन्ति रणे रिपून् ॥ ७८८ ॥
भवानुशनसा तुल्यो हितैषी च सदा मम।
असंहार्यः स्थितो धर्मे स नः सेनापतिर्भव ॥ ७८९ ॥

भीष्म- एवमेतन्महाबाहो यथा वदसि भारत।
यथैव हि भवन्तो मे तथैव मम पाण्डवाः ॥ ७९० ॥
अपि चैव मया श्रेयो वाच्यं तेषां नराधिप।
संयोद्धव्यं तवार्थाय यथा मे समयः कृतः ॥ ७९१ ॥
न त्वेवोत्सादनीया मे पाण्डोः पुत्रा जनाधिप।
तस्माद्योधान्हनिष्यामि प्रयोगेणायुतं सदा ॥ ७९२ ॥
सेनापतिस्त्वहं राजन्समयेनापरेण ते।
भविष्यामि यथाकामं तन्मे श्रोतुमिहार्हसि ॥ ७९३ ॥
कर्णो वा युध्यतां पूर्वमहं वा पृथिवीपते।
स्पर्धते हि सदाऽत्यर्थं सूतपुत्रो मया रणे ॥ ७९४ ॥

कर्ण- नाहं जीवति गाङ्गेये राजन्योत्स्ये कथञ्चन।
हते भीष्मे तु योत्स्यामि सह गाण्डीवधन्वना ॥ ७९५ ॥

ततः सेनापतिं कृत्वा भीष्मं परबलार्दनम्।
स्कन्धावारेण महता कुरुक्षेत्रं जगाम ह ॥ ७९६ ॥
परिक्रम्य कुरुक्षेत्रं कर्णेन सह कौरवः।
शिबिरं मापयामास समे देशे जनाधिप ॥ ७९७ ॥
मधुरानूपरे देशे प्रभूतयवसेन्धने।
यथैव हास्तिनपुरं तद्वच्छिबिरमाबभौ ॥ ७९८ ॥
(अ.१५७) ततो द्रुपदमानाय्य विराटं शिनिपुङ्गवम्।
धृष्टद्युम्नं च पाञ्चाल्यं धृष्टकेतुं च पार्थिव ॥ ७९९ ॥
शिखण्डिनं च पाञ्चाल्यं सहदेवं च मागधम्।
एतान्सप्त महाभागान्वीरान्युद्धाभिकाङ्क्षिणः ॥ ८०० ॥
सेनाप्रणेतॄन्विधिवदभ्यषिञ्चद्युधिष्ठिरः।
सर्वसेनापतिं चात्र धृष्टद्युम्नं चकार ह ॥ ८०१ ॥
द्रोणान्तहेतोरुत्पन्नो य इद्धाज्जातवेदसः।
सर्वेषामेव तेषां तु समस्तानां महात्मनाम् ॥ ८०२ ॥
सेनापतिपतिं चक्रे गुडाकेशं धनञ्जयम्।
अर्जुनस्यापि नेता च संयन्ता चैव वाजिनाम् ॥ ८०३ ॥
सङ्कर्षणानुजः श्रीमान्महाबुद्धिर्जनार्दनः।
तद्दृष्ट्वोपस्थितं युद्धं समासन्नं महात्ययम् ॥ ८०४ ॥
प्राविशद्भवनं राजन्पाण्डवानां हलायुधः।
तं दृष्ट्वा धर्मराजश्च केशवश्च महाद्युतिः ॥ ८०५ ॥
उदतिष्ठत्ततः पार्थो भीमकर्मा वृकोदरः।
गाण्डीवधन्वा ये चान्ये राजानस्तत्र केचन ॥ ८०६ ॥
पूजयांचक्रिरे ते वै समायान्तं हलायुधम्।
ततस्तेषूपविष्टेषु पार्थिवेषु समन्ततः ॥ ८०७ ॥
वासुदेवमभिप्रेक्ष्य रौहिणेयोऽभ्यभाषत।
भविताऽयं महारौद्रो दारुणः पुरुषक्षयः ॥ ८०८ ॥

ध्रुवो जयः पाण्डवानामिति मे निश्चिता मतिः।
तथा ह्यभिनिवेशोऽस्य वासुदेवस्य भारत ॥ ८०९ ॥
उभौ शिष्यौ हि मे वीरौ गदायुद्धविशारदौ।
तुल्यस्नेहोऽस्म्यतो भीमे तथा दुर्योधने नृपे ॥ ८१० ॥
तस्माद्यास्यामि तीर्थानि सरस्वत्या निषेवितुम्।
न हि शक्ष्यामि कौरव्यान्नश्यमानानुपेक्षितुम् ॥ ८११ ॥
एवमुक्त्वा महाबाहुरनुज्ञातश्च पाण्डवैः।
तीर्थयात्रां ययौ रामो निवर्त्य मधुसूदनम् ॥ ८१२ ॥
(अ १५८) एतस्मिन्नेव काले तु भीष्मकस्य महात्मनः।
दाक्षिणात्यपतेः पुत्रो दिक्षु रुक्मीति विश्रुतः ॥ ८१३ ॥
स भोजराजः सैन्येन महता परिवारितः।
अक्षौहिण्या महावीर्यः पाण्डवान्क्षिप्रमागमत् ॥ ८१४ ॥
उवाच मध्ये वीराणां कुन्तीपुत्रं धनञ्जयम्।
सहायोऽस्मि स्थितो युद्धे यदि भीतोऽसि पाण्डव ॥ ८१५ ॥
हनिष्यामि रणे भागं यन्मे दास्यसि पाण्डव।
अथवा सर्व एवैते तिष्ठन्तु वसुधाधिपाः ॥ ८१६ ॥
निहत्य समरे शत्रूंस्तव दास्यामि मेदिनीम्।
इत्युक्तो धर्मराजस्य केशवस्य च संनिधौ ॥ ८१७ ॥
उवाच धीमान्कौन्तेयः प्रहस्य सखिपूर्वकम्।
कौरवाणां कुले जातः पाण्डोः पुत्रो विशेषतः ॥ ८१८ ॥
द्रोणं व्यपदिशञ्शिष्यो वासुदेवसहायवान्।
भीतोऽस्मीति कथं ब्रूयां दधानो गाण्डिवं धनुः ॥ ८१९ ॥
नास्मि भीतो महाबाहो सहायार्थश्च नास्ति मे।
यथाकामं यथायोगं गच्छ वाऽन्यत्र तिष्ठ वा ॥ ८२० ॥
विनिवर्त्य ततो रुक्मी सेनां सागरसंनिभाम्।
दुर्योधनमुपागच्छत्तथैव भरतर्षभ ॥ ८२१ ॥

तथैव चाभिगम्यैनमुवाच वसुधाधिपः।
प्रत्याख्यातश्च तेनापि स तदा शूरमानिना ॥ ८२२ ॥
द्वावेव तु महाराज तस्माद्युद्धादपेयतुः।
रौहिणेयश्च वार्ष्णेयो रुक्मी च वसुधाधिप ॥ ८२३ ॥
(अ १५९) तथा व्यूढेष्वनीकेषु यत्तेषु भरतर्षभ।
धृतराष्ट्रो महाराज सञ्जयं वाक्यमब्रवीत् ॥ ८२४ ॥
एहि सञ्जय सर्वं मे आचक्ष्वानवशेषतः।
सेनानिवेशे यद्वृत्तं कुरुपाण्डवसेनयोः ॥ ८२५ ॥
सञ्जय– प्रभातायां तु शर्वर्यां पुनरेव सुतस्तव।
(अ.१९३) मध्ये सर्वस्य सैन्यस्य पितामहमपृच्छत ॥ ८२६ ॥
पाण्डवेयस्य गाङ्गेय यदेतत्सैन्यमुद्यतम्।
लोकपालसमैर्गुप्तं धृष्टद्युम्नपुरोगमैः ॥ ८२७ ॥
केन कालेन गाङ्गेय क्षपयेथा महाद्युते।
एतदिच्छाम्यहं ज्ञातुं परं कौतूहलं हि मे ॥ ८२८ ॥
भीष्म– मुञ्चेयं यदि वाऽस्त्राणि महान्ति समरे स्थितः।
शतसाहस्रघातीनि हन्यां मासेन भारत ॥ ८२९ ॥
सञ्जय– श्रुत्वा भीष्मस्य तद्वाक्यं राजा दुर्योधनस्ततः।
पर्यपृच्छत राजेन्द्र द्रोणमङ्गिरसां वरम् ॥ ८३० ॥
आचार्य केन कालेन पाण्डुपुत्रस्य सैनिकान्।
निहन्या इति तं द्रोणः प्रत्युवाच हसन्निव ॥ ८३१ ॥
स्थविरोऽस्मि महाबाहो मन्दप्राणविचेष्टितः।
शस्त्राग्निना निर्दहेयं पाण्डवानामनीकिनीम् ॥ ८३२ ॥
यथा भीष्मः शान्तनवो मासेनेति मतिर्मम।
एषा मे परमा शक्तिरेतन्मे परमं बलम् ॥ ८३३ ॥
द्वाभ्यामेवतु मासाभ्यां कृपः शारद्वतोऽब्रवीत्।
द्रौणिस्तु दशरात्रेण प्रतिजज्ञे बलक्षयम् ॥ ८३४ ॥

कर्णस्तु पञ्चरात्रेण प्रतिजज्ञे महास्त्रवित्।
तच्छ्रुत्वा सूतपुत्रस्य वाक्यं सागरगासुतः ॥ ८३५ ॥
जहास सस्वनं हासं वाक्यं चेदमुवाच ह।
न हि यावद्रणे पार्थं बाणशङ्खधनुर्धरम् ॥ ८३६ ॥
वासुदेवसमायुक्तं रथेनायान्तमाहवे।
समागच्छसि राधेय तेनैवमभिमन्यसे।
शक्यमेवं च भूयश्च त्वया वक्तुं यथेष्टतः ॥ ८३७ ॥
(अ.१९५) पञ्चयोजनमुत्सृज्य मण्डलं तद्रणाजिरम्।
सेनानिवेशास्ते राजन्नाविशञ्छतसङ्घशः ॥ ८३८ ॥
तत्र ते पृथिवीपाला यथोत्साहं यथाबलम्।
विविशुः शिबिराण्यत्र द्रव्यवन्ति सहस्रशः ॥ ८३९ ॥
तेषां दुर्योधनो राजा ससैन्यानां महात्मनाम्।
व्यादिदेश सवाह्यानां भक्ष्यभोज्यमनुत्तमम् ॥ ८४० ॥
सनागाश्वमनुष्याणां ये च शिल्पोपजीविनः।
ये चान्येऽनुगतास्तत्र सूतमागधवन्दिनः ॥ ८४१ ॥
वणिजो गणिकाश्चारा ये चैव प्रेक्षका जनाः।
सर्वांस्तान्कौरवो राजा विधिवत्प्रत्यवेक्षत ॥ ८४२ ॥
(अ.१९६) तथैव राजा कौन्तेयो धर्मपुत्रो युधिष्ठिरः।
धृष्टद्युम्नमुखान्वीरांश्चोदयामास भारत ॥ ८४३ ॥
तेषां युधिष्ठिरो राजा ससैन्यानां महात्मनाम्।
व्यादिदेश सवाह्यानां भक्ष्यभोज्यमनुत्तमम्।
सगजाश्वमनुष्याणां ये च शिल्पोपजीविनः ॥ ८४४ ॥

## उपकथा १ प्रह्लादस्य सत्यनिष्ठा

विदुर— स्वयंवरे स्थिता कन्या केशिनी नाम नामतः।
(अ.३५) विरोचनोऽथ दैतेयस्तदा तत्राजगाम ह ॥ १ ॥

अथाजगाम तं देशं सुधन्वा राजसत्तम।
विरोचनो यत्र विभो केशिन्या सहितः स्थितः ॥ २ ॥
समागतं द्विजं दृष्ट्वा केशिनी भरतर्षभ।
प्रत्युत्थायासनं तस्मै पाद्यमर्घ्यं ददौ पुनः ॥ ३ ॥
सुधन्वा– अन्वालभे हिरण्मयं प्राह्लादे ते वरासनम्।
एकत्वमुपसम्पन्नो न त्वासेऽहं त्वया सह ॥ ४ ॥
विरोचन– तवार्हते तु फलकं कूर्चं वाऽप्यथवा बृसी।
सुधन्वन्न त्वमर्होऽसि मया सह समासनम् ॥ ५ ॥
सुधन्वा– पिता हि ते समासीनमुपासीतैव मामधः।
बालः सुखैधितो गेहे न त्वं किञ्चन बुध्यसे ॥ ६ ॥
विरोचन– हिरण्यं च गवाश्वं च यद्वित्तमसुरेषु नः।
सुधन्वन्विपणे तेन प्रश्नं पृच्छाव ये विदुः ॥ ७ ॥
सुधन्वा– हिरण्यं च गवाश्वं च तवैवाऽस्तु विरोचन।
प्राणयोस्तु पणं कृत्वा प्रश्नं पृच्छाव ये विदुः ॥ ८ ॥
विरोचन– आवां कुत्र गमिष्यावः प्राणयोर्विपणे कृते।
न तु देवेष्वहं स्थाता न मनुष्येषु कर्हिचित् ॥ ९ ॥
सुधन्वा– पितरं ते गमिष्यावः प्राणयोर्विपणे कृते।
पुत्रस्यापि स हेतोर्हि प्रह्लादो नानृतं वदेत् ॥ १० ॥
एवं कृतपणौ क्रुद्धौ तत्राभिजग्मतुस्तदा।
विरोचनसुधन्वानौ प्रह्लादो यत्र तिष्ठति ॥ ११ ॥
प्रह्लाद– किं वै सहैवं चरथो न पुरा चरथः सह।
विरोचनैतत्पृच्छामि किं ते सख्यं सुधन्वना ॥ १२ ॥
विरोचन– न मे सुधन्वना सख्यं प्राणयोर्विपणावहे।
प्रह्लाद तत्त्वं पृच्छामि मा प्रश्नमनृतं वदेः ॥ १३ ॥
सुधन्वा– प्रह्लाद त्वं तु मे तथ्यं प्रश्नं प्रब्रूहि पृच्छतः।
किं ब्राह्मणाः स्विच्छ्रेयांस उताहोस्विद्विरोचनः ॥ १४ ॥

नगरे प्रतिरुद्धः सन्बहिर्द्वारे बुभुक्षितः।
अमित्रान्भूयसः पश्येद्यः साक्ष्यमनृतं वदेत् ॥ १५ ॥

प्रह्लाद– मत्तः श्रेयानङ्गिरा वै सुधन्वा त्वद्विरोचन ।
मातास्य श्रेयसी मातुस्तस्मात्त्वं तेन वै जितः।
विरोचन सुधन्वाऽयं प्राणानामीश्वरस्तव ॥ १६ ॥

सुधन्वा– यद्धर्ममवृणीथास्त्वं न कामादनृतं वदीः।
पुनर्ददामि ते पुत्रं तस्मात्प्रह्लाद दुर्लभम् ॥ १७ ॥ ८६१ ॥

## उपकथा २ वैडालव्रतम्

(अ.१६०) यस्य धर्मध्वजो नित्यं सुरा ध्वज इवोच्छ्रितः।
प्रच्छन्नानि च पापानि वैडालं नाम तद्व्रतम् ॥ १ ॥
अत्र ते वर्तयिष्यामि आख्यानमिदमुत्तमम्।
मार्जारः किल दुष्टात्मा निश्चेष्टः सर्वकर्मसु ॥ २ ॥
ऊर्ध्वबाहुः स्थितो राजन्गङ्गातीरे कदाचन।
स वै कृत्वा मनःशुद्धिं प्रत्ययार्थं शरीरिणाम् ॥ ३ ॥
करोमि धर्ममित्याह सर्वानेव शरीरिणः।
तस्य कालेन महता विश्रम्भं जग्मुरण्डजाः ॥ ४ ॥
समेत्य च प्रशंसन्ति मार्जारं तं विशाम्पते।
पूज्यमानस्तु तैः सर्वैः पक्षिभिः पक्षिभोजनः ॥ ५ ॥
आत्मकार्यं कृतं मेने चर्यायाश्च कृतं फलम्।
अथ दीर्घस्य कालस्य तं देशं मूषिका ययुः ॥ ६ ॥
ददृशुस्तं च ते तत्र धार्मिकं व्रतचारिणम्।
उपगम्य तु ते सर्वे बिडालमिदमब्रुवन् ॥ ७ ॥
भवत्प्रसादादिच्छामश्चर्तुं चैव यथासुखम्।
भवान्धर्मपरो नित्यं भवान्धर्मे व्यवस्थितः ॥ ८ ॥

स नो रक्ष महाप्राज्ञ त्रिदशानिव वज्रभृत् ।
एवमुक्तस्तु तैः सर्वैर्मूषिकैः स विशाम्पते ॥ ९ ॥
प्रत्युवाच ततः सर्वान्मूषिकान्मूषिकान्तकृत् ।
द्वयोर्योगं न पश्यामि तपसो रक्षणस्य च ॥ १० ॥
अवश्यं तु मया कार्यं वचनं भवतां हितम् ।
तपसाऽस्मि परिश्रान्तो दृढं नियममास्थितः ॥ ११ ॥
न चापि गमने शक्तिं कांचित्पश्यामि चिन्तयन् ।
सोऽस्मि नेयः सदा ताता नदीकूलमितः परम् ॥ १२ ॥
तथेति तं प्रतिज्ञाय मूषिका भरतर्षभ ।
वृद्धबालमथो सर्वं मार्जाराय न्यवेदयन् ॥ १३ ॥
ततः स पापो दुष्टात्मा मूषिकानथ भक्षयन् ।
पीवरश्च सुवर्णश्च दृढबन्धश्च जायते ॥ १४ ॥
तत्र वृद्धतमः कश्चित्कोलिको नाम मूषिकः ।
अब्रवीद्वचनं राजञ्ज्ञातिमध्ये यथातथम् ॥ १५ ॥
न मातुलो धर्मकामश्छद्ममात्रं कृता शिखा ।
न मूलफलभक्षस्य विष्ठा भवति लोमशा ॥ १६ ॥
अस्य गात्राणि वर्धन्ते गणश्च परिहीयते ।
एतच्छ्रुत्वा वचः सर्वे मूषिका विप्रदुद्रुवुः ।
बिडालोऽपि स दुष्टात्मा जगामैव यथागतम् ॥ १७ ॥८७८॥

आदितः श्लोकाः ॥ ४९९५ ॥

इति श्रीमहाभारतसारे उद्योगपर्व समाप्तम् ।

# महाभारतसारशब्दार्थसङ्ग्रहः

अक्षः–पाशः ( द्यूतस्य )
अक्षः–चक्रद्वयसन्धानकाष्ठम्
अक्षकुशलः–द्यूतनिपुणः
अक्षज्ञः–द्यूतनिपुणः
अक्षहृदयम्–द्यूतविद्या
अक्षातिवापः–द्यूतकर्ता
*अक्षौहिणी–सैन्यसङ्ख्याविशेषः
अखिलः–सर्वः, पूर्णः
अगदः–औषधम्
अगस्त्यः–ऋषेर्नाम
अ(आ)गारम्–गृहम्
अगोपाः–गोपरहिताः
अग्रजः–प्रथमजातः, ज्येष्ठः
अग्र्यः–प्रथमः, श्रेष्ठः
अग्र्यम्–प्रथमजातम्
अघातयिथाः–वध कृतवान्
अङ्गम्–शरीरम्
अङ्गः–देशविशेषः
अचक्षुः–अन्धः
अचरम्–स्थावरम्
अचलः–पर्वतः
अचेता.–मूढः

अच्युतः–कृष्णः, विष्णुः
अजः–ब्रह्मा, ब्रह्मदेवः
अजगर.–महासर्पः
अजस्रम्–सन्ततम्
अजातशत्रु.–युधिष्ठिरः
अजिनम्–व्याघ्रादिचर्म
अजिरम्–अङ्गनम्
अञ्जनम्–कज्जलम्
अञ्जसा–वेगेन, तत्त्वतः
अटनम्–हिण्डनम्
अणुः–सूक्ष्मः
अण्डज.–पक्षी
अतिक्रम –उल्लङ्घनम्
अतिक्रान्तः–गतः, नष्टः
अतिमात्रम्–अत्यन्तम्
अतिरक्त.–आसक्तः
अतिवादः–निन्दावचनम्
अतिवाद.–वेदप्रामाण्यम्
अतिवेलम्–अतिशयम्
अतिशयः–आधिक्यम्
अतिसर्गः–दानम्
अतीयु –अतिक्रान्ताः

* १ रथः १ गज. ३ अश्वाः ५ पदातयः—पत्तिः, ३ पत्तयः–सेनामुखम्, ३ सेनामुखानि–गुल्मः, ३ गुल्माः–गणः, ३ गणा –वाहिनी, ३ वाहिन्यः–पृतना, ३ पृतना.–चमूः, ३ चम्वः–अनीकिनी, १० अनीकिन्यः–अक्षौहिणी. अक्षौहिणी–२१८७० रथाः, २१८७० गजा., ६५६१० अश्वाः, १,०९,३५० पदातयः.

अत्ययः—नाशः
अत्यागः—अति+आगः
अथो—अथ, अनन्तरम्
अदितिः—कश्यपपत्नी, देवमाता
अदेशः—अयोग्यस्थलम्
अद्यप्रभृति—अद्यारभ्य
अधरः—ओष्ठः
अधिगमनम्—ज्ञानम्
अधिपः—स्वामी, राजा
अधिरथः—कर्णस्य पिता
अधीत्य—अध्ययन कृत्वा
अधीयताम्—विचार्यताम्
अध्यर्धकायः—उपरितन शरीरार्धम्
अध्यर्ध शतम्—सार्धशतम् १५०
अध्यास्ते—उपविशति
अध्वगः—पान्थः
अध्वा—मार्गः, पन्थाः
अनघः—निष्पापः
अनङ्गः—मदनः
अनन्तः—विष्णुः, आकाशः
अनन्तरम्—शीघ्रम्
अनयः—अनीतिः, विपत्तिः
अनलः—अग्निः
अनवद्यः—निर्दोषः, अनिन्द्यः
अनागसम्—अपराधरहितम्
अनाधृष्यः—जेतुमशक्यः
अनानम्यम्—नमयितुमशक्यम्
अनामयः—दुःखरहितः
अनामयम्—आरोग्यम्
अनायुधः—शस्त्रहीनः
अनार्यः—नीचः
अनावृतः—अनिरुद्धः
अनिलः—वायुः
अनिलसारथिः—अग्निः
अनिलोढम्—वायुना आनीतम्
अनिशम्—सततम्
अनीकम्—सैन्यम्
अनीकिनी—सेना
अनीशः—परतन्त्रः
अनीहः—निश्चेष्टः
अनु—पश्चात्
अनुकीर्णम्—व्याप्तम्
अनुक्रोशः—दया
अनुचरः—सेवकः
अनुचितः—अनभ्यस्तः, अपरिचितः
अनुज —कनीयान् भ्राता
अनुज्ञा—अनुमतिः
अनुज्ञाय—पृष्ट्वा
अनुध्यानम्—स्मरणम्
अनुनयः—सान्त्वनम्, विनतिः
अनुबन्धः—परिणामः, परिवारः
अनुमतिः—सम्मतिः
अनुयात्रः—सेवकः
अनुरूपः—योग्यः, तुल्यः
अनुवाकः—वेदपठनम्
अनुव्रतः—अनुकूलः

अनृतम्–असत्यम्
अन्तः–समाप्तिः, नाशः, मध्ये
अन्तःपुरम्–स्त्रीणां निवासगृहम्
अन्तरधीयत–अदर्शनं गतः
अन्तरम्–तात्पर्यम्, भेदः, छिद्रम्
अन्तरम्–अवधिः
अन्तरिक्षम्–आकाशः
अन्तरेण–मध्यतः, विना
अन्तरैषणम्–छिद्रान्वेषणम्
अन्तर्धानम्–गुप्तता
अन्तिकम्–समीपम्
अन्यतमः–बहुषु एकः
अन्योन्यम्–परस्परम्
अन्वयायः–वंशः
अन्वशासत्–आज्ञापितवान्
अन्वितः–युक्तः
अन्विष्यामि–अनुगमिष्यामि
अन्वेषणम्–मार्गणम्, गवेषणम्
अपकर्षः–दूरीकरणम्
अपचयः–क्षयः, नाशः
अपचारः–दोषः, दुराचरणम्
अपज्वरः–दुःखरहितः
अपत्यम्–सन्ततिः
अपत्रपा–लज्जा
अपदेशः–मिषम्, निमित्तम्
अपध्यातः–शप्तः
अपवर्गः–मोक्षः, समाप्तिः, दानम्
अपविद्धः–इतस्ततो विशीर्णः

अपसदः–अधमः
अपस्वरः–विकलवर्णः
अपहः–नाशकः
अपहाय–त्यक्त्वा
अपाकीर्णः–त्यक्तः
अपाङ्गः–नेत्रकोणः
अपांपतिः–वरुणः
अपारयन्–अशक्नुवन्
अपावर्तत–परावृत्तः
अपावृतम्–अनावृतम्
अपि–प्रश्नार्थकम्
अपिंषत्–पिष्टं कृतवान्
अपुंस्त्वम्–क्लीबत्वम्
अपोह्य–दूरीकृत्य
अप्रजः–सन्तानहीनः
अप्रतिष्ठः–निर्णयशून्यः
अप्रमत्तः–दक्षः
अप्राप्तव्यवहाराः–अप्रौढाः
अब्जम्–कमलम्
अब्जसम्भवः–ब्रह्मा
अब्दः–वर्षम्, मेघः
अभवः–अपकर्षः
अभिगृध्नः–इच्छुः
अभिचारः–वशीकरणादिः
अभिजनः–कुलम्
अभितः–समीपे
अभिनिवेशः–निश्चयः
अभिपद्य–स्वीकृत्य

अभिपन्नः–अपराधी, गतः
अभिप्रायः–आशयः, इच्छा
अभिमतम्–इष्टम्
अभिरूपः–सुन्दरः
अभिलषितम्–इष्टम्
अभिवाद्य–प्रणम्य
अभिशापः–अभियोगः, निन्दा
अभिषङ्गः–आवेशः
अभिषेकः–स्नानम्
अभिष्टौषि–स्तुतिं करोषि
अभीक्ष्णम्–सततम्, वारंवारम्
अभ्यचोदयत्–पृष्टवान्
अभ्यसूया–निन्दा, क्रोधः
अभ्युत्समयित्वा–प्रोत्साह्य
अभ्युदयः–उत्कर्षः
अमर्षितः–क्रोधयुक्तः
अमा–सह
अमात्यः–मन्त्री, सहवासी
अमानुषः–अलौकिकः
अमित्रः–शत्रुः
अम्बरम्–आकाशः, वस्त्रम्
अम्बु–जलम्
अम्बुजम्–कमलम्
अम्भः–जलम्
अयच्छत्–ददुः
अयशः–अपकीर्तिः
अयस्मयः–लोहमयः
अयुतम्–दशसहस्राणि
अरणिः–अग्निमन्थनकाष्ठम्
अरत्निः–कूर्परः, हस्तः
अरिः–शत्रुः
अरिष्टम्–निर्विघ्नम्
अरुणः–ईषद्रक्तवर्णः, सूर्यसारथिः
अर्कः–सूर्यः, वृक्षविशेषः
अर्घः–पूजा, मूल्यम्
अर्चा–पूजा, सम्मानः
अर्चिः–प्रकाशः, तेजः, ज्वाला
अर्च्यः–पूज्यः
अर्जितम्–सम्पादितम्
अर्णवः–समुद्रः
अर्थः–हितम्, प्रयोजनम्, धनम्
अर्थः–इच्छा, कार्यम्
अर्थवर्गः–धनकोशः
अर्थिन्–इच्छन्, याचकः
अर्बुदम्–दशकोट्यः
अर्वाक्–पूर्वम्
अर्हः–योग्यः, मूल्यम्
अर्हणम्–उपायनम्
अर्हणा–पूजा
अर्हणीयः–पूज्यः, सत्कारार्हः
अलक्षितः–अदृष्टः
अलम्–निषेधार्थकम्, समर्थः
अलातम्–दीप्तकाष्ठम्
अलीकम्–अप्रियम्, दुःखम्
अवकीर्य–परित्यज्य
अवगाढाः–पराभूताः

अवगाहनम्–स्नानम्, प्रवेशः
अवग्रहः–प्रतिबन्धः
अवटः–गर्तः
अवतिष्ठेत–स्थिरा भवेत्
अवतंसः–अलंकारः
अवदातः–उज्ज्वलः
अवधार्य–विचार्य
अवनामी–नम्रः
अवपद्यन्त–अनुमोदितवन्तः
अवभृथः–यज्ञसमाप्तिस्नानम्
अवरः–कनिष्ठः
अवलिप्तः–गर्वयुक्तः
अवलेपः–गर्वः
अवशः–परतन्त्रः
अवसादः–क्लेशः
अवसानम्–वसतिस्थानम्
अवसीदेत्–नश्येत्
अवहर–अवतारय
अवहितः–सावधानः
अवाक्–मौनमाश्रितः
अवाङ्मुखः–अधोमुखः
अवाचीनम्–विपरीतम्
अविः–मेषः
अविन्दत–प्राप्तवान्
अवेक्षा–व्यवस्था, आदरः
अशनम्–भक्षणम्, अन्नम्
अशनिः–विद्युत्, वज्रम्
अशरीरिणी वाक्–आकाशवाणी
अशेषः–संपूर्णः
अश्मन्–पाषाणः
अश्वशिरः–अश्वविद्या
अश्वसेनः–तक्षकपुत्रः
अश्वहृदयम्–हयपरीक्षा
अश्विनौ–नासत्यौ
अष्टशतसाहस्रः–८,००,०००
असकृत्–अनेकवारम्
असत्–मिथ्या, अयोग्यम्
असती–व्यभिचारिणी
असमञ्जा.–सगरपुत्रः
असाम्प्रतम्–अयुक्तम्, विपरीतम्
असितः–कृष्णवर्णः
असुधर्मः–प्राणधारणम्
असुरम्–सुरारहितम्
असुराः–दैत्याः, दानवाः
असूया–मत्सरः
अस्रम्–नेत्रजलम्, अश्रु
अस्तम्–गृहम्
अहः–दिवसः
अहनि–दिवसे
अहार्यः–स्वाभाविकः
अंशः–भागः, अवयवः
अंशुः–किरणः
अंसः–स्कन्धः
आकरः–खनिः, स्थानम्
आकलितः–आक्रान्तः
आकीर्णः–व्याप्तः, पूर्णः

आक्रन्दः—कलकलशब्दः
आक्रीडः—क्रीडा, क्रीडोद्यानम्
आक्रीडः—क्रीडास्थानम्
आक्रोशः—रूक्षभाषणम्
आक्षिप्य—तिरस्कृत्य
आखुः—मूषकः
आख्या—नाम
आख्यातम्—कथितम्
आगः—अपराधः
आगमः—आयः, आगमनम्
आग्नेयः—ज्वालाग्राही
आचक्ष्व—कथय
आचख्यौ—उक्तवान्
आचचक्षे—कथयामास
आच्छिनत्—छेदितवान्
आचष्ट—कथयामास
आजमीढः—अजमीढवंशजः
आजानेयः—उत्तमजातिः (अश्वः)
आजिः—युद्धम्, रणभूमिः
आढ्यः—धीमान्, युक्तः
आतपः—उष्णम्
आतिथ्यम्—अतिथिसत्कारः
आतुरः—पीडितः, रोगी
आत्मजः—पुत्रः
आत्मवान्—जितचित्तः
आत्मसम्भवः—पुत्रः
आत्मा—शरीरम्, स्वभावः, जीवः, मनः

आदानम्—ग्रहणम्
आदित्यः—सूर्यः
आदुन्वस्व—सन्ताप कुरु
आद्यम्—भक्षणीयम्, प्रथमम्
आधिः—विपत्तिः, मनोव्यथा
आधिरथिः—अधिरथपुत्रः (कर्णः)
आनर्तः—सौराष्ट्रदेशः
आनुपूर्व्यम्—क्रमः
आनृण्यम्—ऋणापाकरणम्
आनृशंस्यम्—अवैषम्यम्
आनृशंस्यम्—दया, समता
आपगा—नदी
आपगेयः—भीष्मः
आपणः—पण्यवीथिका
आपद्—विपत्तिः
आपृष्ठतापात्—अपराह्णपर्यन्तम्
आपोदः—अपोदस्य पुत्रः
आप्तः—प्रामाणिकः
आप्तिः—लाभः
आप्यायनम्—वृद्धिः, पुष्टिः
आभरणम्—अलंकारः
आमः—अपक्वः
आमिषम्—मांसम्, लोभनीयम्
आयः—प्राप्तिः
आयतः—दीर्घः
आयतनम्—गृहम्, स्थानम्
आयत्तः—अधीनः
आयुः—आयुष्यम्

आयुधम्–शस्त्रम्
आरणेयम्–अरणीसम्पुटम्
आरात्–समीपम्
आरावः–ध्वनिः
आरिराधयिषुः–आराधनं कर्तुमिच्छुः
आर्जवम्–ऋजुता
आर्जुनिः–अर्जुनपुत्रः
आर्तः–दुःखी, पीडितः
आर्तिः–दुःखम्
आर्या–श्वश्रूः
आर्यकः–मातामहः, पितामहः
आर्षः–ऋषिप्रणीतः
आलम्भः–स्पर्शः
आलयः–गृहम्, स्थानम्
आलोकः–प्रकाशः
आलोडनम्–क्षोभः
आवसथः (थम्)–गृहम्, स्थानम्
आवह–कुरु
आवासः–गृहम्, स्थानम्
आवाहाः–कुलधर्माः
आविदानः–विवादं कुर्वन्
आवृणोत्–आच्छादितवान्
आवृण्वानः–व्याप्तं कुर्वाणः
आवृतम्–आच्छादितम्
आवृत्य–परिवार्य
आशीः–सर्पदंष्ट्रा, आशीर्वादः
आशु–शीघ्रम्
आशुगः–बाणः, शीघ्रगामी
आशसा–आशा, इच्छा, कल्पना
आश्वासनम्–सान्त्वनम्
आससाद–प्राप्तवान्
आसादितः–प्राप्तः
आसुरी–असुरस्त्री, राक्षसी
आस्थाय–आश्रित्य
आस्फोटः–बाहुशब्दः
आस्यम्–मुखम्
आस्रावः–व्रणः
आहर–आनय
आहरणम्–आनयनम्
आहरिष्यामि–करिष्यामि
आहवः–युद्धम्
आहारः–आनयनम्, भक्षणम्
आहुत चाग्निहोत्रम्–अग्निहोत्र-होमोजातः
आहृत्य–आनीय
आह्वयत्–आमन्त्रयामास
इङ्गितम्–अभिप्रायः
इज्या–यज्ञः
इतिकर्तव्यता–कार्यक्रमः
इध्मम्–इन्धनम्, समिधा
इध्मवाहः–अगस्त्यपुत्रः
इन्द्रः–श्रेष्ठः, अधिपः, देवराट्
इन्द्रसेनः–युधिष्ठिरसेवकः
इन्द्राणी–इन्द्रपत्नी
इन्द्रानुजः–विष्णुः
इयेष–इच्छां कृतवान्

इषीका—शलाका
इषुः—बाणः
इषुधिः—निषङ्गः
इष्वासः—धनुः, योद्धा
इह—अत्र, अस्मिन् लोके
ईक्षणम्—नेत्रम्, दर्शनम्
ईप्सितम्—प्राप्तुमिष्टम्
ईयिवान्—गतः
ईयुषाम्—गतानाम्
ईशः—स्वामी, ईश्वरः
ईषा—रथदण्डः
उग्रः—भयङ्करः, श्रेष्ठः
उच्चारः—विष्ठा
उच्चावचम्—नानाविधम्
उच्चैः—उच्चः, अतिशयेन
उच्छ्रयः—उत्सेधः, उच्चता
उज्जहुः—उद्धृतवन्तः
उञ्छः—कणशोऽर्जनम्
उत्कचः—केशहीनः
उत्तमः—श्रेष्ठः
उत्तरः—विराटपुत्रः, श्रेष्ठः
उत्तरा—विराटकन्या
उत्तरीयम्—उपरिवस्त्रम्
उत्थानयुक्तः—यत्नवान्
उत्पत्य—उड्डीय
उत्पथः—उन्मार्गः, कुमार्गः
उत्पातः—अपशकुनम्
उत्सक्तः—उत्कर्षेण व्याप्तः
उत्सङ्गः—अङ्कः
उत्सर्गः—त्यागः, दानम्
उत्सारणम्—दूरीकरणम्
उद्—ऊर्ध्वम्
उद्देशः—स्थानम्
उदधिः—समुद्रः
उदपानम्—कूपः
उदयः—उत्कर्षः, प्राप्तिः
उदारः—श्रेष्ठः, दाता
उदीची—उत्तरदिशा
उदीर्णः—वृद्धिं गतः
उद्यतः—तत्परः, सज्जः
उद्यानम्—उपवनम्
उद्रिक्तः—अधिकः
उद्वहः—श्रेष्ठः
उद्वाहः—विवाहः
उद्विग्नः—भीतः
उद्विजसे—बिभेषि
उद्वृत्तः—दुराचारी
उन्मथ्य—नाशयित्वा
उपकरणम्—साधनम्
उपकृतम्—उपकारः
उपकीचकाः—कीचकभ्रातरः
उपघातः—नाशः, अनिष्टः
उपच्छन्नः—उपागतः
उपजीव्यः—आश्रयः
उपजोषः—इच्छा
उपधिः—कपटम्

उपनिवादः–भेदनम्
उपनिषद्–मन्त्रः, वेदान्तभागः
उपपद्यस्व–गृहाण
उपपन्नम्–युक्तम्
उपप्लुतः–जितः
उपयमनम्–विवाहः
उपयोक्तुम्–भोक्तुम्
उपयस्ये–विवाहं करिष्ये
उपरमः–मृत्युः, विरामः
उपराम–उपरतः
उपरोधः–प्रतिबन्धः
उपस्थानम्–सान्निध्यम्, सभा
उपस्पृश्य–आचम्य
उपस्प्रष्टुम्–स्नानादि कर्तुम्
उपस्वेदः–उष्मा
उपहासः–परिहासः
उपहूतः–आमन्त्रितः
उपाध्यायः–गुरुः
उपान्तः–सान्निध्यम्
उपालम्भः–निन्दा
उपेतः–युक्तः, सहितः
उपोह्यमानम्–उपस्थाप्यमानम्
उप्त्वा–पातयित्वा
उमा–पार्वती
उरगः–सर्पः
उरुः–महान्, विस्तृतः
उर्वी–पृथ्वी
उल्का–दीपिका
उल्बणः–भयङ्करः
उवास–सङ्गं (वासं) कृतवान्
उशनाः–शुक्रः
उष्य–वास कृत्वा
ऊरुः–उत्सङ्गः
ऊर्ध्वरेताः–नैष्ठिक ब्रह्मचारी
ऊर्मिः–तरङ्गः
ऋक्षः–भल्लूकः
ऋषभः–श्रेष्ठः, वृषभः
ऋजुः–सरलः
ऋतम्–कर्मफलम्
ऋते–विना
ऋत्विजः–यज्ञार्थं वृताः ब्राह्मणाः
ऋद्धिः–सम्पत्तिः
एकत्वम्–सख्यम्
एकपत्नी–पतिव्रता
एकपदम्–सर्वात्मना
एकाकी–एकलः
एकाग्रम्–अनन्यग्रम्
एकान्तः–अतिशयः
एकान्तेन–निश्चयेन, नित्यम्
एनः–पातकम्
एहि–आगच्छ
ऐन्द्रम्–इन्द्रदेवताकम्
ऐन्द्रिः–इन्द्रपुत्रः
ओकः–गृहम्, स्थानम्
ओघः–समूहः, प्रवाहः
ओजः–तेजः, बलम्, वेगः

ओम्–अङ्गीकारे
औपयिकः–उचितः
औरसः–शारीरः, सवर्णपत्नीपुत्रः
औरसम्–उत्साहः
और्ध्वदेहिकम्–प्रेतसंस्कारः
कक्षः–बाहुमूलम्, शुष्कतृणम्
कक्षा–द्वारदेशः
कच्चित्–प्रश्नार्थे
कटुकः–कठोरः
कठिनम्–भाण्डम्, कठोरम्
कदनम्–नाशः, युद्धम्
कदम्बः–वृक्षविशेषः
कदर्यः–अदाता, कृपणः
कनीयान्–कनिष्ठः
कन्दरा–गुहा
कन्दर्पः–मदनः
कन्याभावः–कन्यात्वम्
कपाटम्–द्वारम्
कपिः–वानरः
कपिप्रवरः–मारुतिः, हनुमान्
कमण्डलुः–कलशः
करः–हस्तः, राज्ञेदेयधनम्, शुण्डा
करणः–वैश्यात्शूद्रायांजातः
करणोजझे–करण इव जातः
करुणम्–दीनम्
कर्कटः–कर्कः
कर्कटी–कर्कटस्त्री
कर्तनम्–छेदनम्
कर्षकः–कृषीवलः
कलत्रम्–पत्नी
कलशः–समुद्रः, घटः
कला–अंशः, बिन्दुः
कलापः–तूणः
कलिः–कलहः, युद्धम्
कलेवरम्–शरीरम्
कल्पः–पक्षः
कल्पः–किञ्चिन्न्यूनः, समर्थः
कल्यः–सज्जः, दक्षः
कल्याणि–शोभने
कविः–शुक्रः, देवयानीपिता
कशा–प्रतोदः
कश्मलम्–भयम्, पापम्, मूर्च्छा, मोहः
काङ्क्षा–इच्छा
काञ्चनम्–सुवर्णम्, सुवर्णमयम्
कातरः–भीरुः
काननम्–वनम्
कानीनः–कन्यापुत्रः, कन्यागर्भः
कान्यकुब्जः–देशविशेषः
कापुरुषः–कुपुरुषः
कामः–विषयः (शब्दादिः)
कामः–इच्छा, मदनः
कामधुक्–इच्छापूर्तिकृत्
कामम्–यथेष्टम्, सम्मतिदर्शकम्
काम्या–इच्छा
कार्पण्यम्–दैन्यम्
कार्मुकम्–धनुः
कालधर्मः (धर्मन्)–मृत्युः

कृष्णवर्मा—अग्निः
कृष्णा—द्रौपदी
केकयः—देशविशेषः, तद्राजा
केतनम्—ध्वजः, चिन्हम्
केतुः—ध्वजः
केदारः—क्षेत्रम् ( कृषिस्थानम् )
केश-पक्षः (पाशः)—केशसमूहः
केशवः—कृष्णः, विष्णुः
कैकेयी—केकयराजकन्या
कोविदः—कुशलः
कोसलः—देशविशेषः
कौतूहलम्—जिज्ञासा, कौतुकम्
कौन्तेयः—कुन्तीपुत्रः
कौरवः—कुरुवंशोत्पन्नः
कौरव्यः—कौरवः
कौशलम्—कुशलता
कौशल्यम्—कुशलम्, कुशलता
कौशिकः—विश्वामित्रः, इन्द्रः
कौशी—कुशमयी
क्रतुः—यज्ञः
क्रेता—क्रयकर्ता
क्रोष्टुकः—जम्बूकः
क्लमः—श्रमः
क्लान्तः—श्रान्तः
क्लिष्टः—दुःखितः
क्लीबः—नपुंसकः
क्षणः—अवसरः, उत्सवः
क्षतम्—पीडा
क्षत्ता—विदुरः

क्षत्रम्—क्षत्रियजातिः
क्षपणम्—नाशः
क्षपयिष्यन्ति—नाशयिष्यन्ति
क्षपा—रात्रिः
क्षमः—योग्य', समर्थः
क्षयः—गृहम्, नाशः
क्षामः—कृशः
क्षिणोपि—तुदसि
क्षितिः—पृथिवी
क्षिप्रम्—शीघ्रम्
क्षीरम्—दुग्धम्
क्षुध्—क्षुधा
क्षुधितः—क्षुधायुक्तः
क्षेत्रम्—स्त्री
क्षेमम्—हितकरम्, रक्षणम्
क्षोभ्यताम्—मथ्यताम्
क्षस्यन्ते—क्षमाकरिष्यन्ते
खगः—पक्षी
खम्—आकाशः
खचरः—आकाशगामी, गन्धर्वः
खजा—मन्थनदण्डः
खड्गः—असिः
खरः—तीक्ष्णः
खाण्डवप्रस्थम्—खाण्डववनभूमिः
खेचरः—पक्षी, गन्धर्वः, ग्रहः
ख्याति.—प्रसिद्धिः
गगनम्—आकाशः
गगनेचर.—पक्षी
गङ्गाद्वारम्—हरिद्वारम्

